

# संस्कृतकोश.

त्रिकांडशेष, मेदिनी, हारावली व एकाक्षरी.

हें

कोशचतुष्टय

सदाशिव बजाबा शास्त्री अमरापुरकर

यानीं

शुद्ध करून




मुंबईंत


ज्ञानदर्पण छापखान्यांत छापिलें

शके १७७६, आनंद०

सन १८५४

# सूचना.

## त्रिकांडशेष.

हा कोश पूर्वी पुरुषोत्तम नामक पंडित यानी केला, यांत वर्गक्रम, परिभाषा व सर्व नियम अमराप्रमाणेंच आहेत परंतु विशेष हाच कीं अमरांत जे शब्द कमी आहेत ते सर्व निवडून काढून याची रचना केली आहे. याजकरितां हा कोश, एकादा नवीन शब्द पाहण्यास फार उपयोगी पडेल असें जाणून लोकहितार्थ छापिला आहे तर सर्व विद्वज्जनानीं याचा संग्रह अवश्य करावा.

कोणत्या शब्दाचीं किती नावें आहेत हें स्पष्ट समजण्याकरितां त्या शब्दावर अंक घालून पत्राचे खालीं टिपा घातल्या आहेत.

यांत नजर चुकीने किंवा हस्तदोषाने ज्या कांहीं चुका राहिल्या असतील त्यांविषयीं सुज्ञानी क्षमा करावी.

# त्रिकांडशेषस्यअनुक्रमणिका

श्रीगणेशायनमः॥ ॥ अथत्रिकांडशेषकोशःप्रारभ्यते ॥

जयंतिसंतःकुशलंप्रजानांनमोमुनींद्रायस्फराःस्मृताःस्थ॥स्फुता सिवाग्देविदयस्वमातर्विधेहिविघ्नाधिपमंगलानि॥१॥ अलौकिकत्वादमरःस्वकोषेनयानिनामानिसमुल्लिलेख॥ विलोक्यतैरप्यधुनाप्रचारमयंप्रयत्नःपुरुषोत्तमस्य॥२॥ वर्गक्रमस्तथानाम लिंगयोस्तूपदेशता॥ परिभाषादिकंसर्वमत्राप्यमरकोशवत् ३

स्वर्लोकोदेवलोकःस्यादवरोहःफलोदयः॥ मंदरः सैरिभः शक्रभवनंखंदिवंनभः॥४॥ स्वाहाभुजस्क्रवसकृत्याःपूजिताश्चचिरायुषः॥ शोभानिलिंपाद्युषदः स्वर्गिणश्चनभःसदः॥५॥ ऋनामात्वदिति देवमातास्यादथपूर्वजाः॥ पितरश्चंद्रगोलस्थान्यस्तशस्त्राःस्वधाभुजः॥६॥ कव्यबालादयस्तेचदैत्यास्तु प्रघसाः स्वराः॥ क्रतुद्विषश्चेष्टिमुषौदैत्यमातादितिर्दनुः॥७॥बुद्धोकनिष्ठगमहामुनिधर्मचक्रशागाशांतित्रिशरणाःखसमोदशार्हः॥तापीशुणाकरमहास्फुरवज्रिणश्चमैत्रीवलासमजितारिसमंतभद्राः॥८॥ महाबोधिर्धर्मधातुःश्वेतकेतुर्जिनःखजित्॥ त्रिमूर्त्तिर्दशभूमीशःपंचज्ञानोबहुक्षमः॥९॥संबुद्धः करुणाकूर्चःसर्वदर्शीमहाबलः॥ विश्वबोधो धर्मकायःसंगुप्तोऽर्हन्स्तनिश्चितः॥१०॥ व्योमाभोद्वादशाख्यश्चवीतरागःसुभाषितः॥ सर्वार्थसिद्धस्तुमहाश्रमणःकुलिशासनः ॥११॥ गोपेशश्चांथास्ययशोधरेयोबाहुलेःसुतः॥ देवदत्तोऽनुजोथस्युःश्रावकाःशिष्यसंज्ञिनः॥१२॥ प्रत्येकबुद्धाःखड्गास्युःस्रुदांताश्चेकचारिणः॥ स्वयंभुवोऽथमारीचीत्रिमुखावज्रकालिका॥१३

---

स्वर्लोकादिदशस्वर्गस्य॥ ४॥

स्वाहाभुगादिनवदेवानां ५ ऋनामादित्रीणिअदित्याः पूर्वजादिपंचपितृणां ६ कव्यबाले त्येकंपितृभेदस्य दैत्यादिपंच दैत्यमातादित्रीणि ७ बुद्धादिसप्तत्रिंशत् ८ ९ १० सर्वार्थसिद्धादिचत्वारिंशाक्यमुनेः ११ यशोधरेयादिद्वेशाक्यसुतस्यएकंशाक्यभ्रातुः शिष्या-

विकटावज्रवाराहीगौरीपोत्रिरथाचसा॥ लोकनाथस्तुलोकेशःस रोजीगुणसागरः॥१४॥ लोकेश्वरः कृपाद्वैतः सुधावर्षीहलाहलः॥ सुखावतीश्वरःकन्यारामोऽसिताभ्रशेखरः॥१५॥ चिंतामणिःपद्म पाणिर्बहुरूपःखसर्पणः॥ अनीचदर्शीकारंडव्यूहःपोतलकप्रियः ॥१६॥ जटाधरोमहावीर्योवज्रसूर्योऽवलोकितेः॥ तारामहाश्रीरों- काशस्वाहाश्रीश्चमनोरमा॥१७॥ तारिणीचजयाऽनंताशिवालोके श्वरात्मजा॥खदूरवासिनीभद्रावेश्यानीलसरस्वती॥१८॥ शंखि- नीचमहातारावसुधाराधनंददा॥ त्रिलोचनालोचनौस्थान्मणिभद्र स्तुजंभलः॥१९॥ पूर्वयक्षोजलेंद्रोऽथमंजुश्रीर्ज्ञानदर्पणः॥ मंजुभद्रो मंजुघोषःकुमारोष्टारचक्रवान्॥२०॥ स्थिरचक्रोवज्रधरःप्रज्ञाका यश्चवादिराट्॥ नीलोत्पलीमहाराजोनीलःशार्दूलवाहनः॥२१॥ धि यांपतिःपूर्वजिनःखड्गीदंडीविभूषणः॥ बालव्रतःपंचवीरःसिंहकेलिः शिखाधरः॥२२॥ वागीश्वरोऽथहेरंबोहेरुकश्चक्रसंवरः॥ देवोवज्र कपालीचनिशंभःशशिशेखरः॥२३॥ वज्ररीकोऽथमैत्रेयोयुवराजो जितश्चसः॥ चीवरीश्रमणोभिक्षुर्वल्यश्चैत्रोऽथचेलुकः॥२४॥ श्राम णेरःप्रव्रजितोमहापासकगामिनौ॥ अथहंसरथोब्रह्माविरिंचोष्ठ श्रवाःसनत्॥२५॥ कंजःप्राणश्चवेदीशावेदगर्भपुराणगाः॥ अब्जजो विश्वरेताश्चकमलःप्रपितामहः॥२६॥ नाभिजन्माशतधृतिर्ब्रा- ह्मीतुब्रह्मकन्यका॥ वाग्देवीशारदाशुक्लामहाश्वेतासरस्वती॥२७

---

णामेकं१२ मारीचादिसप्तमायादेव्याः १३ लोकनाथादित्रयोविंशतिर्बुद्धभेदस्य१४ १५।१६ तारादीन्येकविंशतिः १७।१८ मणिभद्रादिचत्वारिपूर्वयक्षस्य१९मंजुश्री- त्यादिपंचविंशतिः पूर्वजिनस्य २०।२१।२२ हेरंबाद्यष्टौवज्ररीकस्य २३ मैत्रेयादि- त्रीणिभाविबुद्धस्य चीवर्यादिपंचबुद्धभिक्षुकस्य चेलुकादिपंचभिक्षुशिष्य- स्य२४ हंसरथादिसप्तदशब्रह्मणः २५।२६॥ ब्राह्म्यादिसप्तसरस्वत्याः २७ ॥

अथहरिशतबिंदुश्रीकरश्रीवराहाजितपरपुरुषश्रीगर्भषड्विंदुनं
ताः॥नरकजिद्दत्तधामाकेशवोजन्मकीलः क्रतुपुरुषनृसिंहश्चन्य
थजकृच्चदेवाः॥ २८॥ कोकःपुराणपुरुषोनलिनेशयश्चवासुर्नरा
यणपुनर्वसुविश्वरूपाः॥अःश्रीनिवासधरणीधरवामनेकशृंगा
श्चवृष्णिवृषशत्रुदशावताराः॥ २९॥ सोमगर्भादिदेवादिवराहस्व
र्णबिंदवः॥ गदाग्रजोमुंजकेशीसदायोगीसनातनः॥ ३०॥ रंतिदेव
शिवकीर्तनौत्रिपात्सोमसिंधुरपराहुमूर्द्धभित्॥ कालनेमियवनारि
पांडवाभीलसिंधुवृषकृष्णकेशिनः॥ ३१॥ हेमशंखः शतावर्तीमनु
सात्वतवारिशाः॥ वर्धमानःशतानंदोजगन्नाथःस्कयामुनः॥ ३२॥ पू
तनाधेनुकारिष्टकेशिचाणूरसूदनः॥ भूकश्यपस्त्वस्यपितादुंदुःक्षि
त्यदितिःप्रसूः॥ ३३॥ स्यंदनस्तुशतानंदः सारथिश्चास्यदारुकः॥तु
रंगाःशैव्यसुग्रीवमेघपुष्पबलाहकाः॥ ३४॥ ध्वजोभुजंगहामंत्रीपव
नव्याधिरुद्धवः॥ शैनेयस्तुशिनेर्नप्तायुयुधानश्चसात्यकिः॥ ३५॥
बलभद्रस्तुहालःस्यात्सौनंदीहलतालभृत्॥ संवर्त्तकोगुप्तचरोरु
क्मिदार्यैककुंडलः॥ ३६॥ मधुप्रियोथप्रद्युम्नोजराभीरुश्शामांतकः
प्रसूनासमपंचेषुःकंजनोमधुसारथिः॥ ३७॥ रागरज्जुःकलाकेलि
मधुदीपरवीषवः॥ इःकंतुर्मकरांकःसंकल्पभवोंगजश्चरूपास्त्रः
॥रणरणकोरतिरमणः संसारगुरुर्मनोजन्मा॥ ३८॥ कार्ष्णिश्चास्य
प्रियारागलताकेलिकलावती॥ सेःकेनतीचास्यबाणामोहनोन्मा

---

हर्यादीनिषट्षष्टिर्विष्णोः २८ २९ ३० ३१ ३२ द्वेविष्णोःपितुः एकंविष्णोःमातुः॥३३
रथस्यैकं सारथेरेकं शैव्यादिचत्वारिरथतुरगाणांपृथगेकैकस्य ३४ ध्वजस्यैकं
पवनव्याध्यादिद्वेमंत्रिणः शैनेयादिचत्वारिसात्यकेः ३५ बलभद्रादिदशबलदे-
वस्य ३६ प्रद्युम्नाद्येकविंशतिः कामदेवस्य ३७ ३८ रागलतादिचत्वारिरतेः

दनेस्तथा॥३९॥ संतापनः शोषणश्च निश्चेष्टाकरणोऽपिच॥ रुतोऽनिरुद्धः स्यादिष्यकेतुः प्रीतिवृषःरुतः॥४०॥ श्रीश्चलक्ष्मीश्चलासा मा रमा जलधिजेंदिरा॥ मणिः स्यमंतको हस्ते विष्णोरुरसि कौस्तुभः॥४१॥ तार्क्ष्यः शिलीकाः कामायुररुणावरजश्चिरात्॥ पक्षिसिंह उन्नतीशो वृज्रतुंडः सुधाहरः॥४२॥ स्वर्णपक्षस्सुमुखसूः शाल्मली भुजगाशनः॥ शंभुर्भगालीकपिशांजनश्च हीरः कदपुर्भरुरेरिहाणो॥ पुराशिपंचाननभैरवाट्टहाससप्रहासाश्च रवकुंतलश्च॥४३॥ कंठेकालजयंतगुह्यगुरवो जोटिंगगोपालको पिंगाक्षः कठमर्दरैवतजटाटंकाव्यया कूटरुत्॥ चंद्रापीडमहानटौ च वशमिरोहः शैलधन्वा जटाचीरोऽथर्वणनंदिवर्धनगुडाकेशोग्रकालंजराः॥४४॥ मिहिराणो जगद्योनिः संकटीकोऽजवाहनः॥ रुष्करो वरवृद्धश्च रुप्रसादो द्भुतस्वनः॥४५॥ उः स्थाणुः शिपिविष्टश्च मः कीलो धर्मवाहनः॥ विरूपी विषमत्र्यक्षः संध्यानाटी हुताचनः॥४६॥ एकपाद्धोतिकोमद्रोऽध्वरेतः पांशुचंदनाः॥ अस्थिमाली शिवश्चास्य खट्वांगस्त्वरुखघुणः॥४७॥ अजीगवोजगावश्च वृषो भृंगीरिटिस्त्वसौ॥ भृंगरीटः शलोभृंगी नाडीदेहोऽस्थिविग्रहः॥४८॥ महाकालो महाभीमो महाकायो वृषाणकः॥ द्वाःस्थस्तु नंदीशालंकायनस्तांडवतालिकः॥४९॥ स्यान्नंदिकेश्वरोऽथार्या हिंडी शिखरवासिनी॥ शक्तिः सिंहरथा गीला सिनीवाली वृषहली॥५१॥ सोः कृष्णा पिंगला लंबा शैलेयी गणनायिका॥ कारालिकेकानंशा च शिवदूती यमस्वसा॥५२॥ कोट्टवी बाभ्रवी केटभी कैटभा यादवी कर्बुरी चेश्वरी चेश्व

---

मोहनादिपंच कामबाणानां पृथगेकैकस्य एकैकं ३९ अनिरुद्धादि त्रीणि कामसुतस्य श्र्याद्यष्ट लक्ष्म्याः ४० विष्णोर्हस्तमणेरेकं उरोमणेरेकं ४१ तार्क्ष्यादिचतुर्दश ४२ ४३ शंभ्वादि चतुःषष्टिः शिवस्य ४४ ४५ ४६ शिवखट्वांगस्यैकं ४७ द्वे शिवधनुषः वृषादिद्वे शिववृषभस्य भृंगरीटादीनि षट् भृंगिणः ४८ महाकालादीनि चत्वारि नंद्यादि चत्वारि

हारीकुमारस्कन्दस्वामी द्वादशलोचनः॥ बालचर्यः सिद्धसेनः क्रौंचदारी कुक्कुटध्वजः॥५७॥ देवराजस्तु लेखः कौशिकोऽसन्महाबाहुर्दंतेयदारीवराणोऽद्रिभित्॥ वज्रपाणिर्महेंद्रः सुरग्रामणीर्यामनेमिर्वृषा
नाकनाथो हरिः॥५७॥ प्राचीनबर्हिः खदिरः कपिलाश्वो वरक्रतुः॥
प्राचीपतिस्तपस्तंकः पुलोमारिश्च माहिरः॥५८॥ पृतनाषाट्प्रिया-
त्वस्य चारुधाराशतावरी॥ शचीस्कंतादेवसेनो मातलिस्तु हयंक
षः॥ उच्चैःश्रवाः श्वेनहयो वृषणश्वोऽमरावती॥ वृषभासा सुरपु-
री वनमैंद्रं वृषणवस्क॥६०॥ नंदनं कंदसारं स्यान्मि श्रकावर्णमित्य
पि॥ हस्तिमल्लश्चतुर्दंतो भद्ररेणुर्मदांबरः॥६१॥ श्वेतद्वीपः स्क
दामाथ वज्रोऽस्त्री गिरिकंटकः॥ वज्राशनिर्भिदुर्भिद्रो जंभारि
स्त्रिदशायुधम्॥६२॥ शतधारं शतारं चाप्फोत्थं भिदिरमंबुजम्॥
मार्जारकर्णी चामुंडा कर्णमोटिश्च चर्चिका॥६३॥ विद्याधरः काम
रूपी खेचरस्थिरयौवनः॥ स्पर्शानंदा रतिमदाप्सरसः सुमदाद्मजाः

६४

शिवद्वारस्थस्य आर्यादीनि सप्तत्रिंशत् पार्वत्याः ५१।५२।५३ पार्वतीसिंह-
स्यैकं पार्वतीसख्योः पृथक् द्वे विजयादीनि ५४ वज्रतुंडादीनि नव गणेशस्य
५५ कुमारादीनि षट् कार्तिकेयस्य ५६ देवराजादीनि षट्विंशतिरिंद्रस्य ५७
५८ चारुधरादि त्रीणि इंद्रस्त्रियाः एकं कन्यायाः सारथेरेकं ५९ उच्चैःश्रवसा
दि त्रीण्यश्वस्य अमरावत्यादि त्रीणि पुर्याः वृषणवस्वादि चत्वारि वनस्य ६० हस्ति
मल्लादि षट् गजस्य ६१ वज्रादि द्वादश ६२ मार्जारकर्ण्यादि चत्वारि चामुंडा
याः ६३ विद्याधरादि चत्वारि स्पर्शानंदादि चत्वार्यप्सरसः ६४ ५ ७





देवोद्यानानिवैभ्राजंमिश्रकंसिध्रकारणम् ॥ चैत्ररथंक्नासिक्योयुजोदस्रोगदागदौ ॥६५॥ शफ्रमघासिसधयोंचतिर्जुहूवाणईषिरतुषग्रहाशिराः ॥ छागवाहनस्त्रृदाकुबर्हिषःस्वर्णसस घृतमंत्रदीधितिः ॥६६॥ पर्परीकहसनीमणिपीथासप्तजिह्वसमिधावसितार्चिः ॥ नाचिकेतफ्राजिभारतविश्वप्साःशफ्रचिःपचिसमंतभुजोच ॥६७॥ वडवाग्नौलुसलिलेंधनस्याद्वडवामुखम् ॥ काकध्वजोवाणिजश्चस्कंधाग्निस्तृणकाष्ठधृक् ॥ छागणस्तुकरीषाग्निस्तृणाग्निःस्यात्तुवत्सलः ॥ तुषानलःकुकूलःस्यान्मुर्मुरोथाग्निकुक्कुटे ॥६९॥ संकिलोदहनोल्कास्यादंगारेकोकिलाज्झलौ ॥ धूममंभमरुद्वाहखतमालशिखिध्वजाः ॥७०॥ अग्निवाहस्तरीःस्वाहात्वग्नायीदहनप्रिया ॥ जीवितेशोमयःशीर्णपादश्वमहिषध्वजः ॥७१॥ मंदोस्यकांताधूमोर्णाचित्रगुप्तस्तुलेखकः ॥ भृत्यौचंडमहाचंडौकालीचीतुविचारभूः ॥७२॥ पंजिकाखग्रसंधानीनृचक्षास्तुरवसात्मजः ॥ कीलालपाःपलाशीन्वक्षपाटोनरविषाणः ॥७३॥ संध्याबलोरात्रिमटोहनूषःशमनीषदः ॥ पलाशोविखुरःशंकुःकापिशोयस्तुपिंडकः ॥७४॥ पिशाचोमेघनादस्तुवरुणोवःपरंजयः ॥ दैत्यदेवश्चवातस्तुनभःप्राणोजगद्बलः ॥७५॥ भोगिकांतःकंपलक्ष्मा

---

वैभ्राजे नि चत्वारि देवोद्यानानामैकैकं नासिक्यादिचत्वारिस्वर्वैद्ययोः ६५ शफ्रमादिपंचविंशतिरग्नेः ६६ ६७ वडवाग्न्याद्यष्टौ ६८ छागणादिद्वेकरीषाग्नेः तृणाग्न्यादिद्वे तुषानल्यादिद्वे अग्निकुक्कुटादित्रीण्यग्निकणायाः ६९ अंगारादित्रीणि धूमादिसप्त ७० स्वाहादित्रीण्यग्निस्त्रियःजीवितेशादिपंचयमस्य ७१ एकंयमपत्न्याः एकंयमलेखकस्य यमभृत्ययोःप्रत्येकंद्वेविचारभुवएकं ७२ पंजिकादिद्वेनृचक्षादित्रयोदशयमदूतस्य ७३ कापिशोयादित्रीणि पिशाचस्य ७४ मेघनादादिपंचवरुणस्य वातादिनित्रयोदशवायोः ७५

पश्चधारावनिश्वसः ॥ स्वश्वासाक्षिप णुर्धूलिध्वजः सरयुरंकतिः
॥ ७६ ॥ वातुलोवातगुल्मः स्याच्चरवायुर्निदाघजः ॥ झंझानिलः
प्रावृषिजोवासंतोमलयानिलः ॥ ७७ ॥ श्रीदधनकेलिमनुराट्श्वेतो
दररत्नगर्भनिधिनाथाः ॥ कुनृनुकुहेच्छावसवः पिशाचकीसत्यसं
गरस्त्रिशिराः ॥ ७८ ॥ अस्त्रीपद्मोमहापद्मः शंखोमकरकच्छपौ ॥
मुकुंदकुंदनीलाश्चवर्चोस्युर्निधयोनव ॥ ७९ ॥ सत्तोस्यमायुराजः
स्यात्तथावर्णकविर्निधौ ॥ आसंगिनीचवातालीस्याद्वात्यावातमं
डली ॥ ८० ॥ ॥ इतिस्वर्गवर्गः ॥ ॥ छ
कुनाभिःस्याद्विहायस्कस्खंमरुन्मेघवर्त्मच ॥ अक्षरंचाथपाथोदः
स्वतमालोगदांबरः ॥ ८१ ॥ मदयित्नुर्वायुदारुर्व्योमधूमोनभोगजः
॥ गाडवः कंधरोवानरथोवारिमसिस्त्रियाम् ॥ ८२ ॥ करकास्यात्तुघ
नकोबीजोदकमिराचरम् ॥ मेघास्थिवर्षणांतुस्यात् गोघृतंचपरा
मृतम् ॥ ८३ ॥ सौदाम्नीत्वशनिर्विद्युदणुभावाऽचिरद्युतिः ॥ ८३
लिथिप्रणीर्दर्शविपन्निशामणिस्त्रिनेत्रचूडामणिरत्रिनेत्रभूः ॥
सुधांगमोद्रौमृगपिप्पुपक्षजोदशाश्वसिप्रप्रहणोभिचांदिराः ॥ ८४
छायामृगधरोराजामाःपरिज्ञावलक्षगुः ॥ ८५ ॥ द्विजदाक्षायणी
तुंगीरोहिणीयज्वनांपतिः ॥ उडुपः पर्वधिः कुंदुर्जयंतस्तपसोहरिः ॥ ८६

---

७६ वातुलादिद्वेवातगुल्मस्य निदाघवायोरेकं ७७ श्रीदादिद्वादशकुबेरस्य ७८ पद्मादिनवप्रत्येकमेकैकं निधीनां ७९ मायुराजादित्रीणिकुबेरसूनोः आसंगिन्यादिचत्वारिवातभ्रमेः ८० कुनाभ्यादिषडाकाशस्य पाथोदाद्येकादशमेघस्य ८१ ८२ करकादिसप्त ८३ सौदाम्न्यादिषट्विद्युतः ८३ तिथिप्रण्यादिचतुस्त्रिंशच्चंद्रस्य ८४ ८५ ८६

तारापीडः खचमसो विकसः सिंधुनंदनः ॥ चंद्रिकाचंद्रशालास्यान्नी
हारः खनिशाजलम् ॥ ८७ ॥ शीतंतुशीतलंपत्रहिमंतुहिनदुर्दिन
म् ॥ कुज्झरिर्धूममहिषीरत्तांध्रीचकुहेलिका ॥ ८८ ॥ धूमिकाचन
भोरेणुरथागस्त्याग्निमारुती ॥ सत्याग्निर्वारुणिर्विंध्यकूटोवातापि
सूदनः ॥ ८९ ॥ दीप्ताग्निरौर्वशेयश्चसमुद्रचुलकोस्यतु ॥ प्रियाकोषी
तकीलोपामुद्राख्याचविदर्भजा ॥ ९० ॥ प्राक्फाल्गुनेयस्तत्पथ्या
नुजः पारुष्यगोरथौ ॥ दिदिविर्द्वादशाकरश्चवक्षाः स्फरगुरुर्गुरुः ॥
९१ ॥ शुक्रोमः शतपर्वेशोमघाभूर्भृगुरास्फुजित् ॥ षोडशार्चिर्नवा
र्चिस्तुमंगलः स्वोल्मुकः कुजः ॥ ९२ ॥ बुधोहेमाराजपुत्रएकदेहः प्रह
र्षणः ॥ स्यात्संवार्चिः श्रविष्ठाजश्यामांगोकांगरोधनाः ॥ ९३ ॥ शनैश्च
रोनीलवासामंदश्छायात्मजः शनिः ॥ राहुस्तमग्रहकल्लोलोभ्रपि-
शाचोप्यथाहिकः ॥ ९४ ॥ केतुर्ज्योतीरथस्तस्यान्ग्रहाधारोध्रुव-
श्चसः ॥ नक्षत्रणंसूर्यमुक्तादिगबुधैरंगारिणीस्मृता ॥ ९५ ॥ आस-
न्नास्तमयार्धरिरुच्यतेचोपधूपिना ॥ क्रनीतिर्ध्रुवमातास्यान्मा
तादक्षस्यमारिषा ॥ ९६ ॥ छायापथोदेवपथः सोमधारानभः स
रित् ॥ दिनमणीस्त्वव्यधिषोभानेमिरवरघ्नतः ॥ ९७ ॥ ॥
गभस्तिहस्तांशुधरः खरांशुर्भारविर्भगः ॥ वेदादयः प्रतिदिवाभा-
नुःपीतुस्तमोपहः ॥ ९८ ॥ दिनमणिर्हरिर्हेलिब्रध्नभाकोषभास्तूदरथिख

---

चंद्रिकादिद्वे नीहारादिद्वे ८७ शीतादिद्वे पत्रहिमादिद्वे हिमदुर्दिनस्य कुज्झ
र्यादिषट् कुहेलिकायाः ८८ अगस्त्यादिनव ८९। कोशीनक्यादित्रीण्यग
स्तिपत्न्याः ९० प्राक्फाल्गुनेयादिनवबृहस्पतेः ९१ शुक्रादिसप्तनवार्चि
रादिचत्वारिमंगलस्य ९२ बुधादिदश ९३ शनैश्चरादिपंच राह्वादित्रीणि
अहिकादिद्वेकेतोः ९४ ज्योतीरथादित्रीणिध्रुवस्य सूर्यत्यक्तदिशाएकं ९५ निक
टसूर्यास्तदिशाएकं एकंध्रुवमातुः एकंदक्षमातुः ९६ छायापथादिचत्वारिदेवपथस्य
९७ दिनमणयाद्यष्टत्रिंशद्रवेः ९७ ९८

गपतंगेनाह्यः सप्तसप्तिः ॥ मिहिरमहिरपीथाः कालकृत्पद्मपाणिः खम
णिररुण श्शूरावंशकमानंशकमाली ॥ ९९ ॥ छायास्यात्तपनीमंदजन
नीभूमयीवरी ॥ संज्ञात्तुयमकालिंदीरेवंतमनुदस्रसूः ॥ १०० ॥ त्र
सरेणुर्महावीर्यास्वातिः सूर्यास्रुवर्चला ॥ स्वरेणुर्द्युमयीत्वाष्ट्रीप्रियेत्वे
नेविवस्वतः ॥ १ ॥ अश्मनोरमणोऽनूरुर्जटायुस्त्वरुणात्मजः ॥ ॥
इतिदिग्वर्गः ॥ ॥ कालस्त्वपष्टुर्जोहकोभसंतोभसादि
त्यपि ॥ २ ॥ पीथःपीयुस्तिथश्चाथवास्तोव्युष्टोशकोदिनम् ॥ उषाप्रभा
नेगोसर्गः सायोत्सवोविकालके ॥ ३ ॥ रात्रीरक्षोजननीशार्वरीचक्र
भेदिनीघोरा ॥ श्यामायाम्यादोषातुंगीभौतीशताक्षीच ॥ ४ ॥ वास्त
वोषानिशाख्याचवासतेयीतमानिशो ॥ यस्यांमत्तानिशिश्वानःश्व
निशंश्वनिशाचसा ॥ ५ ॥ निःसंपातोर्धरात्रस्यात्सर्वावसरइत्यपि
उच्चंद्रापररात्रोद्वौदर्शोमामावसीचसा ॥ ६ ॥ भूतःकृष्णाचतुर्दश्यांपौ
र्णम्यांधर्मवासरः ॥ शक्रोत्सवोध्वजोत्थानंशारदीघूतपूर्णिमा ॥ ७
कोजागरःशरत्पर्वःकौमुदीचारम स्त्रियां ॥ यक्षरात्रिस्तुदीपालीचै-
त्रावल्यांमधूत्सवः ॥ ८ ॥ स्रुवसंतःकाममहोवासंतीकर्दमीस्त्रियौ
श्रामस्तुमासोवर्षांशोवत्सरस्तुयुगांशकः ॥ ९ ॥ ऋतुप्रवृत्तिर्मासमा
नःस्यात्कालग्रंथिरुर्वटः ॥ कालप्रभा तंशारदोप्रावृषातुजलार्णवः १०

---

९९ छायादिपंचशनिमातुः संज्ञादिचतुर्दशयममातुः १०१ अश्मनादित्रीण्यरुणस्य
जटाय्वादिद्वे कालाद्यष्ट २ वास्मादिचत्वारिदिनस्य उषादिद्वेप्रभातस्य गोसर्गा
दित्रीणिविकालस्य १०३ रात्र्यादिसप्तदश ४ श्वनिशादिद्वे ५ निःसंपातादित्रीण्य
र्धरात्रस्य उच्चंद्रादिद्वे पररात्रस्य दर्शादित्रीणि ६ एकंकृष्णचतुर्दश्याः पौर्ण
म्यादिद्वे शक्रोत्सवादिद्वे शारद्यादिपंचकोजागरायाः ७ यक्षराज्यादिद्वेदी-
पाल्याः चैत्रावल्यादिषट् ८ श्रामादित्रीणिमासस्य वत्सरादिषड्वर्षस्य ९ का
लप्रभानादिद्वे शरदृतोः प्रावृषादिद्वे वर्षर्तोः १०१

कौमुदः कार्तिको मासः फाल्गुनालस्तु फाल्गुनः ॥ ज्येष्ठामूलीयमिच्छंति मासमाषाढपूर्वजम् ॥ ११ ॥ कृतं सत्ययुगं त्रेता गाग्रायी द्वापरयज्ञियौ ॥ कलिर्झर्झरकः कर्मयुगं धाम तु पातकम् ॥ १२ ॥ शल्यं तूस्तं च कल्कोथ भद्रं मल्लुं शिवं तथा ॥ शं शर्म चाव्ययेथात्मा जीवः पुरुषपुद्गलौ ॥ १३ अंतर्यामीश्वरश्चांतःकरणं तु मनो निगुः ॥ ॥ इति कालवर्गः ॥ ॥ बुद्धिः प्रज्ञा विदा चर्चा धीर्विचारे तु तर्कनिर्णयौ ॥ १४ ॥ गुंजा चर्चार्थसिद्धांतो त्तरपक्षसमाधयः ॥ कृतांतः पूर्वपक्षस्तु चोद्यं गीर्भणितिर्गिरा ॥ १५ ॥ वाचा छंदस्तु निगमः साम्नूक्थं स्वरपत्तनम् ॥ ब्रह्माक्षरं स्यादोंकारः प्रश्नदूती प्रहेलिका ॥ १६ ॥ संज्ञाधिवचनं संज्ञः ह्वतं लक्षणनामनी ॥ व्यपदेशः प्रसिद्धिस्तु टंकारोथ नवस्तवः ॥ १७ ॥ शब्दाभिलापोभिधाऽभिधानं वाचकोध्वनिः ॥ क्वासः कुहरितं चाथ मन्मनो गद्गदध्वनौ ॥ १८ ॥ तूरं तु तूर्यं स्यात्ताड्यमानास्तु पटहादयः ॥ करर्धिः करताली स्याद्ध्वनिनाला तु काहला ॥ १९ ॥ मड्डुको मर्दनो मेंद्रो ढक्का विजयमर्दलः ॥ द्रगडः प्रतिपत्तूर्यं डमरुः स्वत्रं कोणकः ॥ २० ॥ नाली घटी यामनाली दंडढक्का यमेरुका ॥ यामघोषोऽथ ताम्री स्यान्मानरंध्रा विकालिका ॥ २१ ॥ भवरुत्प्रेतपटहो मृत्यु

कौमुदादि द्वे कार्तिकस्य फाल्गुनादि द्वे फाल्गुनस्य ज्येष्ठस्यैकं ११ कृतादि द्वे त्रेतादि द्वे द्वापरादि द्वे कल्यादि त्रीणि पापादि पंच १२ भद्रादि पंच शर्मस्य आत्मादि षट् १३ अंतःकरणादि त्रीणि मनसः बुद्ध्यादि चत्वारि विचारादि पंच १४ सिद्धांतादि चत्वारि पूर्वपक्षादि द्वे प्रश्नस्य गीरादि चत्वारि वचसः १५ छंदसादि द्वे निगमस्य सामादि त्रीणि ब्रह्माक्षरादि द्वे ॐकारस्य द्वौ प्रहेलिकायाः १६ ॥ संज्ञादि षट् नाम्नः प्रसिद्ध्यादि द्वे नवादि द्वे स्तवस्य, शब्दाद्यष्ट ध्वनेः मन्मनादि द्वे गद्गदध्वनेः १८ तूरादि द्वे ताडितपटहादेः करर्ध्यादि द्वे करताल्याः ध्वनिनालादि द्वे काहलायाः १९ मड्डुकादि त्रीणि मृदंगस्य ढक्कादि द्वे विजयढक्कायाः द्रगडादि द्वे डमर्वादि द्वे २० नाल्यादि षट् दंडढक्कायाः ताम्रीत्यादि त्रीणि मानरंध्रायाः २१

भंगुरकेश्वसः ॥ रणतूर्यंतुसंग्रामपटहोभयडिंडिमः ॥ २२ ॥ भक्त
तूर्यंन्नृपाभारंमल्लतूर्यंमहास्वनः ॥ मुरववाद्यंवक्रनालेवेणोविवर
नालिका ॥ २३ ॥ वारवाणिःप्रणेतास्याःकथकैकनटौसमौ ॥ सर्व
वेशीलयारंभःस्यात्तालावचरोनटः २४ लयपुत्रीनटीनर्तूःख-
ड्गधारादिनर्तके ॥ प्लवकःकेलकःश्वाथभंडःश्वाटुबटुःसमौ
॥ २५ ॥ गायनेगाथकःस्त्रीणांहल्लीषंसहनर्तनं ॥ वात्सल्यशां
तौतुरसौश्रृंगारःकौशिकःस्मृतः ॥ २६ ॥ संभोगोविप्रलंभश्चतद्भे
दौवर्णिकामसी ॥ मसिर्नाव्यामनंतुस्याद्ध्यामोवज्ञातुपांसनं
॥ २७ ॥ डमरुस्तुचमत्कारःप्रौढिस्तुकियदीहिका ॥ स्वेदःप्रस्रव
णंसिप्रोह्रयोव्रीडोनटांधिका ॥ २८ ॥ भामःक्रोधोनिःशमस्तुशो
केवीर्यंश्चुटीरता ॥ छलंमिषंचवैदग्धीभंगिश्चेभनिमीलिका ॥
॥ २९ स्याच्चिंताचिंतयाथोद्वाहनंरणरणंचनत्व ॥ परिहासःकेलि
मुखःकेलिर्देवननर्मणी ॥ ३० ॥ रोमोद्भेदस्तुपुलकःस्तवकःपुष्पंच
लगंकुरः ॥ स्वदोषगूहनंम्रक्षोरागसंगौतुगृध्नुता ॥ ३१ ॥ काप्य
कारःसयच्चित्तेपापमाधायशंसनं ॥ कौकृत्यंविप्रतीसारोविवा

---

भवरुदादित्रीणिप्रेतपटहस्य रणतूर्यादित्रीणि २२ भक्ततूर्यादिद्वे मल्लतूर्यादिद्वे
मुरववाद्यादिद्वे वेण्वादिद्वे २३ वंशीवादकस्यैकं कथकादिद्वे सर्ववेश्यादिचत्वारिनट
स्य २४ लयपुत्र्यादित्रीणिनट्याः प्लवकादिद्वेनर्तकभेदस्य भांडादिद्वे २५ गायनादि
द्वे हल्लीषादिद्वे स्त्रीसहनर्तनस्य वात्सल्यादिद्वे रसभेदयोः पृथगेकैकस्य श्रृंगारा-
दिद्वे २६ संभोगादिद्वे श्रृंगार भेदयोरेकैकं वर्णिकादित्रीणिमस्याः व्यामनादिद्वे
अवज्ञादिद्वे २७ डमर्वादिद्वे चमत्कारस्य प्रौढ्यादिद्वे स्वेदादित्रीणिव्रीडादिद्वेल-
ज्जायाः २८ भामादिद्वे क्रोधस्य निःशमादिद्वे शोकस्य वीर्यादिद्वे छलादिद्वे वै
दग्ध्यादित्रीणिभंग्याः २९ चिंतादिद्वे उद्वाहनादिद्वे विवाहस्य परिहासादिद्वे केल्या
दित्रीणि ३० रोमोद्भेदादिचत्वारिपुलकस्य स्वदोषगूहनादिद्वे रागादित्रीणिगृध्नुता

थातुविहेठनम् ॥३२॥ दुःखंलोकोभवश्चैवसंसारःकष्टकारकः ॥
निर्वाणमस्तकोमोक्षःशीतीभावःशमोऽमृतम् ॥ ३३॥ ॥
इतिनाट्यवर्गः॥ ॥ ॥अथोऽध्ययंस्यात्पातालेवि
रोकंश्वभ्रमस्त्रियो ॥तमसंतुनिशान्धर्मनीलपंकंरजोबलम्॥
३४॥ दिनांतकोवियद्भूतिःखलुग्वृश्चोथनागभृत् ॥ डुंडुःस्त्रीस्या
दुल्लताजगरोवथहलाहलः॥ ३५॥ ब्रह्मसर्पोऽश्वलालोचद्विमुखा
हिरहीरणिः॥राजोहिरलगर्द्दस्तुकालसर्पोमहाविषः॥ भांडपु-
ष्पस्तुभुजगोभवेत्कौक्कुटिकंदलः॥ गोनासगोनसोहालाहलंहा
लहलंविषं॥ ३७॥ अथाब्भक्षोहिरसनःसमकोलश्चभेकभक्
॥कुंभीनसोमंडलीचगरलंजंगमंविषं॥ ३८॥ अनंतोवासुकिः
पद्मोमहापद्मोपितक्षकः॥कर्कोटःकुलिकःशंखइत्यष्टौनागना-
यकाः॥३९॥ पुरीभोगवतीचैषांभोगिन्योनागकन्यकाः॥ ॥
इतिपातालभोगिवर्गः॥ ॥ ॥अकंदुःखमघंचैंद्रीत्वलक्ष्मीः
कालकर्णिका॥ ४०॥ ॥ इतिनरकवर्गः॥ ॥ ॥
पाथोधिसिंधुमकरालयवारिराशिगंगाधरेंदुजनकाब्धिमिरू
र्मिमाली ॥वार्धिर्मितद्रुतिमिकोषमहाशयाश्चवक्कीबंचशैलशि
बिरंधरणीप्लवश्च ॥ ४१ ॥पुमान्कचंगलोवांकःकूलंकषपरांगवो

सपापकथनस्यैकं कौकृत्यादिद्वेकुकृत्यस्य विबाधादिद्वे ३२ दुःखलोकादि
चत्वारिसंसारस्य निर्वाणादिषट्मोक्षस्य ३३ अधसादिद्वेपातालस्य विरोका
दिद्वेश्वभ्रस्यतमसाद्यष्टांधकारस्य ३४ नागभृदादिद्वे उल्लूतादिद्वेऽजग
रस्यहलाहलादित्रीणि ब्रह्मसर्पस्य ३५ द्विमुखाह्यादित्रीणि अलगर्धादि
त्रीणिकालसर्पस्य ३६ भांडपुष्पादिद्वे हालाहलादित्रीणिविषस्य ३७ अब्
भक्षादिषट्सर्पस्य जांगलविषस्यैकं ३८ अनंताद्यष्टनागराजानांपृथगेकैक
स्यएकैकं ३९ नागपुर्याएकं भोगिन्यादिद्वेनागकन्यानां अकादित्रीणिदुः
खस्य ऐंद्र्यादित्रीणि अलक्ष्म्याः ४० पाथोध्याद्येकविंशतिःसमुद्रस्य ४१

तरंतोदारदःपेरुर्महीप्राचीरमद्वयोः॥ ४२॥ नदीनश्चाथकमलंनीरं-
नाराःस्त्रियामिरा॥ कंदकंजलमस्थायमगाधेथांभसांभ्रमः॥ ४३
तानूरोवायुगुल्मश्चकणलाभःकलंकुरः॥ पुरोदिःपत्रझंकारेवदा-
लःकूलहुंडकः॥ ४४॥ चुलुकोघनजंबालेदलाढ्येपंककर्वटे॥ तर-
णोभेलकेवारिरथोनौस्तरिकःप्लुवः॥ ४५॥ होडस्तराधुर्वहनेवहि-
त्रंवार्वटःपुमान्॥ पादारकःस्यात्सोलिंदःपत्रबालेतुलाधटः॥ ४६॥
समुद्रकफहिंडीरजलहासास्तुफेनके॥ कैवर्तेजालिकःछोटीकुपि-
नीस्याद्थप्लुवः॥ ४७॥ पलवःपंजराखेटःकरंडीतुजलेशयः॥ आत्मा
शीशंबरोमूकोऽनिमेषोवल्कवानपि॥ ४८॥ मीनेवदालःपाठीनोमत्स्य
राजस्तुरोहितः॥ भालांकेश्चाथकुलिशंकंटकाष्ठीलइत्यपि॥ ४९॥
फलकीस्यात्त्रिवत्रफलीराजग्रीवोमदार्मदः॥ कवयीककचपृष्ठोकंकत्रो
टोजलव्यधः॥ ५०॥ शफरःश्वेतकोलःस्यात्खशेटस्तुखलेशयः॥
इल्लिशोवारिकर्पूरगांगेयशफराधिपाः॥ ५१॥ जलतालोप्यथचलत्सू
र्णिमाचंद्रचंचलौ॥ जलवृश्चिकइंचाकेगंगाटेयोगलानिलः॥ ५२॥
शालःशकुलगंडःस्यादंधाहिःकुचिकाद्वयोः॥ ब्राह्मीतुपंकगडकौ

---

४२ कमलादिसप्तजलस्य अस्थायादिद्वेऽगाधस्य अंभसांभ्रमादि ४३४४ चुलु
कादिद्वे घनजंबालस्य दलाढ्यादिद्वे पंककर्वटस्य तरणादिद्वे भेलकस्य वारिर
थादिचत्वारिनौकायाः ४५ होडादित्रीणि वहित्रादिद्वे पादारकादिद्वे पत्रबाला-
दिद्वे ४६ समुद्रकफादिचत्वारिसमुद्रफेनस्य कैवर्तादिचत्वारि प्लुवादित्रीणि
पंजराखेटस्य ४७ करंड्यादिपंचजलेशयस्य अनिमेषादित्रीणिमत्स्यस्य ४८ व
दालादिद्वे मत्स्यराजादित्रीणिरोहितस्य कुलिशादिद्वे ४९ फलक्यादिद्वे राजग्री
वादिद्वेमत्स्यभेदस्य कवय्यादिद्वे कंकत्रोटादिद्वेमत्स्यविशेषस्य ५० शफरादिद्वे
खेटकादिद्वेखलेशयस्य इल्लिशादिपंच ५१ जलसूर्णिमादिद्वे मत्स्यभेदस्य जल
वृश्चिकादिद्वे इंचाकस्य गंगाटेयादिद्वे ५२ शालादिद्वे अंधाह्यादिद्वे ब्राह्म्यादिद्वे पंक
गंडस्य

लघुगर्गस्त्रिकंटकः॥ ५३ ॥ तिर्यग्यानः कुलीरः स्यान्मुखवास्त्रोहीर लोचनः॥ बहिः कुटीचरः पोनाधानं तु स्याज्जलांडकं॥ ५४॥ जलरूपस्तु मकरो मरोलिरसिदंष्ट्रकः॥ मीनरस्तंतुनागस्तु नक्रवाडवहारकः॥ ५५॥ नक्रस्तु वार्भटः स्यादंबुकिराटोंबुकंटकः॥ जलशूकरमायादझषाशनन्हद ग्रहाः॥ ५६॥ जलकूर्मस्त्वंबुकीशो वसाढ्यः शिशुकश्वसः॥ उद्रस्तु जलमार्जारजलाखुनकुलप्लुवाः॥ ५७॥ मृत्किरा घुर्घुरी वारिक्रिमिस्तु जलमक्षिका॥ पटालुका जलौका बुसर्पिणी वेणिवेधिनी॥ व्यंगस्तु नंदको भेको गूढवर्चाः कूनालयः॥ रेकोऽजिव्होथ पंचांगगुप्तः क्रोडांघ्रिकच्छपौ॥ ५९॥ गडुः किंचुलुकोथांधुर्विकिरः स्रूडकश्वसः॥ चुंढा चुंटी च चूडाथांधकूपः कर्करांधुकः॥ ६०
पल्वलं दीर्घिका वापी यष्टिका मीनगंधिका॥ अवघट्टावटौ तुल्यौ तल्लं विल्लं तलं च तल्॥ ६१॥ द्विजप्रपालवालं स्यात्केदारः पांशुमर्दनः॥ नदी निर्झरिणी रोधोवक्रा सागरगामिनी॥ ६२॥ नलोद्रा चापि लासिंधुर्ऋषिकुल्या वहा च सा॥ अध्वगा गाधिनी गंगा हैमवत्युग्रशेखरा ६३

---

लघुगर्गादिद्वे त्रिकंटकस्य ५३ तिर्यग्यानादिपंच कुलीरस्य पोनाधानादिद्वे जलांडकस्य ५४ जलरूपादिपंच मकरस्य तंतुनागादित्रीणि ग्राहस्य॥ ५५ नक्रादिचत्वारि जलशूकरादिचत्वारि ५६ जलकूर्मादिचत्वारि शिशुमारस्य उद्रादिपंच ५७ मृत्किरादिद्वे घुर्घुर्याः वारिक्रिम्यादिद्वे पटालुकादिचत्वारि जलौकायाः ५८ व्यंगादिसप्त भेकस्य पंचांगगुप्तादित्रीणि कच्छपस्य ५९ गडुवादिद्वे किंचुलुकस्य अंध्वादिषट् कूपस्य अंधकूपादिद्वे ६० पल्वलादिपंच वाप्याः अवघट्टादिद्वे गर्तस्य तल्लादिपंच आलवालस्य ६१ केदारादिद्वे सेचस्य नद्यादिनव ६२ अध्वगादि सप्त गंगायाः ६३

धर्मद्रवीसिद्धसिंधुस्तापीतुयमुनायमी॥ रेवातुपूर्वगंगास्यात्सुरलातुसुरंदला॥६४॥ स्यादर्धगंगाकावेरीवासिष्ठीगोमतीसमे॥ अथगोदावरीगोलाकुवलंतूत्पलंकुवं॥६५॥ कैरवंगंधसोमंस्यात्कंदोटश्च निशाहसः॥ श्रीकरंकृष्णकंदंचरक्तोत्पलमलिप्रियं ६६॥ लक्ष्मीगृहं कुमुच्चाथशालूकःपंकसूरणः॥ पृश्नीतुकुंभिकावारिमूलीपर्ण्योंखमूलिका॥६७॥ स्याद्वारिचत्वरोंबुतालःसलिलकुंतलः॥ शैवलोहठपर्णीस्त्रीकावारंवारिचामरम् ६८॥ पद्मेकवारंपंकेजोंबिसनाभिस्तुपद्मिनी॥पुटकिन्येवमेवान्याःकुदिन्यम्लानिनीमुखाः॥६९॥ बिसंलुतंतुलबिसंशृंगाटोवारिकुब्जकः॥१७०॥ ॥

इतिवारिवर्गः॥ इतित्रिकांडशेषेप्रथमःकांडः॥ ॥

---

भूर्भूतधात्रीगिरिकर्णिकाब्धिद्वीपासमुद्रांबरमेखलाकूः॥ क्ष्मादिकीलाचजगद्वहाचपुंसिस्थितोमध्यमलोकमर्त्यौ॥१॥ महाकांतागंधवतीरत्नगर्भाचमेदिनी॥ खस्तनीभारताख्यंतुवर्षंहैमवतंविदुः॥२॥ भारतंनरभूःकिंपुरुषंहरिवर्षंततः॥ भद्राश्वमुत्तरकुरुर्हिरण्मयंमिलावृतं॥३॥ केतुमालंमभूनिस्युर्भुवोवर्षाणिवैनव॥ जंबुप्लक्षकुशक्रौंचशाकशाल्मलिपुष्करैः॥४॥ द्वीपाःसप्ताथसप्तैवसमुद्रा

---

ताप्यादित्रीणियमुनायाः रेवादिद्वे सुरलादिद्वेनदीभेदस्य ६४ अर्धगंगादिद्वे कावेर्याः वासिष्ठ्यादिद्वेगोमत्याः गोदावर्यादिद्वे कुवलादित्रीण्युत्पलस्य ६५ कैरवादिषट्कुमुदस्य रक्तोत्पलादिचत्वारि६६ शालूकादिद्वे पृश्न्यादिपद्कुंभिकायाः ६७ अंबुतालादिचत्वारिशैवालस्य ६८ पद्मादित्रीणि बिसनाभ्यादित्रीणिपुटकिन्याः॥ कुदिन्यादिद्वेपुटकिनीभेदयोःपृथगेकैकस्य ६९ बिसादित्रीणि शृंगाटकादिनीद्वे १७०॥ ॥इतिवारिवर्गः॥ ॥ षोडशपृथिव्याः १द्वेहिमवत्खंडस्य २ नवभुवोनववर्षाणां ३ सप्तसप्तद्वीपानां ४ सप्तसमुद्राणां॥५॥

अपिकीर्त्तिताः॥ लवणेक्षुसुरासर्पिर्दधिदुग्धजलांतकाः ॥५॥ ऊष
रंतूषवानूषौब्रह्मावर्तस्तपोवटः ॥ कुरुक्षेत्रंप्रयागंच हिमाद्रिंविंध्य
मंतरा॥ ६॥ मध्यदेशोऽथपुंड्राःस्युर्वरेंद्रीगौडनीवृति ॥ प्रभासःसो
मतीर्थंस्यादंनर्वदीकुशस्थली॥७॥ प्राग्ज्योतिषः कामरूपेतीरभुक्ति
स्तुनिच्छविः॥विदेहाश्चाथकाश्मीरेकीराःस्युश्चारुशिल्पिनः॥८॥
तुरुष्काःखशायघृस्कोबाल्हीकाश्चत्रिगर्तकाः॥ दाशेरकामरुभवा
मालवाःस्युरवंतयः॥९॥ डाहलाश्चेदयश्चैद्याःकारूषास्तुबृहद्गृहाः॥
यदवस्तुदशार्हाःस्युःसात्वनाःकुकुराश्चते॥१०॥ ओड्राउत्कलनामानो
मगधाःकीकटामताः ॥ वेलाकूलंतामलिप्तंतामलिप्तीतमालिका॥११
एकचक्रंहरिगृहंशुंभपुर्यथवर्त्तनिः॥पूर्वदेशोऽथसाकेनमयोध्योत्तर
कोशला॥ १२॥कुशस्थलंकान्यकुब्जंनागाह्वंहास्तिनापुरं ॥ गजाह्वं
हास्तिनंचाथआवंतीधर्मपत्तनं॥१३॥ कुरुक्षेत्रंविनशनंकौशाबीव
त्सपत्तनं॥प्राजापत्यःप्रयागःस्यात्द्वारकावनमालिनी॥१४॥ द्वारव
त्यब्धिनगरीविदेहामिथिलेसमे॥ मथुरातुमधूपघ्नीजित्वरीतुतपस्थ
ली॥१५॥ वाराणसीतीर्थराजीविशालोज्जयिनीसमे॥ चंपातुमालि-
नीपुष्पोपुरंपाटलिपुत्रकं॥१६॥देवीकोटोबाणपुरंकोटीवर्षसुषावनं

त्रीण्यूषस्य द्वेब्रह्मावर्तस्य मध्यदेशस्यैकं ६ त्रीणिगौडदेशस्य द्वेप्रभासस्य द्वेनर्वे
द्याः ७ द्वेकामरूपस्य त्रीणितीरभुक्तेः त्रीणि काश्मीरस्य ८ नवदेशभेदानामेकेकं ९
त्रीणिचेदिदेशस्य द्वेकारूषस्य चत्वारिदशार्हस्य १० द्वेओड्रस्य द्वेमगधस्य चत्वारिता
मलिप्तस्य ११ शुंभपुर्यास्त्रीणि द्वेपूर्वदेशस्य त्रीण्ययोध्यायाः १२ द्वेकान्यकुब्जस्य
चत्वारिहस्तिनापुरस्य द्वेधर्मपुर्याः १३ द्वेकुरुक्षेत्रस्य द्वेकौशांब्याः द्वेप्रयागस्य च
त्वारिद्वारकायाः १४ द्वेमिथिलाराजधान्याः द्वेमथुरायाः चत्वारिकाश्याः १५ द्वेउ
ज्जयिन्याः त्रीणिकर्णपुर्याः द्वेपाटलिपुत्रस्य १६ पंचशोणितपुरस्य

हृक्रयारोहौजन्यंग्राममुखंचतत्॥ २०॥ ॥इतिभूमिवर्गः॥ ॥

॥ ॥स्यादभिस्यंदिरमणंशाखानगरमित्यपि॥ शासनंधर्मकीलेस्यान्मकुतिःशूद्रशासनेम्॥२१॥ पट्टोलिकाकूप्तकीलोपांशकूलंनकस्यचित्॥ षड्भिर्यवैःस्यादंगुष्ठएतैर्द्वादशभिर्भवेत्॥२२ वितस्तिःस्यादतोद्वाभ्यांहस्तःस्यात्तच्चतुष्टयम्॥ दंडोधन्वंतरंतस्यसहस्रद्वितयेननु॥ २३॥ क्रोशस्ताभ्यांतुगव्यूतिस्तद्द्वयंयोजनंमतं॥ चतुरष्टशतंग्रामांतर्द्रोणमुखकर्वटौ॥ २४॥ गर्भागारापवरकेवास्कस्याद्गृहपोतकः॥ ओकोगृहंपिटंचालोवडभीचंद्रशालिका॥ २५॥ कूटागारंन्वाथकपिशीर्षखोडकशीर्षकं॥ क्रमशीर्षंचाथखरकुटीनापितशालिको॥२६॥ कुलायिकापक्षिशालाकारावेश्मबधागकं॥ कायमानंतृणकुटीदर्भटंनिभृतंगृहं॥ २७॥ कुद्दंकोद्धाटपिठराइंद्रकोषस्तुमंचकः॥ वासागारंभोगगृहंकन्यापल्याटनिष्कुटाः॥ २८॥ शिवस्यवृषमंडप्यां

---

त्रीणिवल्मीकस्य चत्वारिसेतोः षट्मार्गस्य १८ ऊर्ध्वगपुरस्यैकं द्वेशोभपुरस्य चत्वारिप्रतिमार्गस्य १९ त्रीणिपण्याजीवस्य चत्वारिहट्टस्य २० द्वेशाखानगरस्य द्वेराजशासनस्य द्वेशूद्रशासनस्य २१ द्वेव्यवस्थापत्रस्य अनामपट्टोलिकायाएकं अंगुष्ठस्यैकं वितस्तेरेकं २२ हस्तस्यैकं द्वेहस्तचतुष्टयस्य क्रोशस्यैकं २३ गव्यूतेरेकं योजनस्यैकं ग्रामभेदयोरेकैकं २४ द्वेगर्भगृहस्य द्वेवास्कनः द्वेगृहस्य द्वेचालस्य त्रीणिवडभ्याः २५ त्रीणिकपिशीर्षस्य द्वेनापितगृहस्य २६ द्वेपक्षिशालायाः द्वेकारागृहस्य द्वेतृणछन्नगृहस्य निभृतगृहस्यैकं २७ गृहभेदस्यत्रीणि द्वेमंचस्य पंचवासगृहस्य २८

बुधैर्गोपुरकं स्मृतं ॥ वातायनं गृहाक्षः स्याद्धूटशयनं तथा ॥ २९ ॥ उपशल्योपकंठे द्वे कपाटो द्वारकंटकः ॥ कवाटश्चाररं कंथा वाटः प्राकार इत्यपि ॥ ३० ॥ ॥ इति पुरवर्गः ॥ ॥ शैलस्थावरधातुभृद्धरकुकीलोव्यंगकः सानुमान् जीमूतः पृथुशेखरश्च कटकी दंती नगो निर्झरी ॥ कुद्दारोऽथ हिमालयो नगपतिर्मेनाधवो मागुरुः कैलासो गणपर्वतश्च रजतप्रस्थः कुबेराचलः ॥ ३१ ॥ हिरण्यनाभमैनाकसुनाभो हिमवत्सुते ॥ शैलाग्रे शिखरं शृंगं दंतः प्राक्भार इत्यपि ॥ ॥ ३२ ॥ पूर्वाद्रिर्दिनमूर्द्धा स्यादस्ताद्रिश्चरमाचलः ॥ चंदनाद्रिस्तु मलयः क्रौंचः क्रौंचश्च माल्यवान् ॥ ३३ ॥ महेंद्रो मलयः सह्यः शक्तिमान् गंधमादनः ॥ विंध्यश्च पारियात्रश्च सप्तैते च कुलाचलाः ॥ ३४ ॥ अश्मा पवारुकः काठः पारटीटश्च मृन्मरुः ॥ घर्षणालः शिलापुत्रो गृहाश्मा गृहकच्छपः ॥ ३५ ॥ गैरिकं तु वनालक्तं रक्तधातुगवेरुकम् ॥ प्रत्यश्मा गिरिमृच्चाथ शिलाधातुः सितोपलः ॥ ३६ ॥ मक्कोलो वर्णलेखा च कठिनी कक्खटी खटी ॥ ३७ ॥ ॥ इति शैलवर्गः ॥ ॥ वार्क्षं वनं नलं तल्कं गुहिनं समजं त्रसं ॥ लीलोद्यानं देववनं स्याद्धिंजोली पंक्तिरावली ॥ ३७ ॥ वृक्षः कारस्करो गच्छः पलाशी विष्टरः स्थिरः ॥ चैत्यो देवतरुर्देवावासे करिभकुंजरौ ॥ ३८ ॥ छा

---

एकं शिवदृष्टगृहस्य त्रीणि गवाक्षस्य २९ द्वे ग्रामांतस्य चत्वारि कपाटस्य द्वे आवरणस्य ३० चतुर्दश शैलस्य चत्वारि हिमालयस्य चत्वारि कैलासस्य ३१ त्रीणि मैनाकस्य पंच शिखरस्य ३२ द्वे उदयाद्रेः द्वे अस्ताद्रेः द्वे मलयस्य त्रीणि माल्यवतः ३३ सप्त कुलाचलानामेकैकं ३४ षडश्मनः द्वे शिलापुत्रस्य द्वे शिलापट्टस्य ३५ षट् गैरिकस्य त्रीणि शिलाधातोः ३६ चत्वारि खटिकायाः ३६ सप्त वनस्य द्वे लीलोद्यानस्य त्रीणि पंक्तेः ३७ षट् वृक्षस्य पंच चैत्यस्य ३८

यातरुस्थिरच्छायोवंदाकाकरुहास्मृता॥ वनस्पतिर्निर्मुटः स्यात्फुल्लोन्निद्रविकस्वराः॥ ३९॥ स्मितोन्मुद्रौकलिंजस्तुसूक्ष्मदारुवथपल्लवः॥ विसलंकिसलंचाथोल्कलिकांगारितेसमे॥ ४०॥ गुच्छोगुलुच्छःक्षेपःस्याच्चमरीमंजरंनना॥ मंजिर्श्वकंटकेपत्रसूचिद्रुनखवंकिलाः॥ ४१॥ पिप्पलावादरंगःस्याच्चैत्यद्रुःकेशवालयः॥ यक्षोडुंबरकंतस्यफलेथग्रहनाशनः॥ ४२॥ देववृक्षोदलेगंधिःसप्तपर्णःशिरोरुजा॥ दंतहर्षणजंबीरोकतकोंबुप्रसादनं॥ ४३॥ वरुणस्त्वश्मरीघ्नोथाध्वगभोग्योमधुद्रुमः॥ कपिचूतोऽम्रातकोस्यफलेपशुहरीतकी॥ ४४॥ पिकबंधुस्तुचूतःस्यात्स्त्रीप्रियःषट्पदातिथिः॥ मधुदूतोवसंतद्रुर्महाकालोरुकालकौ॥ ४५॥ शोभांजनस्तुस्त्रीचित्तहारीविद्रधिनाशनः॥ प्रभांजनोथप्राचीनपनसांगोहरीतकी॥ ४६॥ महाकपित्थोबिल्वश्र्वकोलिगृध्रनखीस्मृता॥ स्यात्पिच्छलदलास्वादुफलोऽथोनागरंगके॥ ४७॥ वक्राधिवासीनारंगःकिमीरत्वक्स्फगंधकः॥ स्याद्धर्मणःपिच्छिलत्वक्धवस्तुमधुरत्वचः॥ ४८॥ पिशाचद्रुःपीतफलःशाकोटःकर्कशच्छदः॥ अर्शोहितस्तुरक्षोघ्नोभल्लातक्यथशाल्मली॥ ४९॥ दुरारोहोस्मृतापिंडीतगरःक

---

द्वेछायातरोः द्वेवंदायाः द्वेअपुष्पवृक्षस्य पंचफुल्लस्य ३९ द्वेसूक्ष्मदारोः त्रीणिपल्लवस्य द्वेउल्कलिकायाः ४० त्रीणिगुच्छस्य त्रीणिमंजर्याः चत्वारिकंटकस्य ४१ पंचपिप्पलस्य तत्फलस्यैकं पंचसप्तपर्णस्य ४२ चत्वारि जंबीरस्य ४३ द्वेवरुणस्य चत्वार्यम्रातकस्य द्वेतत्पुष्पस्य ४४ षडाम्रस्य द्वेमहाकालस्य ४५ चत्वारिशोभांजनस्य चत्वारिबिल्वस्य ४६ चत्वारिबदर्याः सप्तनागरंगस्य ४७ चत्वारिधवस्य ४८ द्वेशाकोटस्य त्रीणिभल्लातक्याः द्वेशाल्मल्याः ४९ द्वेपिंडीतगरस्य

फवर्धनः॥ काकचिंचीतुलाबीजैर्खदिरोबालपत्रकः॥५०॥ यूपद्रुः कुष्ठसूदनर्चोथकरंजो घृतपूर्णकः॥ रसायनफलापथ्याशक्रस्तु ष्टास्कधोद्भवौ॥ ५१॥ सरलोधूपवृक्षः स्यान्शोणकोन्यंकुभूरुहः॥ चंपकोल्वस्तुमुरजफलः स्यात्पनसश्च्वसः॥५२॥ डहुः स्कद्रांबुपनसौनिचुलोरक्तमंजरः॥ निंबोर्कपादपः पुण्यगंधस्तुकुसुमाधिराट्॥५३॥ चंपकोवरलब्धश्र्वबकुलः सिंहकेशरः॥ त्रीधुगंधोथ कंकेलिर्नटः कांतांघ्रिदोहदः॥ ५४॥ अशोकः पिंडपुष्पस्तुदाडिमः फलशाडवः॥ दाडिबः पर्वरुट्चस्यात्स्वाद्वम्लः शुकवल्लभः॥ ५५॥ पिंडीरोथस्तूपर्णेभनागाख्योनागकेशरः॥ स्यात्पुष्परोचनश्चापि चूर्णनस्य हरिद्रवः॥ ५६॥ निशिपुष्पातुशेफालीकुटजः पांडुरद्रुमः॥ लताशंकुनरुः सालोनीपोधाराकदंबकः॥ ५७॥ कटंकटेरीहरिद्रा शिंशपागुरुपत्रिका॥ पटोलंस्याद्राजफलंतस्यमूलेतुरम्यकं॥५८ सूत्रपुष्पस्तुकार्पासेजीर्णपर्णकदंबकम्॥ प्रहसंतानियूथी स्याद्दमनः पुष्पचामरः॥ ५९॥ मालतीपुष्पकलिकां सौमनस्याय नीं विदुः॥ कुंदेस्याद्दौरटः पुंसिग्रैष्मीतुनवमालिका॥ रक्तपिंडस्त्वोड्रपुष्पं स्यादम्लानः कुरंटकः॥६०॥ कंदलशिलींध्रपुष्पेश्लेष्मघ्नात्रिपुरमल्लिकाप्रोक्ता॥ एरंडहस्तिकर्णौप्रा-

---

द्वेकाकचिंच्याः चत्वारिखदिरस्य ५० द्वेकरंजस्य चत्वारिहरीतक्याः ५१ द्वेसरलस्य द्वेशोणकस्य त्रीणिपनसस्य ५२ द्वे लकुचस्य चत्वारिनिंबस्य चत्वारिचंपकस्य ५३ त्रीणिबकुलस्य चत्वार्यशोकस्य ५४ अष्टदाडिमस्य ५५ पंचनागकेसरस्य तच्चूर्णस्यैकं ५६ द्वेशेफाल्याः द्वेकुटजस्य द्वेसालस्य द्वेधाराकदंबस्य ५७ द्वेहरिद्रायाः द्वेशिंशपायाः द्वेपटोलस्य तन्मूलस्यैकं ५८ द्वेकार्पासस्य द्वेकदंबस्य द्वेयूथ्याः द्वेदमनस्य ५९ मालतीकलिकायाएकं द्वेकुंदस्य द्वेनवमालिकायाः द्वेओड्रपुष्पस्य द्वेकुरंटकस्य ६० द्वेशिलींध्रपुष्पस्य द्वेत्रिपुरमल्लिकायाः

चीनामलकवारिवदरेद्वे॥६१॥ बृहत्पाटलिधूस्तूरौ कदलीत्वायतच्छदा॥६२॥ स्यात्तंतु विग्रहामंजिफलावारणवल्लभा॥ वार्तिगणस्तु वार्ताकुर्वार्ताकः शाकबिंदकः॥६३॥ क्लीबेवंगंचवार्ताकी स्यान्महाबृहतीत्यपि॥ कुष्ठंगदाह्वयंमूलंत्वस्यपुष्करमूलकम्॥६४॥ वंकसेनःस्त्वगस्तिद्रुःशुकनासोमुनिद्रुमः॥अनलिः कुनलीपुत्रंजीवस्तु श्लीपदापहः॥६५॥ छत्रकोमल्लिपत्रंस्यात्कुञ्जकोवारिकंटकः॥ वास्तूकष्टक्कदेशीयःशाकवीरोघनामकः॥६६॥शोथजिद्वृहत्का-लशाकोप्यथमहौषधी॥ महीविषघ्नीचक्रांगीमत्स्याक्षीहिलमोचिका॥६७॥जलब्रह्मीचशालिंचेपत्तूरोलोहमारकः॥केचुकंपेचुलीपेचुर्नाडीचोविश्वरोचनः॥६८॥ केशराजोनागमारःवपरुर्भृंगसोदरः॥स्तनिषण्णंचुचुःपुंसिछत्रपत्रंतमालकम्॥६९॥स्थलपद्ममथोदेवपत्नीमध्वालुकंविदुः॥फलपुच्छोवरंडालुःस्याल्लंगेष्टालुकंतुयत्॥७०॥श्रीमस्तकःस्वस्तिकःस्याद्राहूच्छिष्टोरसोनकः॥कुष्मांडस्तुघणावासस्तिमिषोग्राम्यकर्कटी॥७१॥वालुकीकर्कटीर्वोरुर्मूत्रलारोमशाचसा॥ स्याच्चेलालभ्वित्रफलःस्तरवाशोराजतेमिषः॥७२॥ लूतापनसनादाम्रोसेदुरूर्ध्वासिनस्तयः॥पवारुःकारवेल्लोसोगोडुंबागजन्चिर्भटः॥७३॥ मृत्युबीजस्तुवंशःस्यात्केतकःक्रकचच्छदः

---

द्वेएरंडस्य द्वेप्राचीनामलकस्य ६१ द्वेधूस्तूरस्य पंचकदल्याः ६२ सप्तवार्ताकोः ६३ द्वेकुष्ठस्य पुष्करमूलस्यैकं ६४ षडगस्तिद्रोः द्वेपुत्रंजीवस्य ६५ द्वेछत्रायाः द्वेकुञ्जकस्य द्वेवास्तूकस्यत्रीणिपुनर्नवायाः ६६ द्वेकालशाकस्य पंचकटुरोहिण्याः त्रीणिजलब्रह्म्याः ६७ त्रीणिशालिंचायाः पंचपेचुकस्य ६८ चत्वारिकेशराजस्य द्वेस्तनिषंडस्य त्रीणिस्थलपद्मस्य ६९ द्वेमध्वालोः द्वेवरंडालोः त्रीणिलंगेष्टालोः ७० द्वेरसोनस्य चत्वारिकुष्मांडस्य ७१ पंचकर्कट्याः सप्तस्तरवाशस्य ७२ पंचकारवेल्लस्य द्वेगोडुंबायाः ७३ द्वेवंशस्य द्वेकेतकस्य द्वेबहुमूलस्य ७४

द्रकृकरीबहुमूलः स्यात् करीरेवेणुकर्करः॥ ७४॥ काशोश्ववालःकाकेक्षुर्वनहासश्चजंतुलः॥ गुडदारुर्मधुतृणंस्यादिक्षुरसिपत्रकः॥ ७५॥ खानोदकोनारिकेलः करकांभाःशिरःफलः॥ स्करंजनोगोपदलोराजतालश्चदाफलः॥ ७६॥ करमदृस्तंतुसारोगुवाकोकोटइत्यपि रामपूगस्तुकामीनोमुनिपूगस्करेवटः॥ ७७॥ पूगवोटस्तुहिंतालःक्लीबंकिरिटिनस्फलम्॥ घनामयःस्यात्खर्जूरोद्वौतुकांचिमभंजरू॥ ७८॥ नरौदेवकुलोद्भूनेदूर्वातुहरितालिका॥ ७९॥ ॥ इ निवनौषधिवर्गः॥ ॥ ॥ सिंहःकंठीरवो भीमविक्रांतः करिमाचलः॥ पंचशिखश्च शैलाटःपारींद्रःश्वेतपिंगलः॥ ८०॥ मरुसवश्चनादोस्यचुत्कारःक्ष्वेडितंचतत्॥ उत्पादकस्तुशरभःशार्दूलोद्वीपदश्चसः॥ ८१॥ अथहिंस्रपशुर्व्याडःश्वापदःशिविरित्यपि॥ वाधीनसस्त्वेकचरोगणोत्साहश्चगंडकः॥ ८२॥ हिंसारुःश्वापदोव्याघ्रो महिषस्तुरजस्वलः॥ दंशभीरुर्जरंतश्चनालिकोयमवाहनः॥ ८३॥ अथशूकरेवनाहिरदंतायुधचक्रकब्रदीर्घरदाः॥ सूचीरोमाबहुसुरास्वनिकस्थूलनासिकोभूक्षित्॥ ८४॥ एणःकुरंगमोरिश्यःसादृश्यश्चारुलोचनः॥ गोलांगुलेकपित्थास्यदधिशोणनगाटनाः॥ ८५॥ क्रिस्विंधृ इरवस्तुस्यान्शृगालोघोररासनः॥ लोपाकोमृतमत्तश्च

---

द्वेकरीरस्य ७४ पंचकाशस्य चत्वारीक्षोः ७५ चत्वारिनारिकेलस्य पूगवृक्षस्य द्वौ ७६ चत्वारिरामपूगस्य ७७ द्वेहिंतालस्य तत्फलस्यैकं द्वेखर्जूरस्य देवकुलोद्भूतदोर्द्वे ७८ द्वेदूर्वायाः ७९ नवसिंहस्य ८० द्वेसिंहनादस्य चत्वारिशरभस्य ८१ चत्वारिहिंस्रपशोः चत्वारिगंडकस्य॥ ८२ त्रीणिव्याघ्रस्य षट्महिषस्य ८३ दशशूकरस्य ८४ पंचकुरंगस्य पंचवानरस्य ८५ षट्शृगालस्य पंचशृगालिकायाः ८६ ५ ५ ५

...खट्टाशीवनवासनः॥ उ
दुरुस्तु मोरंध्रबभ्रुर्दीनातुमूषिका॥ ८९॥ स्याच्छिकोवेश्मनकुलः
पुंदृषोगंधमूषिकः ॥ स्याद्वेदारःककचपृष्ठकलाशस्तृणांजनः॥ ९०
प्रतिसूर्योपंजनस्तुचित्रकोलोहलाहलः॥ कारस्करादिकाकर्णजलौ
कास्यादथोवटिः॥ ९१॥ उपादिकोदेहिकास्यादष्टपादस्तुकीतनुः ॥
प्रसादकुक्कुटोझिल्लीकंठोगृहकपोतकः ॥ ९२॥ पारावतोथशाका-
ख्योदिवांधोवक्रनासिकः॥ हरिनेत्रोदिवासीतोनखाशीपीयुघर्घ
रो॥ ९३॥ काकभीरुर्नक्तचारीकुणाटीनस्तुखंजनः॥ काकछर्दिः खं-
जरखेलस्तातनोमुनिपुत्रकः॥ ९४॥ भद्रनामारत्ननिधिःकाष्ठकुट्टःशत
छदौ॥ दीर्घपादस्तुकंकःस्याद्गलेगंडस्तुमर्कटः॥ ९५॥ चातकेचप्लुवा
पीहयनतोलत्रिशंकवः॥ वर्षप्रियोथमेधावीचिरिःकीरःपलाशनः
॥ ९६॥ कुक्कुटस्तुविवृत्ताक्षोरात्रिवेदीकलाविकः॥ उषाकलोथता
म्राक्षःकाकपुष्टःकुहूमुखः॥ ९७ ॥ मधुकंठोघोषयिलुःकामताल
कनर्दनः॥ काकोरतज्वरःस्त्रीश्रावकोगूढमैथुनः॥ ९८॥ कारवः

---

पंचबिडालस्य ८७ द्वेशशस्य द्वेखट्टाशयाः द्वेगवयस्य त्रीण्येडकस्य ८८ त्री
णिखट्टाशस्य त्रीण्युंदु रोः द्वेमूषिकायाः ८९ चत्वारिछुछुंदर्याः पंचकृकला
शस्य ९० त्रीणिपल्वाः द्वेकर्णजलौकसः द्वेउपपादिकायाः ९१ द्वेअष्टपादः च
त्वारिपारावतस्य ९२ दशोलूकस्य ९३ अष्टखंजनस्य ९४ चत्वारिकाष्ठकुट्टस्यद्वेकंक
स्य द्वेगलगंडपक्षिणः ९५ षट्चातकस्य चत्वारिकीरस्य ९६ पंचकुक्कुटस्य
सप्तकोकिलस्य ९७ सप्तदशकाकस्य ९८

परभृत्पुंस्य लुंटाकोमोद्मलिर्दृहिकः॥ शक्रजः सस्यवाक्काणो ऽथकृष्णोनग
रीवकः॥ ९९॥ ऐंद्रिस्य नाडीजंघौऽथगृध्रः स्याद्दूरदर्शिनि॥ शितिकंठ
स्तदात्यूहः काकमद्गुः कचाटुरः॥ १००॥ चिरंभणस्तुचिल्लः स्यात्
खभ्रांतिः कंठनीडकः स्तत्कामदनशलाकाचित्राक्षीशारिकाचचंडा
चे॥ शकुनज्ञातुज्येष्ठागृहोलिकाऽहनीमूली॥ १॥ दीर्घजंघानि
श्रेनः स्याद्धकोटः शल्लुकवायसः॥ २॥ कंकेरुद्दारवलिभक्कुशिखी
चंद्रविहंगमाः॥ बकेरुकाबलाकास्यात्कुररोमत्स्यनाशनः॥ ३॥ द्वं
द्वचारीचक्रवाकः सारसस्तकलांकुरः॥ गोमर्दश्चित्रपक्षस्त तित्तिरिः
स्यात्कपिंजलः॥ ४॥ त्रयुमांसोमयूरस्तकचंद्रकीचित्रमेखलः॥ प्रचला
कीसितापांगशिखावलगलध्वनाः॥ ५॥ मार्जारकंश्चाथनिलमयूरः
स्याद्गुरुंठकः॥ मत्स्याशनोमीनरंकोनासाछिन्नीतुपूर्णिका॥ ६॥
पिपीलिकातुहोरास्यायमकीटस्तघुर्घुरः॥ स्यान्मर्कटस्तशलकेआ
शाबंधोऽस्यजालके॥ ७॥ फालखेलागरुद्योधीभारतीव्योमनासि
का॥ चंचिसूचिस्तस्यगृहः पीततुंडोऽथसर्षपी॥ ८॥ हापुत्रिकारवं
जनिकातुलिकास्फोटिकेसमे॥ करेटव्याधनच्छूः स्यात्तरुकूणिस्त
वाग्गदः॥ ९॥ वर्त्तिकाविष्णुलिंगीस्याल्लावकोलघुजंगलः॥ सरः का-
कस्तहंसः स्याज्जालपास्तुरुदंशकः॥ १०॥ गोभंडीरः पंककीरः को

---

९९ द्वेगृध्रस्य चत्वारिदात्यूहस्य १०० चत्वारिचिल्लस्य पंचशारिकायाः पंच
गृहगोधायाः १ अष्टकस्य २ द्वेबलाकायाः द्वेकुररस्य द्वेचक्रवाकस्य त्रीणि-
सारसस्य चत्वारितित्तिरेः ४ मयूरस्याष्टौ ५ द्वेनिलमयूरस्य द्वेमीनरंकस्य द्वे
पूर्णिकायाः ६ द्वेपिपीलिकायाः द्वेघुर्घुरस्य द्वेशलकस्य तज्जालस्यैकं ७ च
त्वारि भारत्याः त्रीणिकारंडवस्य पंचहापुत्रिकायाः ८ द्वेधनेच्छोः द्वेवाग्गुद
स्य ९ द्वेवर्त्तिकायाः द्वेलावकस्य चत्वारिहंसस्य १० द्वेजलकुक्कुभस्य ॥

यष्टिर्जलकुक्कुभः॥ जीवंजीवोविषमृत्युर्जीवंजीवोऽथमक्षिका॥ ११॥ मक्षिकाभंभरालीचदंशःस्याद्दंमरालिका॥ भंकारीचर्मचट्यांतुजतुनीगृहमक्षिका॥ १२॥ विषस्त्रूककाभृंगरोलोवरोलस्तुगणपट्पदः॥ वरटीतुवराटीस्याद्वाह्मण्यथनमोमणिः॥ १३॥ ध्वांतोन्मेषश्चखद्योतोज्योतिरीजिनिमेषरुक्॥ भ्रमरश्चंचरीकःस्याद्रोलंबोमधुसूदनः॥ १४॥ इंदिंदिरःपुष्पकीटोमधुव्रोमधुकेशटः॥ रेणुवासोऽथमशकोघोषोरणरणश्चदंसः॥ १५॥ पक्षीतुनाडीचरणःस्याच्चंचुभृदनेकजः॥ स्युःखगोसनचारंककंदाग्नियोमचारिणः॥ १६॥ युगलद्वंद्वयुग्मानियुगंयमलयामले॥ ॥ ॥इतिसिंहवर्गः॥ ॥ स्त्रीनधूर्योषिताराभामंडयंतीवधूजनः॥ कन्यकालकनंदासाध्व्यूषिताधर्मकारिणी॥ १७॥ सस्वेदाचाथतरुणीदिक्करीधनिकाचसा॥ मरुंडोच्चललाटास्यात्सध्मश्रुर्नरमानिनी॥ १८॥ स्नुषावधूर्दीमधुरनिस्वनाहंसगद्गदा॥ क्रोधनाभामिनीचंडीदारुस्त्रीशालभंजिका॥ १९॥ विरक्तादुर्भगासमपुत्रसूःसुतवस्करा॥ पतिव्रतैकपत्नीस्याद्विधवाजालिकामता॥ २०॥ विश्वस्तावांछिनीतुस्याद्वुंजिकाकलतूलिका॥ वेश्याभूलावारवाणिर्भर्झराप्यथकुट्टिनी॥ २१॥ इज्यास्याद्दत्तनालीचघटदासीगणेरुका

---

त्रीणिजीवंजीवस्य त्रीणिमक्षिकायाः ११ त्रीणिदंशस्य त्रीणिचर्मचट्याः १२ चत्वारिभृंगरोलस्य त्रीणिवरट्याः पंचखद्योतस्य १३ नवभ्रमरस्य १४ त्रीणिमशकस्य १५ पक्षिणोष्ट १६ षड्युगस्य षट्स्त्रियः द्वेकन्यायाः ३ अदूषितायाः १७ त्रीणितरुण्याः द्वेउच्चललाटायाः द्वेसश्मश्रोः १८ द्वेस्नुषायाः द्वेमधुरस्वनायाः त्रीणिक्रोधनायाः द्वे दारुस्त्रियः १९ द्वेदुर्भगायाः द्वेसमपुत्रायाः द्वे पतिव्रतायाः त्रीणिविधवायाः २० त्रीणिवांछिन्याः चत्वारि वेश्यायाः पंचकुट्टिन्याः २१ द्वेम्लानांग्याः

भगिनीसुतः स्त्रीणां मातुरं द्वे मातुरोसमो॥ २२॥ समदुहितरि दुहितापुत्रोद्वि
तीयः कुलधारकः॥ पिताजनयितावस्तो शिशुकः क्षीरकंठकः॥ २३॥
बालो मुष्टिंधयः श्वाथ श्यालिका केलिकुंचिका॥ नागरो देवरः श्या-
लो वारकीरोऽथ सा श्वश्रूः॥ २४॥ श्वश्रूर्वृद्धः शतानीको जरंतः स्याद
थांशकः॥ संगोत्र ज्ञाति दायादौ मातुलो मातृकेशटः॥ २५॥ भर्ताभ
र्तर्नर्मकीलः प्राणनाथः स्मरोत्सवः॥ हृदयेशो रमणगुरुर्जारः पापप
तिः समौ॥ २६॥ कुमारभृत्यास्याद्बालतंत्रं गर्भिण्यवेक्षणे॥ गर्भो
ष्टमो देवमासो नाभिनालाम लाल्पसृना॥ २७॥ आधानिकं पुंसव
नं सीमंतोन्नयनं च तत्॥ खल्लीटः खलतिः कल्लो बधिरः खोरख
जकौ॥ २८॥ दोर्गडुर्बाहुकुंठः स्यादौषधं तु भिषग्जितम्॥ त्वक्पुष्पिक
किलासं स्यात् श्लीपदं पादगंडिरः॥ २९॥ योन्यर्शः कंदसंज्ञं स्यात्किणः
श्रृंगं व्रणो रुजा। अजीर्णं वायुगंडो नर्वामिश्च पलताशयः॥ ३०॥ पापरो
गो रक्तवटी मसूर्यथ तमो व्रणः॥ वल्मीकोथातिसारो न्नगंधिः स्यादुद
रामयः॥ ३१॥ कुरंडस्तृद्धो सिंघाणशेटौ स्कंदनरेचने॥ गर्भंडो नाभि
गुडको भिमंथो लोचनामये॥ ३२॥ युवगंडो वगंडः स्यात्पित्तं मायुप-
लंकरः॥ श्लेष्मा वलाशो मांसं तु जरूथमथ शोणितम्॥ ३३॥ पल-

---

द्वे मातुरस्य २२ द्वे दुहितुः त्रीणि पुत्रस्य त्रीणि पितुः चत्वारि बालस्य २३ द्वे श्यालि
कायाः द्वे देवरस्य द्वे श्यालस्य द्वे श्वश्र्वाः २४ त्रीणि वृद्धस्य चत्वारि ज्ञातेः द्वे
मातुलस्य २५ सप्त भर्तुः द्वे जारस्य २६ त्रीणि गर्भिणीचर्यायाः द्वे गर्भाष्टमस्य
द्वे नाभिनालायाः २७ त्रीणि संस्काराणामेकैकं द्वे खल्लीटस्य द्वे बधिरस्य
द्वे खंजस्य २८ द्वे बाहुकुंठस्य द्वे औषधस्य द्वे किलासस्य द्वे श्लीपदस्य २९
चत्वारि योन्यर्शस्य चत्वार्यजीर्णस्य ३० त्रीणि वसंतव्रणस्य द्वे वल्मीकस्य त्री
ण्यतिसारस्य ३१ त्रीणि कुरंडस्य द्वे रेचनस्य द्वे नाभिगुडस्य द्वे नेत्रामयस्य ३२
द्वे अवगंडस्य त्रीणि पित्तस्य द्वे श्लेष्मणः द्वे मांसस्य द्वे रक्तस्य ३३

क्षारोथमस्तिस्कोमस्तुलुंगोप्यथरसना॥ वस्नसाथो धरमधुक्ली बेवक्त्रासवःपुमान्॥३४॥ जिह्वामलंतुकुलुकंपिप्पिकोदंतजेम ले॥ पिंडोस्त्रियांकुलंक्षेत्रंशरीरंस्कंदपंजरो॥३५॥शस्तंवपुःपु द्गलंस्यादंगमंगंतुकोमलं॥पायुस्तनुक्ह्वोमार्गउच्चारस्तुपुरीष- णः॥३६॥भगंगुह्यंवरांगंचकलत्रंजन्मवर्त्म च॥स्मरागारंरतिगृ हमधोथस्यादिहाव्यये॥३७॥नासंधिरधरोवाच्यदेशश्चस्मरकू पकः॥संसारमार्गश्चरतिकुहरंप्रकृतिःस्त्रियाम्॥३८॥पुष्पापत्य पथौचाथनितंबःस्यात्कटीरकः॥लिंगंतुलांगलंशेफःसाधनंमद नांकुशः॥३९॥स्मरस्तंभश्चकंदर्पमुसलोध्वजइत्यपि॥स्त्रियां- नागलतांचांडकोषस्तुफलकोषकः॥४०॥नाभिर्द्वयोस्तुकंदकूपी तुंदस्तुंदिकरःपुमान्॥अधोमर्मशक्त्हारमुरुःशक्थिचजाघनी ॥४१॥भुजावाहाचवाहोस्यात्कुलिर्हस्तोभुजादलः॥कुचोवक्षो रुहौप्रोक्तौहस्तपुच्छंतुकल्मषं॥४२॥नखःपुनर्भवःकामांकुशः स्यात्करकंटकः॥करेटुःकरशूकश्चपुच्छल्यंगुलिमोटनम्॥४३ स्यात्काकलंकंठमणिर्नसानस्याचनासिका॥गंधनालीचनासिक्यं वाग्दलंदंतवाससि॥४४॥दंतःखरुर्वज्रखुरोजंभोद्यानुर्द्विजस्त था॥राजदंतोस्तुचत्वारोदशनानांपुरस्थिताः॥४५॥गोधिभा

---

द्वेमस्तिकस्य द्वेवस्नसायाः द्वेअधरमधुनः ३४ द्वेजिह्वामलस्य दंतमल स्यैकं त्रीणिशरीरस्य ३५ शस्तवपुषएकं कोमलांगस्यैकं त्रीणिपायोः द्वेवि ष्ठायाः ३६ सप्तदशभगस्य ३७ ३८ द्वेनितंबस्य नवलिंगस्य ३९ द्वेअंड- कोषस्य ४० चत्वारिनाभ्याः त्रीणिभुजायाः त्रीणिभुजादलस्य द्वेस्तन- स्य द्वेहस्तपुच्छस्य ४२ षड्नखानां द्वेअंगुलिमोटनस्य ४३ द्वेकंठमणेः पंच नासिकायाः द्वेओष्ठस्य ४४ षड्दंतानां त्रीणिभालस्य त्रीणिनेत्रस्य ४५

लोमहाशंखदेवदीपरक्तलोचनं॥अंबकंचाथनेत्रांबुबाष्पोनाले
तेमस्त्रियां॥कटाक्षकाक्षौकाकुरक्तजिह्वास्यात्प्रनिजिह्विका॥
॥४६॥रुधाश्रवोन्वकर्णस्तश्रोतःक्लीबेध्वनिग्रहः॥स्याच्छब्दाधि
ष्ठानमथकुबरःकेशगर्भकः॥४७॥कबरीकूटकश्चाथकोटिरःस्या
ज्जटासटा॥करारोटोंगुलीटःस्यात्ताडंकःकर्णदर्पणः॥४८॥अंदु
कःपादकटकोभिषेकःस्नानमित्यपि॥पटच्चरंजीर्णवस्त्रंसिचय
प्रोथशाटकाः॥४९॥पटवापःपटमयं दूष्यंवस्त्रगृहंस्थलं॥रवरग्र
हःखरगृहंकुंबातुस्थूलशाटकः॥५०॥चोलोंडुकःशिरोवेष्टोविरिं
गिन्यवगुंठिका॥पाटीयवनिकासूर्यरक्तसंज्ञंतुकुंकुमं॥५१॥जा
गुडंदीपनंघस्रंसौरभंघुसृणंचतत्॥स्यादंगमातृकालाक्षागंध
काष्ठंतुजोंगकं॥५२॥कपिचंचलतैलाख्यःसिल्होथसरलद्रवः॥
दधिक्षीरघृताद्भःस्यात्धूनकोवन्हिवल्लभः॥५३॥शालवेष्टःसर्ज
मणिःकस्तूरीगंधचेलिका॥मदाह्वश्चाथसंचारीधूपोगंधपिशा-
चिका॥५४॥रेणुसारस्तकर्पूरश्चंद्रभस्माहिमाह्वयः॥वेधको-
मालयस्तस्याच्छ्रीखंडोरोहिणश्चसः॥५५॥विच्छित्तिस्तकषायः
स्यात्समालंभनमित्यपि॥ललाटिकाशंखचरीविष्टरःपीठमस्त्रि
यां॥५६॥निषद्यारवट्टिकासंदीचातुरस्तमसूरकः॥प्रतियत्नस्तु

---

त्रीणिनेत्रांबुनः द्वेकटाक्षस्य चत्वारिजिह्वायाः ४६ चत्वारिकर्णयोः चत्वा
रिकबर्याः ४७ त्रीणिजटायाः द्वेअंगुलीयकस्य द्वेनाटंकस्य ४८
द्वेपादकटकस्य द्वेस्नानस्य द्वेजीर्णवस्त्रस्य त्रीणिशाटकस्य ४९ पंचवस्त्रगृ
हस्य द्वेखरगृहस्य द्वेस्थूलशाटकस्य द्वेरोगाहनावृतेः ५० द्वेशिरोवेष्टस्य चत्वारितिरस्करि
ण्याः सप्तकुंकुमस्य ५१ द्वेलाक्षायाः द्वेअगरुकाष्ठस्य ५२ त्रीणिसिल्हस्य
चत्वारिसरलद्रवस्य द्वेधूनकस्य ५३ द्वेसालवेष्टस्य त्रीणिकस्तूर्याः। त्रीणि
धूपस्य ५४ पंचकर्पूरस्य त्रीणिश्रीखंडस्य त्रीणिकाषायस्य द्वेललाटिकायाः
द्वेपीठस्य ५६ त्रीणिखट्वायाः

रचनाँकटकोलःपतद्ग्रहः॥५७॥ पूगपीठंचदीपस्कस्नेहाशः कज्जल ध्वजः॥ दशेंधनोगृहमणिर्दोषातिलकइत्यपि॥५८॥ शिखातरुर्दीपवृक्षेज्योत्स्नावृक्षोऽथलोचकः॥ कज्जलेस्यादिरिपकेकंदुकश्चोद नागुडः॥५९॥ निश्चुक्कणंदंतशाणंपिष्टातोधूलिगुछकः॥१६०॥ ॥ इतिमनुष्यवर्गः॥ ॥ वंश्यःकुल्यश्चबीज्यःस्याद्ब्रह्मचारीबटुःसमौ॥ स्याद्बटूकरणंतूपनयनंगृहमेधिनि॥६१॥ ज्येष्ठाश्रमीगृहीवानप्रस्थोवैखानसोऽग्रहः॥ वक्त्रजस्त्वनमोविप्रोवर्णज्येष्ठःकठोद्विजः॥६२॥ मैत्रःपुनरुक्तजन्मास्यादथब्राह्मणायनः॥ शुद्धसंतानजोविप्रःश्रोत्रंश्रोत्रियतांविदुः॥६३॥ स्यादक्षरमुखःकालाक्षरिकःशिक्षिताक्षरः॥ काव्यस्यकर्ताभाविनीगुणनीशीलनंस्मृतं॥६४॥ क्रियाकारोनवछात्रःकार्पटिकःसमर्मवित्॥ पार्षत्परिषदोगोष्ठीराजसूयोनृपाध्वरः॥६५॥ क्रतूत्तमश्चाथचांद्रायणमिंदुव्रतंस्मृतं॥ हवनीहोमकुंडंस्यान्महावीरोमखानलः॥६६॥ होमधूमस्कनिगणोहोमभस्मतुवेष्टुभं॥ आर्यकंपिंडपात्रादिपितृकार्यमथोहविः॥६७॥ होत्रंहविष्यंसान्नाय्यंपाठकोधर्मभाणकः॥ सभ्यास्तुप्राश्निकोदेवद्रोणीयात्रादिवौकसां॥६८॥ इष्टापू

---

द्वेउपबर्हणस्य द्वेरचनायाः त्रीणिपतद्ग्रहस्य ५७ षट्दीपस्य ५८ त्रीणिदीपवृक्षस्य द्वेकज्जलस्य त्रीणिकंदुकस्य ५९॥ द्वेदंतशाणस्य द्वेपटवासस्य ६० त्रीणि वंश्यस्य द्वेब्रह्मचारिणः द्वेउपनयनस्य ६१ त्रीणिगृहिणः त्रीणिवानप्रस्थस्य अष्टविप्रस्य ६२ शुद्धकुलोत्पन्नविप्रस्यैकं द्वेश्रोत्र स्य ६३ चत्वारि शिक्षिताक्षरस्य त्रीणिपाठनिश्चयस्य ६४ द्वेनवछात्रस्य द्वेकार्पटिकस्य त्रीणिपरिषदस्य त्रीणिराजसूयस्य ६५ द्वेचांद्रायणस्य द्वेहोमकुंडस्य द्वेमखाग्नेः ६६ द्वेहोमधूमस्य होमभस्मनोद्वे पितृकार्यस्यैकंचत्वारिहविषः ६७ द्वे पाठकस्य द्वेसभ्यानां देवयात्रायाएकं ६८

तैत्तदेकोत्त्यायागखातादिकर्मयत्॥ यज्ञद्रव्यंतुपात्रीयंप्राघुणस्त्व
तिथिर्द्वयोः॥ ६९॥ कौशलीकुशलप्रश्नः समीचीवंदनामता॥ उपो
षणंत्वूपवासोरोगाद्येलंघनंचतत्॥ ७०॥ द्यंतरेऽभ्यंतरेभुक्तमाहुः
षष्ठालुकालकं॥ राद्धंसिद्धमथोन्वारुव्रतामासोपवासिनी॥ ७१॥
स्याद्गायत्रीतुसावित्रीब्रह्मारण्यंतुपाठभूः॥ पवित्रंयज्ञोपवीतंब्र-
ह्मसूत्रंद्विजायनी॥ ७२॥ कच्छाकछटिकाकक्षाधटीकोपीनमित्य
पि॥ वैडालव्रतिकः सर्वाभिसंधीछद्मतापसः॥ ७३॥ कमंडलुश्चै
त्यमुरवोंजोटिंकस्तुमहाव्रती॥ उरस्कटः पंचवटोबालयज्ञोपवीत
कं॥ ७४॥ भालेतिस्त्रोभस्मरेखास्त्रिपुंड्रकमथर्षयः॥ शापास्त्राः
सत्यवचसोव्यासाद्यास्तुमहर्षयः॥ ७५॥ परमर्षयस्तुभेलाद्या
देवर्षयः कणादयः॥ ब्रह्मर्षयोवसिष्ठाद्याः सुश्रुताद्याः श्रुतर्षयः
॥ ७६॥ ऋतुपर्णादयोराजर्षयः कांडर्षयस्त्वमी॥ जैमिन्याद्यानार
दस्तुकपिलोविधातृभूः॥ ७७॥ देवब्रह्मादेवलश्चदुर्वासा-
स्तुकुशारणिः॥ प्राचेतसस्तुवाल्मीकिः कविज्येष्ठः कुशीवशः॥
७८॥ अपिवल्मीकवाल्मीकौकृतकोटिस्तुकाश्यपः॥ कृष्णद्वैपा
यनोवेदव्यासः स्यात्सत्यभारतः॥ ७९॥ पाराशरिः सात्यवतोमाठ
रोबादरायणः॥ वसिष्ठोरुंधतीनाथोविश्वामित्रस्तुगाधिजः॥
८०॥ गौतमस्तुशतानंदः कणादः काश्यपः समौ॥ धन्वंतरिर्दि

---

यागखातादिकर्मणएकं द्वेयज्ञद्रव्यस्य द्वेअतिथेः ६९ द्वेकुशलप्रश्नस्य द्वेवंद
नायाः द्वेउपवासस्य रोगोपवासस्यैकं ७० त्रीणिद्यंतरभ्यंतरभक्तस्य द्वेमासो
पवासिन्याः ७१ द्वेगायत्र्याः द्वेवेदपाठभुवः चत्वारियज्ञोपवीतस्य ७२ पंचकौ
पीनस्य त्रीणिछद्मतपस्विनः ७३ द्वेकमंडलोः पंचोरस्कटस्य ७४ भस्मलेखा
त्रयस्यैकं त्रीणिऋषीणां ७५ ७६ त्रीणिनारदस्य ७७ द्वेदेवलस्य द्वेदुर्वाससः
षड्वाल्मीकेः ७८ द्वेकाश्यपस्य सप्तव्यासस्य ७९ द्वेवसिष्ठस्य द्वेविश्वामित्रस्य ८०
द्वेगौतमस्य द्वेकणादस्य अथ धन्वंतर्यादीनां प्रत्येकंद्वयंद्वयं ८१

वीदासः काशिराजः स्कधोद्भवः॥ ८१॥ पालकारव्यागणवतीकरेणु रुचिरास्कतः॥ विष्णुगुप्तस्तुकौडिन्यश्चाणक्योद्रामिणोंशुलः॥ ८२॥ वात्स्यायनोमंदनागः पक्षिलस्वामिनावपि॥ उपवर्षोहलभृनिः कृतकोटिरयाचितः॥ ८३॥ पाणिनिस्त्वाहिकेदाक्षीपुत्रः शालंकिपाणिनो॥ शाणोत्तरीयोथव्याडिर्विंध्यस्थोनंदिनीस्कतः॥ ८४ मेधावीचाथमेधाजित्कात्यः कात्यायनश्चसः॥ पुनर्वस्कर्वररुचिर्गोनर्दीयः पतंजलिः॥ ८५॥ चूर्णिकृद्भाष्यकारश्चहरिर्भर्तृहरिः स्मृतः॥ रघुकारः :कालिदासोमेधारुद्रश्चकोटिजित्॥ ८६॥ भारविःशतपुष्पः स्याद्भवभूतिस्तुविस्मृतः॥ भूगर्भोप्यथयः प्रातःस्मर्यतेशुभकाम्यया॥ ८७॥ स्वस्वगृहीतनामास्यात्सैडिन्यंभैक्षजीविको॥ पाषंडकौलिकौरवंजनरतंयातिमेथुनं॥ ८८॥ अप्माबादंगनात्यागस्तुरगब्रह्मचर्यकं॥ मुखघंटाहुलहुलीनागबीटस्तुटांकरः॥ ८९॥ खटकस्त्र्यक्षरश्चाथदारकर्मकरग्रहः॥ बाधुक्यंचविवाहेस्यात्कुहलिः पूगपुष्पिका॥ ९०॥ नांदीकोतोरणस्तंभोस्करतंत्वभिभानितं॥ धर्षितंसंप्रयोगोनारतंचाब्रह्मचर्यकं॥ ९१॥ उपसृष्टंत्रिभद्रंचक्रीडारत्नंमहास्कखं॥ ॥ इतिब्रह्मवर्गः॥ ॥ द्विजलिंगीनृपः क्षत्रः क्षत्रियोथप्रजेश्वरः॥ राजाधिपोमंडलेशएकजन्माभयापहः॥ ९२॥ स्कंधावारः स्यात्कटकः शिबि

---

नवचाणक्यस्य ८२ चत्वार्युपवर्षस्य ८३ षट्पाणिनेः चत्वारिव्याडेः ८४ पंचकात्यायनस्य चत्वारिपतंजलेः ८५ द्वेभर्तृहरेः चत्वारिकालिदासस्य ८६ द्वेभारवेः त्रीणिभवभूतेः प्रातःस्मर्यस्यैकं ८७ द्वेभैक्षजीविकायाः द्वेपारवंडस्य द्वेयातिगोप्यरतेः ८८ अप्मायात्स्त्रीत्यागस्यैकं द्वेमुखघंटायाः चत्वारिनागबीटस्य ८९ चत्वारिविवाहस्य द्वेविवाहपुष्पादेः ९० द्वेमंगलस्तंभस्य दशसुरतस्य ९१ चत्वारिक्षत्रियस्य त्रीणिराज्ञः त्रीणिमंडलेशस्य ९२ द्वेसेनायाः

रंतुबलस्थितिः॥ आदिराजः पृथुर्वैण्यः काकुत्स्थस्तु पुरंजयः॥ १३
॥ यौवनाश्वस्तु मांधाता खट्वांगस्तु दिलीपराट्॥ रामो दाशरथिः
कौशल्यार्जुनिर्दशकंठजित्॥ १४॥ मैथिली जानकी सीता वैदेही भू
मिजा च सा॥ रामपुत्रौ कुशलवावेकयोक्त्या कुशीलवौ॥ १५॥ सौ
मित्रिर्लक्ष्मणो मेघनादजिच्चाथ रावणः॥ राक्षसेंद्रो दशमुखो लं
केशो धनदानुजः॥ १६॥ मंदोदरीशः पौलस्त्यो मेघनादस्तु शक्र
जित्॥ हनूमान्हनुमानांजनेयो योगचरानिली॥ १७॥ हिडिंबार
मणो रामदूतश्चैवार्जुनध्वजः॥ ऐंद्रिस्तु वाली वालिश्च सुग्रीवो रवि
नंदनः॥ १८॥ ऐलः पुरूरवा बौधिरुर्वशीवल्लभश्च सः॥ ययातिर्ना
हुषिः शाकुंतलेयो भरतः स्मृतः॥ १९॥ दौष्यंतिः सर्वदमनोऽर्जुनो
बाहुसहस्रभृत्॥ हैहयः कार्तवीर्यश्च पुण्यश्लोकस्तु बाहुकः॥ २००
॥ नलोऽश्वविन्नैषधश्च महाभीष्मस्तु शांतनुः॥ प्रतीपोऽस्य प्रिया
काली दासेयी च झषोदरी॥ २०१॥ विचित्रवीर्यचित्रांगदसूर्योज
नगंधिका॥ व्यासमाता सत्यवती गांगेयो गांदिनीसुतः॥ २॥ देवव्र
तः शांतनवो गांगो गांगायनिश्च सः॥ भीष्मः कोणपदंतश्च स्वेच्छा
मृत्युः पुरावसुः॥ ३॥ धृतराष्ट्रस्त्वांबिकेयः पांडुर्माद्रीपृथापतिः॥
दुर्योधनस्तु कुरुराड्गांधारेयः सुयोधनः॥ धर्मपुत्रोऽजमीढः स्या
त्कर्णानुजो युधिष्ठिरः॥ अजातशत्रुः कंकोऽथ भीमसेनः कटव्रणः
॥ ५॥ वीररेणुर्नागबलो गुणकारो वृकोदरः॥ बककीचककिर्मीर

---

द्वे सेनास्थानस्य त्रीणि पृथोः द्वे काकुत्स्थस्य १३ द्वे मांधातुः द्वे दिलीपस्य चत्वा
रि रामस्य १४ पंच सीतायाः द्वे रामपुत्रयोरेकैकं एकोक्त्यैकं १५ त्रीणि लक्ष्मणस्य
सप्त रावणस्य १६ द्वे मेघनादस्य अष्ट हनूमतः १७ त्रीणि वालेः द्वे सुग्रीवस्य १८
चत्वारि पुरूरवसः द्वे ययातेः चत्वारि भरतस्य १९ चत्वारि कार्तवीर्यस्य पंच नलस्य २००
त्रीणि शांतनोः अष्ट सत्यवत्याः १ दश भीष्मस्य २ ३ द्वे धृतराष्ट्रस्य त्रीणि पांडोः चत्वा
रि सुयोधनस्य ४ षट् युधिष्ठिरस्य एकादश भीमसेनस्य ५ ६

जरासंधहिडिंबजित् ॥६॥ पार्थः किरीटी गांडीवी गुडाकेशो बृहन्नलः ॥ अर्जुनः फाल्गुनो जिष्णुर्विजयश्च धनंजयः ॥७॥ सव्यसाची सुभद्रेशः शब्दभेदी कपिध्वजः ॥ वार्त्तघ्नश्चापि बीभत्सुर्द्रौपदी पांडुशर्मिला ॥८॥ पांचाली पार्षती कृष्णा वेदिजा नित्ययौवना ॥ याज्ञसेन्यथ राधेयो वसुषेणोर्कनंदनः ॥९॥ घटोत्कचांतकः कर्णश्चंपेशः सूतपुत्रकः ॥ द्रोणस्तु गुरुराचार्योऽश्वत्थामा तु कृपीसुतः ॥१०॥ द्रौणायनोऽथ राजर्षिर्जनमेजयसंज्ञकः ॥ पारीक्षितोऽप्यथ जरत्कारुर्यायावरो मतः ॥११॥ प्रियास्य मनसा देवी जरत्कारुरथैतयोः ॥ आस्तीको नाम तनयो विरोचनसुतो बलिः ॥१२॥ बाणो विंध्यावलीपुत्रस्त्वाष्ट्रो वृत्रोऽप्यहिश्च सः ॥ दमघोषसुतश्चैद्यश्चेदिराट् शिशुपालकः ॥१३॥ बार्हद्रथिर्जरासंधः कंसः स्यादुग्रसेनजः ॥ कर्णीसुतो मूलदेवो मूलभद्रः कलांकुरः ॥१४॥ मंत्री ग्रंथिहरो मात्यो द्वाःस्थितो वेत्रधारकः ॥ दौःसाधिको वर्त्तरूको गर्वाटो दंडवासिनिः ॥१५॥ सहपांशुकिलः स्नेही वयस्योऽप्यथ वार्त्तिकः ॥ वार्त्तायनः प्रवृत्तज्ञो मौहूर्तो दैवलेखकः ॥१६॥ चित्तोक्तिः पुष्पशकटी देवप्रश्न उपश्रुतिः ॥ लेखको मसिपण्यः स्याद्द्वारकः किरिकोऽपि सः ॥१७॥ मासीधानी मसिमणिर्मेलाधुर्वर्णकूपिका ॥ मसीजलं तु मेला स्यात्परांजनमसी द्वयोः ॥१८॥ लेखनी वर्णतूली स्याल्लेखो वाचिकहा

---

षोडशार्जुनस्य ७ अष्टद्रौपद्याः ८ सप्तकर्णस्य ९ त्रीणि द्रोणस्य त्रीण्यश्वत्थाम्नः १० त्रीणि जनमजेयस्य द्वे जरत्कारोः ११ द्वे तत्प्रियायाः तत्पुत्रस्यैकं द्वे बलेः १२ द्वे बाणस्य त्रीणि वृत्रस्य चत्वारि शिशुपालस्य १३ द्वे जरासंधस्य षट् कंसस्य १४ त्रीण्यमात्यस्य षट् द्वास्थितस्य १५ त्रीणि वयस्यस्य त्रीणि प्रवृत्तिज्ञस्य द्वे गणकस्य १६ चत्वार्याकाशवाण्याः चत्वारि लेखकस्य १७ चत्वारि मसिधान्याः द्वे मसीजलस्य द्वे कज्जल्याः १८ द्वे कलमस्य चत्वारि लेखस्य

…॥ तांबूलदोवागुलिकः स
वाहकोंगमर्दकः॥ चामरंरोमगुत्संचकेशरंचावचूलकं॥२२॥ कुठे
रुर्मंथरुःप्रोतोसादनंवस्त्रकुट्टिमं॥छत्रंपुटोटजौराजशृंगंकनक
दंडकौ॥ २३॥ हस्तीमहामृगःपीलुःसिंधुरोदीर्घमारुतः॥ राजीवो-
जलकांक्षश्चनिर्झरःकरटीकटी॥२४॥ विलोमजिह्वांतःस्वेदपिं
डुपादलतालकाः॥धरांगःपुष्करीशूर्पकर्णसामजपेचिलौः॥२५॥
करिणीवासितांगंभीरवेघंकुशावुर्धरः॥ वालकव्यालकौराजवाह्यो
विजयकुंजरः॥२६॥ ईशादंतोमहादंतः कर्णास्फाले झलझ्झलो
॥मदप्रयोगोव्यस्तारोविक्कस्तककरिशावकः॥२७॥ आरक्षःकुंभ
संधिःस्यात्संदानोग्रीवतोधरः॥नासापूर्वस्थूलहस्तंदंतमूलेकरी
रिका॥२८॥ शंखकटौदंतमध्यंप्रवेष्टःपृष्ठतल्पनं॥आयस्कारः
प्रजंघाग्रेप्रोहश्चरणपर्वणि॥२९॥ननागात्रावरेनीलीकर्णाराक
पंचे धनी॥आलानंशंकुरक्षोभःपारश्चिर्गजबंधनी॥३०॥पा

---

पत्रीनिबंधनस्यैकं १९ हूलेख्यस्थानस्य हूे मुद्रायाः त्रीणिपथिकस्य हूेप
थिकसंपस्य २० त्रीणिसंदेशस्य हूेउत्कोचस्य हूेअप्रकाशस्य हूेन्यायसारि
ण्याः २१ हूेतांबूलदस्य हूेअंगमर्दकस्य चत्वारिचामरस्य २२ हूेचामरवात
स्य चत्वारिछत्रस्य हूेस्वर्णदंडछत्रस्य २३ द्वाविंशतिर्हस्तिनः २४ २५ हूे
करिण्याः चत्वार्यंकुशावेत्तुः हूेविजयगजस्य २६ हूेगजदंतस्य हूेकर्णास्फा
लस्य हूेप्रमदप्रयोगस्य हूेकरिशावकस्य २७ हूेकुंभसंधेः संदानस्यैकं ना
सापूर्वस्यैकं हूेदंतमूलस्य २८ त्रीणिदंतमध्यस्य हूेपृष्ठतल्पनस्य हूेप्रजंघाग्र
स्य हूेचरणपर्वणः २९ हूेगात्रावरयोरेकैकं पंचकर्णवेधिन्याः त्रीणिगजबं
धनस्तंभस्य ३०

देपि जंभलः॥ ४९॥ शल्काः नपो मिंदुहिता तलं मूलचपेटयोः॥ ता लो गीतक्रियामानेहरिताले द्रुमांतरे॥ ५०॥ लोहे हारमणौ पुंसि यवाग्वां तरला स्त्रियां॥ अग्रद्वारोपि च्चौ तूलं तुलासाहश्ययोस्तुला॥ ५१॥ तमालो वरुणे रक्तस्तापिच्छे तिलके पि च॥ गुवाके पि च तांबूलं विडंगे पि च तंडुलः॥ ५२॥ दुकूलं श्लक्ष्णवस्त्रेपि चार्धे पत्रे छदेदलं॥ धवला गवि नाशं देशक्लृसुंदरयोस्त्रिषु॥ ५३॥ परमाणौ च पीलुः स्याद्देहे चात्मनि पुद्गलः॥ शस्त्राकारेप्यश्वतरौ पिप्पलः पिप्पलं जले॥ ५४॥ शाल्मली शिंशपायां चैव पोतिकायां चापि पिच्छिला॥ सम्भस्युस्रुवली पालिः पंक्तिः कर्णलतापि च॥ ५५॥ वीणादंडे प्रवालो स्त्री विद्रुमे नवपल्लवे॥ नलेकाशे पोटगलः पित्तयुक्ते च पित्तलः॥ ५६॥ पिंगलः स्यात्कपावग्नावाशक्री हिश्च पाटलः॥ फलं जातीफले लाभे बाणाग्रे फलके पि च॥ ५७॥ फेनिलं बदरेरिष्टे बालो ह्रीबेरकेशयोः॥ बलिर्जराश्लथत्वे स्त्री गृहदावकसे बली॥ ५८॥ बलं गंधरसे रूपे क्लीबं वाट्यालके स्त्रियां॥ बहुलः कृष्णपक्षेपि मेला मंदापि वार्दलः॥ ५९॥ दुर्दिने प्यथ वेला स्यात्सिंधोः कूले च भोजने॥ अर्थभेदे प्लवे पुंसि भेलं भीरुत्वदि त्रिषु॥ ६०॥ मेखलाद्रिनितंबेपि ग्रहे ना मंगलं शुभे॥ निकटे पि च मूलं स्याद्दूरे पि च मातुलः॥ ६१ मौलिः कंकेल्लिवृक्षेपि मल्लः पात्रे कपालिनि॥ बलीयसि च मत्स्ये च मंडलं परिधौ गणे॥ ६२॥ बिंबे देशे नाच्शुनि रसालस्त्विक्षुचूतयोः॥ जिह्वाकमलयो र्लोला शालास्यादूहशाखयोः॥ ६३॥ तरुजातौ मत्स्यभेदे शालो हाले नृपे पि च॥ निगडे पुंस्कटीबद्धवस्त्रे च शृंखलं त्रिषु ६४ शालिर्गंधमृगे धान्ये शयालुः कुक्कुरे लसे॥ शकलं वल्कले खंडे शीतलः शिशिरे निले॥ ६५॥ चंडाली तैलमानं स्यात्सारसी स्त्री च कामुकी॥ सिध्मला शुष्कमीने स्त्री त्रिलिंग्यां तु किलासिनि॥ ६६॥ ऋजौ वृक्षे च सरलः सालो वरणास

र्जयोः॥ हस्तिमल्लो गजास्येच हेलावज्ञाविलासयोः॥६७॥ ॥
इति लांताः॥ ॥ यागेच मध्यसंधाने स्नानेचाभिषवः पुमान्
॥ मृतावसत्वेचाभावः स्याद्रजः पुष्पमार्तवं॥६९ आश्रवो गीकृ
तौ चश्रवे आहवो यागसंगरौ॥ उपप्लवो राहू त्यातौ कितवौ मत्तवंच
कौ॥६९॥ खलीने स्त्री कविः पुंसि काव्यकृच्छुक्रसूरिषु॥ कैतवं तु
छले द्यूते राजिकायां स्तुतिः स्तवः॥७०॥ केशवः केशवान्विष्णुर्गोलवो
मुनिलोध्रयोः॥ जीवो स्त्री जीविते पुंसि गुरुजंत्वोः स्त्रियां गुणे॥७१॥
तत्त्वं विलंबिते नृत्ये स्वरूपे परमात्मनि॥ मेघे राज्ञि स्फुरे देवो द्विजि-
ह्वो व्याडसूचकौ॥७२॥ ध्रुवो वटे स्मरारौ च गीतिस्रुक्भेदयोर्ध्रुवा
॥ धवो धूर्ते प्यथ नवो नूतने वायसे स्तुतौ॥७३॥ प्लवो निषादे मर्क-
ट्यां भेके मेलगतौ कपौ॥ पल्लवो विस्तरे षिंगे किसले विटपे वने॥७४
॥ घटादौ पार्थिवो राज्ञि बल्लवः सूदगोपयोः॥ गजे धन्विनि मुक्तेच
पर्शुरामेच भार्गवः॥७५॥ दूर्वा गौरीच भार्गव्यौ सत्तासंसारयोर्भ
वः॥ भावो गौरविते जंतौ पदार्थे भिनयांतरे॥७६॥ माधवो हरिवै-
शाखौ राजीवो मृगमीनयोः॥ रौरवो घोरनरकौ लवश्छेदनलेशयोः
॥७७॥ करंजभित्तुले लट्वा ऽ वद्यपक्षिप्रभेदयोः॥ विश्वं शुंठ्यां सम
स्तेच निर्वाणे विभवो धने॥७८॥ अश्वौघे वाडवं नस्त्री पाताले नाडि
जौर्वयोः॥ वडवा ऽ श्वाकुंभदास्यो र्योगे कीले हरे शिवः॥७९॥ स्फरवं
क्षेमं शिवं श्यामा ऽ मलकी चाभया शिवा॥ बाडवः स्फरसे रागे सैंध
वो लवणाश्वयोः॥८० स्वा स्त्रियां ज्ञातिधनयोः स्वमात्मनि नपुंसकं॥
आधेयधारणे सत्वे मेलके पिच संभवः॥८१॥ ॥ इति वां
ताः॥ ॥ अपभ्रंशोद्युत्पतने भाषाभेदापशब्दयोः॥ टीका
दर्पणा वादर्शा वाशा तृष्णा दिशोः स्त्रियां॥८२॥ प्रभुशंकरयोरी
शा स्त्रियां लांगलदंडके॥ दिगंबरे कयो कीशाः केशो वालप्रचेतसोः
॥८३॥ जीवितेशो यमे नाथे दंशः संहनने पिच॥ सर्पक्षते थक्षानेच

लोचने दर्शने च दृक् ॥ ८४ ॥ नाशः पलायने मृत्यौ निस्त्रिंशौ खड्गनिर्दयौ ॥ निद्रा रात्रिर्हरिद्रा च मृगादौ प्रथमे पशुः ॥ ८५ ॥ पुरोडाशो हविर्भेदे च मस्यां पिष्टकस्य च ॥ रसे सोमलतायाश्च हुतशेषे च कीर्त्यते ॥ ८६ ॥ पाशः कचार्थे संघार्थः कर्णांते शोभनार्थकः ॥ छत्राद्यंते च निंदार्थः पाशः पश्वादिबंधने ॥ ८७ ॥ वार्ताहरे पुरोगे च सहाये च प्रतिस्पशः ॥ लोमशो मेदके पिस्याद्विवशौ वशाविह्वलौ ॥ ८८ ॥ वंशो वर्गे च पृष्ठांशे वेशो वेश्यागृहे पि च ॥ आयत्ततायां प्रभुत्वे छेवशः परवशे त्रिषु ॥ ८९ ॥ दाने रोगे पि च स्पर्शः सदृशं तूचिते समे ॥ ॥ इति शांताः ॥ ॥ भाष्ट्रेषु श्यंबरीषं नाकिशोर हरिशावकेषु ॥ ९० ॥ अभिलाषेऽनुतर्षः स्यात्साने छा चाप्यथामिषं ॥ संभोगोत्कोचमांसेषु उषा बाणात्मजा निशा ॥ ९१ ॥ भल्लूके शोणके च ऋक्षो नक्षत्रे पुंनपुंसकं ॥ ऋषिर्वेदे पि कक्षः कक्षो मूले रुक्षकानने ॥ ९२ ॥ कक्षा वरत्रा प्रकोष्ठस्पर्धोद्ग्रहणिकासु च ॥ कुल्माषं कांजिके ना तु यवके स्या द्यथाविते ॥ ९३ ॥ पापे च कलुषं घोषः शब्दाभीरनिवासयोः ॥ शुचौ दक्षेन तीक्ष्णः स्यात्तर्षौ लिप्सापिपासयोः ॥ ९४ ॥ दक्षः प्रजापतौ ताम्रचूडे हरवृषे पटौ ॥ पौरुषं मानभेदे च पुन्नागे पुरुषो नरे ॥ ९५ ॥ पक्षो मासार्धपार्श्वौ च महिषी राजपत्न्यपि ॥ मूर्खे माने फले माषो मेषो राश्यंतरोरणौ ॥ ९६ ॥ संख्यायां तु न नालक्षं क्लीबं व्याजशरव्ययोः ॥ हरता स्त्रीं दिवालाक्षो शेषो नानंतसीरिणोः ॥ ९७ ॥ उपयुक्तेतरे च स्त्री शैलूषो नटबिल्वयोः ॥ शुश्रूषा परिचर्या च सहर्षः स्पर्धने मुदि ॥ ९८ ॥ ॥ इति षांताः ॥ ॥ योग्यायामंतिके ऽभ्यासो ऽधिवासो स्थानसंस्क्रिये ॥ आख्यायिकापरिच्छेदे चाश्वासो निर्वृतावपि ॥ ९९ ॥ उदर्चिरुत्प्रभे वन्हौ देनः पापापराधयोः ॥ कनीयाननुजे ऽल्पे च कंसो माने ऽसुरांतरे ॥ १०० ॥ तेजसे तस्पात्रे च कुत्सः स्तबकहारयोः ॥ छंदः पद्यश्रुतौ छासु तरो वेगे

बलेपिच ॥१॥ तमः शोकेप्यथहिमतींनाथमैव्रतेतपः ॥ पद्मेस्वर्णेतामरसंनिशादुर्गाचतामसी ॥ २॥ मणिदोषेदरेत्रासो दासीवित्तार्थचेटयोः ॥ झिंट्यांचदासीदीर्घायुर्ऋषिः काकश्चशाल्मलिः ॥३॥ योक्तेचवर्ष्मसंरब्ध्याने स्वान्तेसर सिमानसं ॥ मासश्चंद्रमासयोः पुंसिरक्तेक्षौ महारसः ॥ ४ ॥ राजहंसोनृपाग्रेचजिव्हाभूः शल्लुकीरसा ॥ जलेशरीरधातौचपारदस्वादयोरसः ॥ ५ ॥ भाषाभूः खलकेशसः क्रीडायामपिगोदुहां ॥ रहोरतेचगुह्येचरभसोहर्षवेगयोः ॥ ६ ॥ विहायाः शकुनेपुंसिविहायस्त्वेनपुंसकं ॥ पुत्रादौतर्णकेवर्षे वत्सः क्लीबंतुवक्षसि ॥ ७ ॥ रसेक्रूरेचविकृतौबीभत्सस्त्रिषुनार्जुने ॥ व्यासोमुनौचविस्तारेबर्हिर्नाकुशशुष्मणोः ॥ ८ ॥ अग्रेप्रधानेचशिरः श्रीवासोविष्णुधूपयोः ॥ सुमनाः पुष्पमालत्योः स्त्रियांनादेवधीरयोः ॥ ९ ॥ वीणाभेदेसर्जरसोधूणकेप्यथसारसं ॥ पद्मेनापक्षिणीदौचसरोनीरतडागयोः ॥ १० ॥ हविः सर्पिषिहव्येचहंसस्तुरगसूर्ययोः ॥ निर्लोभेनृपतौविष्णावंतरात्मनिचेष्यते ॥ ११ ॥ ॥ इतिसांताः ॥ ॥ अवग्रहः स्यात्प्रकृतिभावदृष्टिविबंधयोः ॥ अवरोहोवतरणेत्रिदिवेचलतोद्गमे ॥ १२ ॥ आरोहस्तुनितंबेस्याद्दीर्घत्वेचसमुच्छ्रये ॥ शक्तौस्नेहेचाग्रहः स्याद्दोहान्घमवांछयोः ॥ १३ ॥ सूपेचपाकपात्रेचकटाहोमहिषीशिशौ ॥ खड्गकोषेचकलहोदात्यूहस्त्वातकेपिच ॥ १४ ॥ समारंभेपिपटहोब्रह्मण्यपिपितामहः ॥ प्रवाहोव्यवहारेचबहुर्विपुलसंख्ययोः ॥ १५ ॥ वराहः सूकरेमेषमुस्तकेप्यथमूर्छने ॥ अविद्यायांचमोहः स्याद्धूपस्कंधेऽनिलेवहः ॥ १६ ॥ देहनिर्माणसैन्येषुव्यूहः स्यादथविग्रहः ॥ संग्रामेप्रविभागेचदेहविस्तारयोरपि ॥ वैदेही पिप्पलीसीतावणिक्स्त्रीरोचनास्वपि ॥ संक्षेपेपिसंग्रहः स्याद्वसिंहोवार्ताकुवासकौ ॥ १७ ॥ राशिभेदेहरौसिंहः श्रेष्ठार्थेचोत्तरेस्थितः ॥ सोहदेघृततैलादौस्यात्स्नेहोऽप्यव्ययाःपरे ॥

॥१९॥ ॥इतिह्यांताः॥ ॥अथाव्ययाःपरेवाच्यानञ्भावेनिगद्यते॥तद्विरुद्धेतदन्येचनिषेधेपिचदृश्यते॥२०॥सादृश्येन्वेषदर्थेच ह्रिरुग्मध्यविलासयोः॥पुनरर्थेगभोऽर्थेच सङ्ख्यर्थप्रशंसयोः॥२१॥च पादपूरणोपप्लांतरेहेतौविनिश्चये॥ह्राविस्मयेप्रमोदेच ओमेवंप्रणवार्थयोः॥२२॥युक्तार्थेसाधनार्थेचसांप्रतंनद्विदोविदुः॥ हूंवितर्केचानुमतौवार्तायामरुचौकिल॥२३॥प्रातर्दिनेचपूर्वत्रेत्यर्थेपूर्वेद्युरिष्यते॥ ॥इतिनानार्थवर्गः ॥

आनंदेऽस्तुशर्मदिष्ट्याकटवेकटचाद्भुते॥भूर्भुवःस्वस्त्रिभुवनमनागर्थेदरंस्मृतं॥२४॥आमंडमभ्युपगमेनवरंकेवलार्थकम्॥प्रातरर्थेऽनपयनिस्क्षणमात्रेक्षणक्षणं॥२५॥क्षेमपुण्येस्वस्तिनास्त्यादुच्चैरर्थेऽदूकीर्तितम्॥वारंवारंशश्वदर्थेवारंवारेणचेष्यते॥२६॥उताहोयदिवायद्वाकिंवानेतिसमाइमे॥ किंत्वर्थेपितुयद्यर्थेसचेस्योक्तादिवान्वकं॥२७॥अस्त्याहकालसामान्येतिङंतप्रतिरूपकं॥सज्जःसहार्थेनेत्याहनिषेधेयदिशेषगीः॥२८॥विभाषाऽन्यतरस्यांवाविकल्पार्थाःप्रकीर्तिताः॥ तेइतिस्यात्वयेत्यर्थेमयेत्यर्थेचमेइति॥ ॥२९॥ ॥इत्यव्ययवर्गः॥ ॥ ७

---

अथाव्ययानि त्रीण्यानंदार्थस्य द्वेअद्भुतार्थस्य त्रिभुवनस्यैकं ईषदर्थस्यैकं २४ अभ्युपगमार्थस्यैकं केवलार्थस्यैकं प्रातरर्थस्यैकं क्षणमात्रस्यैकं २५ द्वे पुण्यार्थस्य द्वेउच्चैरर्थस्य द्वेशश्वदर्थस्य२६षट्विकल्पार्थस्य द्वेकिंत्वर्थस्य द्वेयद्यर्थस्य २७ कालसामान्यस्यैकं सहार्थस्यैकं निषेधार्थस्यैकं २८ त्रीणिविकल्पार्थस्य त्वयेत्यर्थस्यैकं मयेत्यर्थस्यैकम् २९

लिंगादिसंग्रहे ऽनुक्तममरेणाभिदध्महे ॥ स्त्रियामाजिर्दरज्जानिपु
रुड्ढाषाःसमाःशरत् ॥ ३० ॥ सिकताद्याबहुत्वेपिविंशत्याद्येकवागपि
॥ पुंस्त्वेहाहाहुहूर्ग्रंथिःपाणिः कलिर्द्दतिर्मौलिः ॥ ३१ ॥ अंजलिरंघ्रिः
कुक्षिर्मारकलौ कोत्तरासंगाः ॥ यवकवानसंकेतपोतकर्तगरुच्छदाः
॥ ३२ ॥ श्लेष्मोष्मपापयक्ष्मास्यान्मोनोवातायनस्तनः ॥ फेनाभि
जनकलापनिकाल्याह्वारोह्वारोपलकल्लोलाः ॥ ३३ ॥ फालचषालकी
तंडुलशेवलखलविभवप्रसवाः ॥ आनापजननाडीस्योयुगमंगंपदं
व्रणं ॥ ३४ ॥ आनंदेदुंदभिरथबहुत्वेप्यसवोगृहाः ॥ सक्तवोवल्वजा
लाजादाराःप्राणादशाइति ॥ ३५ ॥ क्लीबेकलत्रविषवीजकटस्वरत्न
तल्पोक्त कुंकुमप्रवीडतृणाक्षराणि ॥ शृंगाटपीठगुदभेषजपृष्टकि
णवंदेवाशप्रभाश्रुचिवुकोडुपसाह्वसानि ॥ ३६ ॥ यकृत्कुहकलिध्मा-
नितीरंकालध्वजानुच ॥ धर्मार्धसारमित्राण्यंगदन्त्यास्यबंधुषु ॥
३७ ॥ पुंनपुंसकयोर्दारुजीवातुस्याणुसीधवः ॥ स्याद्वास्तुहिंगुति
तउसानुकंबुकमंडलु ॥ ३८ ॥ गोमयकुमुदविंबकुविंबशंखाश्र
मसृपास्कवर्णतोरणाः ॥ नूपुरशिखरतूर्याशचृह्वांकुशबर्हिपल्लवाः
॥ ३९ ॥ व्रतदिनमासवर्षादलवल्कलकोटरखंडवासवाः ॥ चंदन
पद्मधर्मकोलाहलकिसलयदेहदोहदाः ॥ ४० ॥ कुलिशध्वजकार्षा
पणनिधानमुस्ताक कारुशृंगवलयाः ॥ पटलप्रवालचषकोपवा
सकासारकटकसंतानाः ॥ ४१ ॥ आकाशकुंजकुतपोदनवारबाण
पुस्तावतंसनखमंडपकच्छपुच्छाः ॥ कांतारकंकणतडागकिरीट
राष्ट्रतीर्थव्रणास्तबकसंक्रमपीठकानि ॥ ४२ ॥ समरसरकरणवि
टपांगनागैरिकदेवतकुटागाराः ॥ प्रोथमुहूर्तदिवसफलानिमास
निदाघमुसलतिलकानि ॥ ४३ ॥ वल्मीकबाल्हीकवृषणाद्रोणगां
डीवनिगडानिच ॥ मुकुलादिश्चविज्ञेयंशिष्टसंदर्भतोपरं ॥ ४४ ॥
अथस्त्रीनपुंसकयोःकेलिर्मणिर्योनिर्मसिर्मुनिः ॥ मरीचिःशाल्म

लिः स्वातिः श्रेणिर्मुष्टिस्तिथिः स्तृणिः ॥ ४५ ॥ ऊर्मिर्गभस्तिरशनिर्वै पार्ष्णीषुधिराशयः ॥ वस्तिश्च किष्कुः कंदुश्च वेश्वतन्निंबबाहवः ॥ ४६ ॥ गंडूषगर्जजागरभुजकीलज्वालवर्तकक्रीडाः ॥ उत्कंठसटवराटकरभसाः स्त्रीत्वेतुटाबंताः ॥ ४७ ॥ शाल्मकोवृश्चिकः कीटः शारस्तूणोघटः कटः ॥ शफरोवेतसश्चामी स्त्रियां ङ्यंताः प्रकीर्तिताः ॥ ४८ ॥ स्त्रीक्लीबयोरुडुर्दामाच्छर्दिर्ज्योतिः सदोर्चिषः ॥ फलकलक्ष्मं वणिज्यंच बडिशक्रोडपाटलं ॥ तारकंरसनंनीतमेतेटाबंतकाः स्त्रियाम् ॥ ङ्यंतास्तुनगरास्थानस्थलानिपुरपाटलं ॥ ५० ॥ त्रिलिंगं तु प्रतिसरस्फुलिंगनखरार्गलाः ॥ कंदरंश्रृंखलंनालं बल्लूरफलमुस्तकाः ॥ ५१ ॥ जंभश्चटाबंताएतेस्त्रियामथबिभीतकः ॥ हरीतकाटकतदकवाटाश्च गुणेवटः ॥ ५२ ॥ मंडलंशलभं भल्लातकंकलशकंदलौ ॥ मृणालामलकोदाडिमश्चङ्यंताः स्त्रियामिमे ॥ करणेल्युट् त्रिषु यथातस्यव्याख्यानमित्यदः ॥ सूत्रकृद्भाष्यकृ शावनुमानइतीक्ष्यति ॥ ५४ ॥ ॥ इतिलिंगादिसंग्रहवर्गः ॥ ॥ दृष्टप्रयोगायेशब्दाः प्रायस्तइहकीर्तिताः ॥ अप्रयुक्तास्तुपाणिन्यादिषु दृष्टाप्युपेक्षिताः ॥ ५५ ॥ ॥ इतितृतीयकांडः समाप्तः इतिश्रीपुरुषोत्तमदेवरचितस्त्रिकांडशेषाभिधानकोषः समाप्तः

छ छ छ छ छ छ छ

समाप्तः

---

मुंबईतज्ञानदर्पणछापखान्यांतछापिलेंशाके१७७६
आनंदनामसंवत्सरेवैशाखशुद्ध ८

षोक्तेश्च क्वचित् ॥३॥ त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति॥ निषिद्धलिंगं शेषार्थं त्वं ताथादि न पूर्वभाक् ॥४॥ रूपाद्यक्तं लिङ्गमुक्तं लिपि प्रान्निश्चिते क्वचित्॥ विशेष्यनिघ्नः नुक्तेऽपि विज्ञेया वाच्यलिंगता॥५॥ गुणे शुक्लादिकस्त्वाद्याः पुंसि स्युस्तद्वति त्रिषु॥ तीक्ष्णाद्याश्च गुणे क्लीबे गुणिलिंगास्तु तद्वति॥६॥ क्लीबपुंसोरपि स्त्रीत्वं क्वाप्यस्त्यविवक्षया॥ जातिवाचकशब्दानामपि तत्स्त्रीविवक्षया॥७॥ उद्भिदः प्रसवे क्लीबे हरीतक्यादयः स्त्रियां ॥ पुष्पे जाती प्रभृतयः स्वलिंगा व्रीहयः फले ॥८॥ प्राङ्नानार्थान्न तल्लिंगं द्वयोर्द्वंद्वे न चैकता॥ शब्दावृत्तिर्न लिङ्गे क्वचित्समानविशेषणे॥९॥ क्लीबे नपुंसके पुंसि स्त्रियां योषिति च द्वयोः॥ त्रिषु चेत्यादि यद्रूपं तल्लिङ्गस्यैव वाचकम्॥१०॥ नानार्थः प्रथमान्तोऽत्र सर्वत्रादौ प्रदर्शितः॥ सप्तम्यन्ताभिधेयेषु वर्तमानो विनिश्चितः॥११॥ एकद्वित्रिचतुःपंचषड्वर्णानुक्रमात्कृतः॥ स्वरकाद्यादिकाद्यन्तवर्गैर्नानार्थसंग्रहः॥१२॥ नानार्थकोशपुस्तकभाराज्जनदुःखहानये कृतिनः॥ मेदिनिकरकृतकोशो विशुद्धलिंगोऽभिलिख्यतामेकः॥१३॥

**कैकम्**

**को** ब्रह्मणि समीरात्मयमदक्षेषु भास्करे॥ कामग्रन्थौ च शिखिनि च पतत्रिपार्थिवे तथा॥१४ मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षजलेषु **कम्**॥

**कद्वि**

**अर्को**ऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ॥१५॥ **अंको** रूपकभेदाङ्कचिन्हरवाजिभूषणे॥ रूपकांशान्तिकोत्संगस्थाने; **कं** पापदुःखयोः॥१६॥ **एकः** संख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु॥ **कर्कः** कर्केतिलवह्नौ शुक्लाश्वे दर्पणे घटे॥१७॥ **कंकः** श्छद्मद्विजे ख्यातो लो

हपृष्ठकृतांतयोः॥ कल्कोऽस्त्रीघृततैलादिशेषे दंभे विभीतके॥१८॥
विड्किट्टयोश्च पापे च त्रिषु पापाशये पुनः॥ काकः स्याद्वायसे वृक्षप्रभेदे
पीठसर्पिणि॥१९॥ शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः॥ काकास्या
त्काकनासायां काकोली काकजंघयोः॥२०॥ रक्तिकायां मलप्यां च काक
माच्यां च योषिति॥ काकं स्मरतबंधे स्यात्काकानामपि संहतौ॥ २१॥
किष्कुर्द्वयोर्वितस्तौ च प्रकोष्ठेऽपि करेऽपि च॥ कोकश्चक्रे वृके ज्ये-
ष्ठ्यां खर्जूरीद्रुमदर्दुरे॥ २२॥ छेको गृहाश्रितमृगपक्षिणो नागरे त्रि
षु॥ टंको नीलकपित्थे च खनित्रे टंकने स्त्रियाम्॥ २३॥ जंघायां स्त्री पु-
मान्कोपे कोशासि ग्रावदारणे॥ तर्कः कांक्षावितर्कोहहेतुशास्त्रेषु क
थ्यते॥ २४॥ त्रिका कूपस्य नेमी स्यात्त्रिकं पृष्ठाधरे त्रये॥ तोकं पु
त्रे स्रुतायां च द्विकः स्यात्काककोकयोः॥ न्यंकुर्मुनौ मृगे पुंसि नाक
स्तु त्रिदिवेंऽबरे॥ २५॥ नाकुर्मुन्यंतरे पृथ्वीधरवल्मीकयोः पुमान्॥ नि
ष्कमस्त्री साष्टहेमशते दीनारकर्षयोः॥ २६॥ वक्षोऽलंकरणे हेमपात्रे हे
मपलेऽपि च॥ २७॥ पंको स्त्री कर्दमे पापे पाकः परिणतौ शिशौ॥ के
शस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेऽपि च॥ २८॥ बकस्तु बकपुष्पे
स्यात्कुबेरे श्रीदे च रक्षसि॥ भूकं छिद्रे च काले च भेको मंडूकमेघयोः
॥२९॥ मुष्को मोक्षकवृक्षे स्यात्संहतौ वृषणेऽपि च॥ मूकस्त्ववाचि-
नादैन्येरकः कृपणमंदयोः॥ ३०॥ राका नद्यंतरे कच्छ्वां नवजातरजः
स्त्रियाम्॥ संपूर्णेंदुतिथौ रेकः शंकानीचविरेचने॥ ३१॥ रोकस्तु
क्रयभिद्दोस्यो रोकं नाविच्चले बिले॥ लंका रक्षःपुरीशाखाशाकिनी
कुलटासु च॥ ३२॥ लोको जने पिष्कवने वल्कं वल्कलशल्कयोः॥ वे
कः पर्याणभागे ना नदीपात्रे च भंगुरे॥ ३३॥ शल्कं तु शकले वल्के श
को जात्यंतरे नृपे॥ शंकुः संख्या स्त्रयादो भित्कीलाशकलुषेषु
ना॥ ३४॥ शंका त्रासे वितर्के च शाको द्वीपांतरेऽपि च॥ शक्रो द्रुमवि
शेषे च पुमान्हरितके स्त्रियाम्॥ ३५॥ शुको व्याससुते कीरे रावण

स्यचमंत्रिणि॥ शिरीषपादपेपुंसिग्रंथिपर्णेनपुंसकम्॥ ३६ शुल्कं घट्टादिदेयेस्याद्दूरादर्थग्रहेस्त्रियां॥ शूका स्त्रीशुंगदलयोः श्लोकः पद्येयशस्यपि॥ ३७॥ शोकं शकगणेस्त्रीणांकरणेसूकरस्यपि॥ बाणवातोत्पलेस्तोकस्त्रिष्वल्पेचातकेपुमान्॥ ३८॥ ॥
कत्रिः ॥ अशोकस्त्रिषुनिःशोकेपुंसिकंकेल्लिपादपे॥ स्त्रियांतुकटुरोहिण्यांपारदेस्यान्नपुंसकम्॥ ३९॥ अलका कुबेरपुर्यामस्त्रियांचूर्णकुंतले॥ अर्भाकः कामुकेङ्कुरेनिर्भयेत्रिषुनाकवौ॥ ४०॥ अनीकोऽस्त्रीरणेसैन्येप्यणुकोनिपुणाऽल्पयोः॥ अलीकमप्रियेऽपिस्याद्दिव्यसत्येनपुंसकं॥ ४१॥ अनूकं तुकुलेशीलेपुंसिस्याद्गतजन्मनि॥ अंशकं श्लक्ष्णवस्त्रेस्याद्वस्त्रमात्रोत्तरीययोः॥ ४२॥ अंतिकं निकटेवाच्यलिंगंस्त्रीशातलौषधौ॥ चुल्यांज्येष्ठभगिन्यांचनाट्योक्त्याकथ्यतेऽतिका॥ ४३॥ अलर्कोधवलार्केस्याद्योगोन्मादितकुक्कुटे॥ अंबिका पार्वतीमात्रोर्धृतराष्ट्रस्यमातरि॥ ४४॥ अंधिका द्यूतभेदेचरजन्यामपियोषिति॥ अम्लिकातिंतिडीचाम्लोद्गारेचांगेरिकास्वच॥ ४५॥ अर्भकः कथितोबालेमूर्खेपिचकृशेपिच॥ आनकः पटहेभेर्यांमृदंगेध्वनदंबुदे॥ ४६॥ आढकी तुतुवर्यांस्त्रीपरिमाणांतरेत्रिषु॥ आलोकस्तुपुमान्द्योतेदर्शनेबंदिभाषणे॥ ४७॥ आन्हिकं दिनानिर्वर्त्येत्रिलिंगमथनद्वयोः॥ नित्यक्रियाभोजनयोर्वृंदेप्रकरणस्यच॥ ४८॥ आतंको रोगसंतापशंकासुमुरजध्वनौ॥ इक्ष्वाकुः कटुतुंब्यांस्त्रीसूर्यवंशनृपेपुमान्॥ ४९॥ उलूकः पुंसिकाकारातींद्रेभारतयोधिनि॥ उदर्कः पथ्यकालीनफलेमदनकंटके॥ ५०॥ उष्णाकस्तुनिदाघेस्यादातुरेक्षिप्रकारिणि॥ उष्ट्रिका मृत्तिकाभांडभेदेपिकरभास्त्रियाम्॥ ५१॥ ऊर्मिका चांगुलीयेस्याद्वस्त्रभंगतरंगयोः॥ कनकं हेम्निपुंसिस्यात्किंशुकेनागकेसरे॥ ५२॥ धुस्तूरेकांचनारेचकालीयेचंपकेऽपिच॥ करकस्तु

पुमान्पक्षिविशेषे दाडिमेपिच॥ ५३॥ द्वयोर्मेघोपलेनस्त्रीकरंकेऽपक मंडलौ॥ क्रमुकस्तुपुमान्भद्रमुस्तकेब्रह्मदारुणि॥ ५४॥ फलेकार्पासिकायाश्चपट्टिकालोध्रपूगयोः॥ कटकोस्त्रीनितंबेद्रेः दंतिनांदंतमंडने॥ ५५॥ सामुद्रलवणेराजधानीवलययोरपि॥ कटुकाकटुरोहिण्यांस्त्रियांद्योषेनपुंसकं॥ ५६॥ कंटकोनस्त्रियांक्षुद्रशत्रौमत्स्यादिकीकसे॥ नैयोगिकादिदोषेक्रौस्याद्रोमांचद्रुमांगयोः॥ ५७ करंकोमस्तकेऽशस्थनालिकेरफलास्थनि॥ कलंको ऽके पवादेच कालायसमलेऽपिच॥ ५८॥ कर्णिका करिहस्ताग्रेकरमध्यांगुलावपि॥ क्रमुकादिवृंतेषुवराटकर्णभूषणे॥ ५९॥ कणिका कथ्यतेऽत्यंतसूक्ष्मवस्त्वऽग्निमंथयोः॥ कचाकुस्तदुराधर्षेदुःशीलेचबिलेशये॥ ६० ॥ कंचुकोवारबाणेस्यान्निर्मोकेकरभेपिच॥ वर्धापकगृहीतांगस्थितवस्त्रेचचोलके॥ ६१॥ कंचुक्योषधिभेदेऽथकारिकानटयोषिति॥ कृतौविवरणश्लोकेशिल्पयातनयोरपि॥ ६२॥ नपुंसकंतुकर्मादौकारकंकर्तरित्रिषु॥ कामुकःकमनेऽशोकपादपेचाऽतिमुक्तके॥ ६३॥ कार्मुकंधनुषिस्यान्नावेणौकर्मक्षमेऽन्यवत्॥ काचूकःकुक्कुटेकोकेस्यात्सीनमस्तककाकयोः॥ ६४॥ क्षारकःपक्षिमत्स्यादिपिटकेजालकेऽपिच॥ कालिकाचंडिकाभेदेकात्स्र्न्येवृश्चिकपत्रयोः॥ ६५॥ क्रमदेयवस्तुमूल्येधूसरीनवमेघयोः॥ पटोलशाखारोमालीमांसीकाकीशिवासुच॥ ६६॥ मेघावलौच किंपाकोमहाकालफलाज्ञयोः॥ कीचकोदैत्यभिद्वातहतसस्वनवंशयोः॥ ६७॥ कीटकः कृमिजातौनानिष्ठुरेपुनरन्यवत्॥ कुरुकंतुपटोलेस्यात्सम्बद्धश्लोकसंहतौ॥ ६८॥ पुंसिवल्मीककाकेंदुकुलश्रेष्ठेषुकथ्यते॥ कुल्लुकास्त्वग्निनौचक्त्यकुशिकोमुनिसर्जयोः॥ ६९॥ कुषाकुःकपिवह्न्यर्केनापरोत्तापिनित्रिषु॥ कुलिकोनागभेदेस्यात्कटुभेदेकुलसत्तमे॥ ७०॥ कुरकःकोकिलाक्षेस्यात्दारकरेतिलकद्रुमे॥ कूपकोगुण-

ह्रस्वे स्यात्तैलपात्रे ककुंदरे॥ ७१॥ उदपाने च्युतायां तु कूपिका ऽभो गतोपले॥ कूलकं नस्त्रियां स्तूपे पुंसि स्यात्कृमिपर्वते॥ ७२॥ कूर्चिका सूचिकायां च तूलिकायां च कुड्मले॥ कृपाटां कुडके क्षीरविकृतावपि योषिति॥ ७३॥ कृषकः पुंसि फाले स्यात्कर्षके त्वभिधेयवत्॥ कोरको ऽस्त्री कुड्मले स्यात्कक्कोलकमृणालयोः॥ ७४॥ कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः॥ तथा परंपरायातमंगले च कुतूहले॥ ७५॥ विवाहसूत्रगीतादिभोगयोरपि नद्वयोः॥ कौशिको नकुले व्यालग्राहे गुग्गुलुशक्रयोः॥ ७६॥ कोषज्ञोलूकयोश्च स्याद्विश्वामित्रमुनावपि॥ कौशिकी चंडिकायां च नदीभेदे च योषिति॥ ७७॥ खनको नोंदुरे संधिचौरे त्रिष्ववदारके॥ खड्गिको महिषीक्षीरफेनशौनिकयोरपि॥ ७८॥ स्यात्खोलकस्तपाके शिरस्त्रवल्मीकपूगकोशेषु॥ गणिकायूथीवेश्याभीतकारीषु नातु दैवज्ञे॥ ७९॥ ग्रंथिकं पिप्पलीमूले गुग्गुलुग्रंथिपर्णयोः॥ करीरे पुंसि दैवज्ञे सहदेवाख्यपांडवे॥ ८०
गंडकः पुंसि खड्गे स्यात्संख्याविद्याप्रभेदयोः॥ अवच्छेदे ऽतरायेच गंडकी सरिदंतरे॥ ८१॥ ग्राहको घातिविहगे धान्यानां च गृहीतरि॥ गांधिको लेखके ऽपि स्यात्सुगंधिव्यवहारिणि॥ ८२॥ गुंडको मलने धूलौ कलोक्तिस्नेहपात्रयोः॥ गृह्यको निभ्रके छेके गैरिकं धातुरुक्मयोः॥ ८३॥ गोलको विधवापुत्रे जारात्स्यान्मलिके गुडे॥ गोरंकुः स्यात्तु मान्याक्षिभेदे लमकवंदिनोः॥ ८४॥ चषको ऽस्त्री सुरापात्रे मधुमद्यप्रभेदयोः॥ चुलकः प्रसृतौ भांडभेदे चुलुकवत्पुमान्॥ ८५॥ चतुष्की मसकहर्म्यपुष्करिण्यंतरेपि च॥ चारकः पालके ऽश्वादेः स्यात्संचालकबंधयोः॥ ८६॥ चित्रकं तिलके ना तु व्याघ्रभित्त्वंचुपाठिषु॥ चुंबकश्चुंबनपरे धूर्तग्रंथस्कांतयोरपि॥ ८७॥ बहुग्रंथैकदेशज्ञे धनः स्योत्काविलंबने॥ चुल्लकी शिशुमारे ऽपि कुंडीभेदे कुलांतरे॥ ८८॥ चूलिका नाटकस्यांगे कर्णमूले च हस्तिनां॥ चून

कः कूपकेप्याम्रेजनकः पितृभूरुहोः॥ ८९॥ जंबूकः फेरवेनीचेपश्चिमाशापतावपि॥ जतुकाजिनपत्रायां जतुकं हिंगुलाक्षयोः॥९० जाहकोघोंघमार्जारखड्गांकारुडिकासुच॥ जालकं कोरकेदंभे कुलायानाययोरपि॥ ९१॥ नपुंसिमोचकफलेस्त्रियांतु वसनांतरे॥ भिस्सारजलौकायामपिस्याद्दिथवास्त्रियां॥ ९२॥ प्रटानामश्मरचितां गरक्षिण्यांच जालिका॥ जालिकोवाच्यवक्रामजालिजालोपजीविनोः॥ जीवकः प्राणकेपीतशालकृपणयोरपि॥ कूर्चशीर्षेपिपुंसिस्यादाजीवेजीविकामता॥ ९४॥ त्रिषुसेविनिहस्त्याशिजीविनोराहितुंडिके॥ झल्लिको हृत्तेनपटेस्त्रियांद्योतेच झिल्लिका॥ ९५॥ आतपस्यरुचौझिल्ल्यां टुंटुकः शोणकाल्पयोः॥ डिंबिकाजलबिंबेस्याच्छोणके कामुकस्त्रियां॥ ९६॥ तंडकः खंजनेफेनेसमासप्रायवाचिच॥ गृहदारुतरुस्कंधमायाबहुलकेष्वपि॥ ९७॥ तक्षकस्तुपुमान्नागराजभेदेच वर्द्धकौ॥ तारको दैत्यभित्कर्णधारयोर्नेहयो दृशि ॥९८॥ कनीनिकायामृक्षेच नपुमांस्त्रातरित्रिषु॥ तिलको द्रुमरोगाश्वभेदेचतिलकालके॥ ९९॥ क्लीबंसौवर्चलक्लोम्नोर्नस्त्रियांतुविशेषके॥ त्रिशंकुर्नोराजभेदेशलभेच्चपतंगके॥ १००॥ तुरुष्कः सिल्हकेम्लेंछजातौदेशांतरेऽपिच॥ तूलिका कूर्चिकायांच शय्योपकरणेऽपिच॥ १०१॥ दर्शकः स्यात्प्रतीहारे दर्शयितृप्रवीणयोः॥ दारको बालके ऽपिस्याद्भेदके त्वभिधेयवत्॥ १०२॥ द्रावको ग्रावभेदेस्याद्विदग्धेमोषकेऽपिच॥ दीपकं वागलंकारेवाच्यवद्दीपिकारके॥ १०३ दीप्यकस्त्वाः जमोदायांयवानीबर्हिचूडयोः॥ दुच्छुकोगंधकुट्यांस्याद्विहाराद्यवकाशके॥ ४॥ दूषिकानूलिकायांच मलेस्याल्लोचनानस्यच॥ धनिका साधुनार्यांधन्याकेत्रिषुसाधुधनिनोश्च॥ ५॥ स्याद्धेनुका करिण्यांधेनावपिनातुदानवविशेषे॥ धेनुकं करणेस्त्रीणांधेनूनामपिसंहतौ॥ ६॥ नर्त्तकः केवलेपोटगलचारणयोर्नटे॥

नर्तकी लासिकायांच करेण्वामपियोषिति॥ ७॥ नग्निका पिकुमार्यांस्यात्पुमान्क्षपणवंदिनोः॥ नरकः पुंसिनिरयेदेवारातिप्रभेदयोः॥ ८॥ नंदको हरिखड्गेच हर्षकेकुलपालके॥ नालीकः शरशल्यांगेष्वब्जखंडेनपुंसकं॥ ९॥ नायको नेतरिश्रेष्ठहारमध्यमणावपि॥ निर्मोको मोचनेव्योम्निसन्नाहेसर्पकंचुके॥ १०॥ नीलिका नीलिनीक्षुद्ररोगशेफालिकास्वच॥ पराकस्त्वस्त्रेखड्गेप्रसेकः सेचनेश्च्युतौ॥ ११॥ प्रतीकोऽवयवेऽपिस्यात्प्रतिकूलविलोमयोः॥ पद्मकं स्यात्पद्मकाष्ठबिंदुजालकयोरपि॥ १२॥ पक्षकस्तुपुमान्पार्श्वद्वारेचपार्श्वमात्रके॥ पल्यंको मंचपर्यंकदृषीपर्यस्तिकास्वच॥ १३॥ पताका वैजयंत्यांच सौभाग्यनाटकांकयोः॥ पातुकः पतयालौस्यात्प्रपातजलहस्तिनोः॥ १४॥ प्रापकः सत्वजातीयेजीवकद्रुमचोलयोः॥ पाटकः स्यान्महाकिष्कौकटकांतरवाद्ययोः॥ १५॥ अक्षादिचोलने मूलद्रव्यापचयरोधसोः॥ पालंकः शल्लकीशाकभेदयोः प्राजिपक्षिणि॥ १६॥ पावकोऽग्नौसदाचारेवह्निमंथेचचित्रके॥ भल्लातकेविडंगेऽथ प्रियकः पीतशालके॥ १७॥ नीपेचित्रमृगेच्चालौप्रियंगौकुंकुमेऽपिच॥ पिण्याको स्त्रीनिल्वकल्के हिंगुबाल्हीकसिल्हके॥ १८॥ पिनाकोऽस्त्रीरुद्रचापेपांशुवर्षत्रिशूलयोः॥ पिटकस्त्रिषुविस्फोटे मंजूषायांपुनःपुमान्॥ १९॥ पिष्टको घृतपूपादौनेत्ररोगांतरेऽपिच॥ पुलकः कृमिप्रभेदेप्रस्तरभेदेचमणिदोषे॥ २०॥ रामांचेहरितालेगजान्नपिंडेचगंधर्वे॥ पुलाकस्तुच्छधान्येस्यात्संक्षेपेभक्तसिक्थके॥ २१॥ पुष्पकं रीतिपुष्पेचविमानेधनदस्यच॥ नेत्ररोगे तथारत्नकंकणेचरसांजने॥ २२॥ लोहकांस्येमृगदंशारशाकद्र्यांचनपुंसकं॥ स्यात्पुत्रिका पुत्तलिकादुहित्रोर्यावतूलके॥ २३॥ नापुंसेसरभेधूर्तेशैलभृत्प्रभेदयोः॥ पूर्णकः स्वर्णचूडेस्यान्नासाछिन्यांतुपूर्णिका॥ २४॥ पूदाकुर्वृश्चि

केव्याघ्रेसर्पचित्रकयोः पुमान्॥ पृथुकः पुंसिचिपिटेशिशौस्याद
भिधेयवत्॥२५॥ पेचकोगजलांगूलमूलोपांतेचकौशिके॥ पेटकं
पुस्तकादीनांमंजूषायांकदंबके॥२६॥ वल्मीकोरोगभेदेचनाकौच
पुन्नपुंसकम्॥ बंधूकंबंधुजीवेस्याद्बंधूकःपीतशालके॥ २७॥ बं
धकःस्याद्विनिमये पुंश्चल्यांस्याच्चबंधकी॥ बाहुलः कर्कटे
चार्केदात्यूहेजलखातके॥२८॥ बराकः शंकरेपुंसिशोचनीयेऽभि
धेयवत्॥ बालकस्तुशिशौवाजिवालधौहयहस्तिनोः॥२९॥ अंगु
लीयकह्रीवेरवलयेपुंसिबालिका॥ बालायांवालुकापत्रिकाह्
लाकर्णभूषणे॥३०॥ बारकोऽश्वगतौपुंसिवाच्यवत्स्यान्निषेधके॥
बालुकासिकतास्रस्याद्वालुकंएलबालुके॥३१॥ भर्मकंरोग
भेदेस्याद्डिंककलधौतयोः॥ भ्रामकोजंबुकेधूर्तेसूर्यावर्त्तेऽश्म
भेदयोः॥३२॥ भालांकःकरपत्रेस्याच्छाकभेदेचरोहिते॥ महा
लक्षणसंपन्नपुरुषेकच्छपेहरे॥३३॥ भूमिकारचनायांस्याद्वे
शांतरपरिग्रहे॥ भूतीकमपिभूनिंबेदीप्यकपूरकेतृणे॥३४॥ मधु
कामधुपर्ण्यांस्यान्मधुकंक्लीतकेखगे॥ वल्यंतरोनामशकोरोग
कीटप्रभेदयोः॥३५॥ मंडूकःशोणकेमुन्यंतरेस्याद्गूढवर्चसि॥ मं
डूकपर्ण्यांमंडूकी मल्लिकोहंसभिद्यपि॥ ३६॥ मल्लिकातृणभूत्ये
ऽपिमीनमृत्पात्रभेदयोः॥ मामकंस्यान्मदीयार्थेत्रिषुपुंसितुमातुले॥
३७॥ मातृकाधात्रिकामात्रोर्देवीभिद्वर्णमालयोः॥ मालिकासप्तला
पुत्रीग्रीवालंकरणेषुच॥ ३८॥ पुष्पमाल्येनदीभेदेपक्षिभेदेतुमालि
कः॥ मेचकस्तुमयूरस्यचंद्रकेश्यामलेपुमान्॥ ३९॥ तद्युक्तेवा
च्यवत्क्लीबंस्रोतोंजनांधकारयोः॥ मोचकःकदलीशिग्रुमुनिमोचक
विरागिषु॥४०॥ मोदकःखाद्यभेदेस्त्रीहर्षुकेपुनरन्यवत्॥ य
मकंयमजेशब्दालंकारेपुंसिसंयमे॥४१॥ याजकस्तुगजेराज्ञो
याज्ञिकेप्यथयाज्ञिकः॥ याजकेचकुशेचाथ युतकंसंशयेयुगे॥

॥ ४२॥ नारीवस्त्रांचलेयुक्तेचलनाग्रेऽपिपोतके॥ यूथिकाम्लानकेपु-
ष्पविशेषेपिचयोषिति॥ ४३॥ रसिकास्त्रीरसालेक्षुरसयोःसरसेत्रि
षु॥ रक्तकोऽम्लानबंधूकरक्तवस्त्रानुरागिषु॥ ४४॥ राजिकापिच
केदारेराजसर्षपरेखयोः॥ रात्रकंपंचरात्रेनावेश्यावेश्मान्द्ववासिनि
॥ ४५॥ रूचकोबीजपूरेचनिष्केदंतकपोतयोः॥ नद्वयोःसर्जिकाक्षारे
प्यश्वाभरणमाल्ययोः॥४६॥ सौवर्चलेपिमांगल्यद्रव्येचाप्युत्कटेपि
च॥ रुंडिकाद्वारपिंड्यांचदूतिकायांरणक्षितौ॥ ४७॥ रूपकंनाटके
मूर्तेकाव्यालंकरणेपिच॥ रेणुकापिहरेणौचजामदग्न्यस्यमातरि॥
४८॥ रोहकःप्रेतभेदेनारोदरित्रिषुविश्वनः॥ लंपाको लंपटेदेशे ला
सकोलास्यकारिणि॥ ४९॥ मयूरेलसकेचाथ लूनको भेदितेपशौ॥
लोचकोमांसपिंडेक्षितारकायांच कज्जले॥५०॥ ललाटाभरणेस्त्री
णांकदलीनीलवस्त्रयोः॥ निर्बुद्धौकर्णपूरेचभ्रूव्यांभूश्लथचर्मणि॥
५१॥ वस्ककंरोमकेपुंसिशिवमल्यर्कपर्णयोः॥ वर्णकश्चारणेस्त्रीतु
चंदनेचविलेपने॥ ५२॥ द्वयोर्नील्यादिषुस्त्रीस्यादुत्कर्षकथनस्यच॥
वर्तकस्तुखुरेऽश्वस्यविहगेवर्तकीद्वयोः॥ ५३॥ वंचकस्तरवले
धूर्तेगृहबभ्रौचजंबुके॥ व्यलीकमप्रियाऽकार्यवैलक्ष्येष्वपिपीडने
॥५४॥ नानागरेऽथ बाल्हीकं वाल्हीकंधीरहिंगुनोः॥ द्वावेनौपुंसि
देशस्यप्रभेदेतुरगांतरे॥ ५५॥ वार्दुकं वृद्धसंघाते वृद्धस्यभावकर्मणोः
॥ वार्षिकंत्रायमाणायांक्लीबंवर्षाभवेत्रिषु॥ ५६॥ वालकोऽस्त्रीपा
रिहार्येत्रिषुस्यादंगुलीयके॥ वितर्कस्तुपुमानूहेसंशयेचनिगद्यते॥
५७॥ विपाकःपचनेस्वादेकर्मणोविसदृक्फले॥ विवेकःस्याज्जल
द्रोण्यांपृथग्भावविचारयोः॥ ५८॥ वृश्चिकश्चद्रुणेराशौशूककीटौ
षधीभिदोः॥ वृषांकःशंकरेसाधौभल्लातकमहल्लयोः॥ ५९॥ वैजिकं
शिग्रुतैलेस्याद्वेतोसद्योऽकुरेतुना॥ शलाकाशल्यमदनशारिकाशल्ल
कीषुच॥ ६०॥ छत्रादिकाष्ठीशरयोःशल्लकीपशुदृशयोः॥ शंबूकोग

जकुंभांते घोंगे च शूद्रतापसे॥ ६१॥ जलजंतुविशेषे च शंबूकाननपुंसके॥ शंखकं वलये कंबा वस्त्री पुंसि शिरोरुजि॥ ६२॥ शार्ककः स्याद्दुग्धफेनशर्करापिंडयोः पुमान्॥ शिशुकः शिशुमारे स्याद्बालकोलूपिनोरपि॥ ६३॥ शीतकः शीतकाले च सुस्थिते दीर्घसूत्रिणि॥ शूलकः प्रावटे पि स्याद्रसेपि परिकीर्तितः॥ ६४॥ सस्यको मणिभेदे ऽसौ संपर्कोमेलके रतौ॥ संपाकस्तर्कके धृष्टे त्रिषु नाचतुरंगुले॥ ६५॥ स्यमीका नीलिकायां स्त्री स्यमीको नाकुवृक्षयोः॥ स्वस्तिको मंगलद्रव्ये च तुष्कगृहभेदयोः॥ ६६॥ सरको ऽस्त्री सीधु पाने शीधुपात्रे क्षुसीधुनोः॥ अछिन्नाऽध्वगपंक्तौ च सायकः शरखड्गयोः॥ ६७॥ स्थासकः पुंसि चार्चिक्ये जलादेरपि बुद्बुदे॥ सूचकः सीवनद्रव्ये बोधके पि शुनेशुनि॥ ६८॥ ओतौ काके सूतको ऽस्त्री पारदे न द्वयोर्जनौ॥ सूदाकुर्नाऽनिले वज्रे ज्वलने प्रतिसूर्यके॥ ६९॥ सेवकस्तु प्रसेवे ना वाच्यलिंगोऽनुजीविनि॥ सेचकः स्यात्पुमान्मेघे वाच्यलिंगस्तु सेक्तरि॥ ७०॥ सैनिकः सैन्यरक्षे च स्यात्सेना समवेतके॥ हारकः कितवे चौरे गद्यविज्ञानभेदयोः॥ ७१॥ हुडुक्को वाद्यभेदे च मत्तदात्यूहपक्षिणि॥ हेरुको बुद्धभेदे स्यान्महाकालगणेपि च॥ ७२॥ ॥ कचतुः॥ भवेदलिमको भेके पिके ऽलौ पद्मकेसरे॥ मधूके ऽप्यथालिपको भृंगकोकिलकुक्कुरे॥ ७३॥ अंगारकः कुजे ऽपि स्यात्दुन्मुकांशे कुरुंटके॥ भवेदंगारिका चेक्षुकांडे किंशुककोरके॥ ७४॥ स्यादश्मंतकमुद्धाने मल्लिकाछदने ऽपि च॥ आकल्पकस्तमोमोह ग्रंथावुत्कलिकामुदोः॥ ७५॥ आक्षेपको ऽनिलव्याधौ व्याधे निंदाकरे पि च॥ भवेदाखनिकश्चौरे शूकरे मूषके पि च॥ ७६॥ कथितोत्कलिको कंठाहेलासलिलवीचिषु॥ एडमूको ऽन्यलिंगः स्याच्छठे वाक्श्रुतिवर्जिते॥ ७७॥ कठिल्लकस्तु पर्णाशे वर्षाभूकारविल्लयोः॥ कपर्दको वराटे स्याज्जटाजूटे च धूर्जटेः॥ ७८॥ कर्कोटकः स्यान्मालूरकाद्रवेयभ्रमभेदयोः॥

कलविंकः पुमान्ग्रामचटकेपि कलिंगके ॥ ७९ ॥ कनीनिका ता रकेक्ष्णः स्यात्कनिष्ठांगुलावपि ॥ कार्पटिको ऽन्यमर्मज्ञेच्छात्रे पुंसि शठेत्रिषु ॥ ८० ॥ काकरुकोनग्नदंभस्त्रीजितोलूकभीरुषु ॥ निंबे कुरुबकः शोणाम्लानझिंटीप्रभेदयोः ॥ ८१ ॥ कुरुंटकः पीनपुष्पाम्लानझिंटिकयोः पुमान् ॥ कृकवाकुर्मयूरेपि सरठेचरणायुधे ॥ ८२ ॥ कोशातकः कठेपुंसि पटोल्याघोषकेस्त्रियां ॥ अथकौक्कुटिको ऽदूरप्रेरिताक्षेचदांभिके ॥ ८३ ॥ कौलेयकः सारमेये कुलीने ऽथ खरालिकः ॥ ग्रामणीमंडिनाराचेष्युपधानेच पुंस्ययं ॥ ८४ ॥ भवेद्गुणनिकानृत्ये शून्यांकेपाठनिश्चितौ ॥ गोकंटको गोक्षुरके स्थपुटेचगवांखुरे ॥ ८५ ॥ गोमेदकं पीतमणौकाकोलेपत्रकेऽपिच ॥ स्याद्गोकुलिकोवलिरेपंकस्थगव्युपक्षके ॥ ८६ ॥ अथ घर्घरिका क्षुद्रघंटावादित्रदंडयोः ॥ चर्चरीका महाकाले केशविन्यासशाकयोः ॥ ८७ ॥ चंडालिका किंनरायासुमायामोषधीभिदि ॥ अथचातुरकश्चक्रगंडो पुंस्यभिधेयवत् ॥ ८८ ॥ गोचरे लोचनस्यापि चाटुकारेनियंतरि जर्जरीकं बहुछिद्रे जरातुरेपि वाच्यवत् ॥ ८९ ॥ जीवंतिका गुडूच्यांचजीवाख्यशाकवंद्योः ॥ जैवातृकः पुमान्सोमे दीर्घायुः कृशयोस्त्रिषु ॥ ९० ॥ नर्त्तरीकं वहित्रेस्यान्नद्योः पारगेत्रिषु ॥ तिक्तशाकस्तु खदिरेवरुणे पत्रसुंदरे ॥ ९१ ॥ त्रिवर्णकं गोक्षुरके त्रिफलायां कटुत्रिके ॥ दलाढकः स्वयंयातनिलेपृश्न्यांचगैरिके ॥ ९२ ॥ फेनखातकयोर्नागकेसरेच्चमहत्तरे ॥ दंदशूकस्तु पुल्लिंगोराक्षसेच सरीसृपे ॥ ९३ दासेरकस्तु करभे दासीपुत्रेच धीवरे ॥ नियामकः कर्णधारे पोतवाहे नियंतरि ॥ ९४ ॥ निश्वारकः पुरीषस्य क्षयेस्वैरे समीरणे ॥ निर्ग्रंथकः स्यात्क्षपणे निष्फलेप्यपरिच्छदे ॥ ९५ ॥ प्रचलाकः शराघाते शिखंडेच भुजंगमे ॥ प्रकीर्णकं चामरेस्याद्विस्तारे नातुरंगमे ॥ ९६ ॥ पंचालिका स्त्रियां वस्त्रपुत्रिकागीतिभेदयोः ॥ स्यात्पिप्पलकं वक्षोज

वृंते सीवनसूत्रके॥१९७॥ पिंडीतकः स्यात्तगरे मदनाख्यमहीरुहे॥ अथ पुष्कलको गंधमृगे क्षपणकीलयोः॥९८॥ पुंडरीकं सिताभोजे सितच्छत्रे च भेषजे॥ पुंसि व्याघ्रेऽग्निदिङ्नागे कोशकारांतरे पि च॥९९॥ भवे त्पूर्णानकं वह्मापनेच पटहेपि च॥ फर्फरीक श्चपेटे स्यात्फर्फरीकं तु मार्दवे॥२००॥ बलाहको गिरौ मेघे दैत्यनागविशेषयोः॥ वराटकः पद्मबीजकोशे रज्जौ कपर्दके॥२०१॥ बकेरुका बलाकाभिद्वाता वर्जितशाखयोः॥ वरंडकस्तु मातंगवेद्यां यौवनकंटके॥२ वर्तुलेऽथो वाणिजको वाडवाग्नौ वणिज्यपि॥ वृंदारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु॥३॥ अथ भ्रमरको भृंगे गिरिके चालकांतरे॥ भट्टारको नृपे नाट्यवाचा देवतपोधने॥४॥ भयानकः स्मृतो व्याघ्रे रसे राहौ भयंकरे॥ भार्यौढिकः पुमान्भार्यानिर्जिते हरिणांतरे॥५ भवेन्मरुबकः पुष्पविशेषे मदनद्रुमे॥ मंडोदकं चित्तरागे क्लीबमानर्पणेपि च॥६॥ भवेन्मंडलकं बिंबेकुष्ठभेदे च दर्पणे॥ अथ मर्कटकः सस्यभेदे वानरलूतयोः॥७॥ मयूरकोप्यपामार्गे क्लीबं तुत्थांजने पुनः॥ माणवको हारभेदे बाले कुपुरुषेपि च॥८॥ मृष्टेरुको वदान्येपि मिष्टाशिन्यतिथिद्विषि॥ रतहिंकं स्याद्दिवसे सुखस्नानेष्टमंगले॥९॥ राधरंकुः पुमान्सीरे सीरकेच घनोपले लालाटिकः प्रभोर्भावदर्शिन्याश्लेषणांतरे॥१०॥ कार्याक्षमे लेखनिकः कथितो लेखहारके॥ लेखेषु परहस्तेन स्वहस्तस्य च लेखके॥११॥ वर्तरूको नदीभेदे काकनीडे जलावटे॥ विनायकस्तु हेरंबे तार्क्ष्ये विघ्ने जिने गुरौ॥१२॥ वितुन्नकस्तु धान्याके झाटामलमयूरके॥ विशेषकोऽस्त्री तिलके विशेषयितरि त्रिषु॥१३॥ विदूषकः स्याद्विटे परनिंदाकरेऽपि च॥ वैनाशिकः स्यात्क्षणिके परतंत्रोर्णनाभयोः॥१४॥ वैदेहको वाणिजके शूद्राद्वैश्यासुतेपि च॥ वैतालिकः पुमान्स्वैद्दृत्तालेबोधकरे त्रिषु॥१५॥ शतानीकस्तु वृद्धे स्यान्मुनिराजप्रभेदयोः॥ शा-

लाटूकः शृगालेस्यात्सारमेयेवलीमुखे ॥१६॥ शिलाटकः पुमानट्टेविले
येपरिकीर्तितः ॥ शृगालिका शिवायांस्यात्त्रासादपिपलायने ॥ १७॥ शृं
गाटकं भवेद्वारिकंटकेचचतुष्पथे ॥ संतानिकापिक्षीरादिसारेमर्क
टजालके ॥१८॥ संदंशिकापिस्कुटीलोहयंत्रविशेषयोः ॥ संचारि
कातुयुगलेकुट्टनीघ्राणयोरपि ॥१९॥ संघाटिकास्त्रियांयुग्मेकुट्टन्यां
जलकंटके ॥ सुप्रतीकः शोभनांगेभवेदीशानदिग्गजे ॥ २०॥ अथसै
कतिकंमात्रयात्रामंगलसूत्रके ॥ नासन्यस्तेक्षपणकेत्रिषुसंदेहजीवि
नि ॥ २१॥ सोमवल्कस्तुधवलखदिरेकट्फलेपिच ॥ सौगंधिकंतुक
ल्हारेपद्मरागेपिकत्तृणे ॥ २२॥ पुल्लिंगोगंधपाषाणेसुगंधव्यवहारिणि ॥

॥ कपंच ॥ अनेडमूकमुद्दिष्टःशठेवाक्श्रुतिवर्जिते ॥ २३॥
स्यादाच्छुरितकंहासनखराघातभेदयोः ॥ उपकारिकोपकार्यापिष्ट
भेदेनृपालये ॥ २४॥ कक्ष्यावेक्षकइत्येषशुद्धांतोद्यानपालयोः ॥ रं
गाजीवेकणेखङ्गद्वाःस्थेऽथकटखादकः ॥ २५॥ खादकेकाचकल
शेबलिपुष्टेचजंबुके ॥ कृमिकंटकंतुचित्रांगविडंगोदुंबरेषुच ॥२६
गोजागरिकंमंगलेपुंसिस्यात्कंटकारके ॥ चिलमीलिकातुकंठाभ
देखद्योतविद्युतोः ॥ २७॥ अथोजलकरंकः स्यान्नालिकेरफलेऽब्जे
॥ शंखेजललतायांचवारिवाहेचकीर्तितः ॥ २८॥ जलतापिकइत्यास
काकेचीऋषयोश्चपुंसिस्यात् ॥ नवफलिकास्त्रीनव्येनवजातरजो
ऽगनायांच ॥ २९॥ नागवारिकउद्दिष्टोराजकुंजरहस्तिपे ॥ गणस्थरा
जगरुडेचित्रमेखलकेपिच ॥ ३०॥ स्याद्व्रीहिराजिकः कंगुधान्यचीन
कधान्ययोः ॥ व्यवहारिकास्याल्लोकयात्रासंमार्जनींगुदे ॥ ३१॥ शतप
र्विकातुदूर्वायांवचायामपियोषिति ॥ शीतचंपकइत्येषस्यादातर्पण
दीपयोः ॥ ३२॥ सुवसंतकउद्दिष्टोवासंत्यांमदनोत्सवे ॥ स्याद्धेमपुष्पि
कायूथ्यांचंपकेहेमपुष्पकः ॥ ३३॥ कषट् ग्राममद्गुरिका
ग्रामयुद्धेशृंगीझषेस्त्रियां ॥ मदनशलाकाकामोद्दीपकभेषजेपसा

रिकयोः॥ ३४॥ मातुलपुत्रक इत्यपिमामकतनये फलेच धूर्तस्य॥ वर्णविलोडक एषश्लोकस्तेने च संधिचौरेच॥ ३५॥ सिंदूरतिलक उक्तो मतंगजे स्त्रीतु कामिन्यां॥ ॥ इतिकांतवर्गः॥ खेकं खमिंद्रियेपुरे क्षेत्रे शून्ये बिंदौ विहायसि॥ संवेदने देवलोके कर्मण्यपि नपुंसकं॥१॥ खद्वि नखो स्त्रीक्लीबयोः शङ्को नखरे पुन्नपुंसके॥ न्युंखः सम्यङ्मनोज्ञेच साम्नः षट्प्रणवेषु च॥ २॥ प्रेंखा पर्यटने प्यश्वगतौ संवेशनांतरे॥ मुखं निःसरणे वक्त्रे प्रारंभोपाययोरपि॥ ३ संध्यंतरे नाटकादेः शब्देपि च नपुंसके॥ लेखो लेख्य स्मरे लेखा लिपि राजिकयोर्मता॥ ४॥ रिंखा श्वगतिभेदेपि शूकशिंब्यां च नर्तने॥ शंखः कंबौ नयोषिन्ना भालास्थिनिधिभिन्नखे॥ ५॥ शाखा पक्षांतरे बाहौ वेदभागद्रुमांगयोः॥ शिखा शाखा बर्हिचूडालांगलिक्यग्रमात्रके॥ ६॥ चूडामात्रे शिखायां च ज्वालायां प्रपदे पि च॥ सखा मित्रे सहायेना वयस्यायां सखीमता॥ ७॥ स्फखं शर्मणि नाके च स्फखा पुर्यां प्रचेतसः॥ ॥ खत्रि॥ ॥ गोमुखं कुटिलागारे वाद्यभांडे च लेपने॥ ८॥ पुंसि मातलिपुत्रेच महादेवगणांतरे॥ त्रिशिखो राक्षसे क्लीबं त्रिशूले मंडलांतरे ॥९॥ दुर्मुखः कपिभिन्नागभिदोर्नामुखरे त्रिषु॥ प्रमुखः प्रथमे श्रेष्ठे मयूखः किरणेपि च॥१०॥ ज्वालायामपि शोभायां विशिख स्तोमरे शरे ॥ विशिखा तु खनित्र्यां च रथ्यानलिकयोरपि॥ ११॥ विशाख स्तर्कके स्कंदे स्त्रियामूर्से कविल्लके॥ वैशाखो मासभेदेऽपि मंथाने च प्रकीर्तितः॥१२ सुमुख स्तार्क्ष्यतनये शाकनागप्रभेदयोः॥ ॥खचतुः॥ भवेदग्निमुखो देवे विप्रे भल्लातके स्त्रियां॥ १३॥ अथाऽग्निशिख मुद्दिष्टं कुसुंभे कुंकुमेपि च॥ लांगलिक्याख्योषधौ च विशल्यायां च योषिति॥ १४॥ इंदुलेखाऽमृता सोमलताराशि कलासु च॥ अथ बद्धशिखा स्त्री स्या दुच्चटायां शिशौ त्रिषु॥ १५॥ महाशंखो मानुषास्थि संख्याभेदालिकेषु च॥ भवेद्व्याघ्रनखं कंदगंधद्रव्यविशेषयोः॥ १६॥ नखक्षतांतरे क्लीं

वं शिलीमुखो ऽलिकांडयोः॥ शशिलेखा कला भागे गुडूची वृत्तभेदयोः॥ १७॥ भवे स्वस्तिमुखो लेखे ब्राह्मणे वंदिनि त्रिषु॥ ॥ खपंच॥ ॥ मलिनमुखो ऽपौ गोलांगूले पुंसि त्रिषु क्रूरे॥ १८॥ शीतमयूख श्चंद्रे घनसारे चापि पुल्लिंगः॥ सर्वतोमुख उग्रे च क्षेत्रज्ञ ब्रह्मणोः पुमान्॥ १९॥ नपुंसकं तु पानीये सुखर्स्यन्यपि स्मृतम्॥ ॥ इति खांतवर्गः॥ ॥ गेकं॥ गोः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान्॥ स्त्री सौरभेयी दृग्बाण दिग्वाग्भूष्वप्सु भूम्नि च॥ १॥ ॥ गद्वि॥ ॥ अगः स्यान्नगवत् पृथ्वीधरपादपयोः पुमान्॥ अंगं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति॥ २॥ क्लीबैकत्वे तु प्रधाने त्रिष्वंगवति चांतिके॥ इंगः स्यादद्भुते ज्ञाने जंगमेंगितयोरपि॥ ३॥ खगः सूर्ये ग्रहे देवे मार्गणे च विहंगमे॥ खड्गो गंडकशृंगासि बुद्धभेदेषु गंडके॥ ४॥ गांगस्तु गंगासंभूते त्रिषु भीष्मे गुहे पुमान्॥ चंगस्तु शोभने दक्षे टंगो ऽस्त्री स्यात्खनित्रके॥ ५॥ खड्गभेदे च जंघायां त्यागो दाने च वर्जने॥ तुंगी निशा वर्वरयोः पुन्नागनगयोः पुमान्॥ ६॥ उन्नते त्रिषु दुर्गी मानील्योः स्त्री दुर्गमे त्रिषु॥ नागं नपुंसकं रंगे सीसके करणांतरे॥ ७॥ नागः पन्नगमातंगक्रूराचारिषु तोयदे॥ नागकेसरपुन्नागनागदंतकमुस्तके॥ ८॥ देहानिलप्रभेदे च श्रेष्ठे स्यादुत्तरस्थितः॥ पिंगा गोरोचना हिंगुनालिकाचंडिकासु च॥ ९॥ पिंगी शम्यां पिशंगे ना बालके तु नपुंसकं॥ पूगस्तु क्रमुके वृंदे फलसारे ऽभिधेयवत्॥ १०॥ नदीभेदे मलप्वां स्त्री भंगो जयविपर्यये॥ भेदरोगतरंगेषु भंगा सस्यांतरे स्त्रियां॥ ११॥ भगं श्रीयोनिवीर्येच्छाज्ञानवैराग्यकीर्तिषु॥ माहात्म्यैश्वर्ययत्नेषु धर्मे मोक्षे च ना रवौ॥ १२॥ भागो रूपार्द्धके भाग्ये कदेशयोर्भर्गः पुमान्॥ मुनौ हरे तटे शक्ते भृंगो धूम्याटषिड्गयोः॥ १३॥ मधुव्रते भृंगराजे पुंसि भृंगे गुडत्वचि॥ भोगः सुखे धने चाहेः शरीरफणयोरपि॥ १४॥ पालने व्यवहारे च योषिदादिभृतावपि॥ मार्गो मृगमदे मासप्रभेदे ऽन्वे

षणाध्वनोः॥ १५॥ मृगः पशौ कुरंगे च करिनक्षत्रभेदयोः॥ अन्वेषणे च याच्ञायां मृगी तु वनितांतरे॥१६॥ युगो रथहलाद्यंगे नद्यो स्तकृतादिषु॥ युग्मे हस्ते च तुष्के पि वृद्धिनामौषधेऽपि च॥ १७॥ योगोऽपूर्वार्थसंप्राप्तौ संगतिध्यानयुक्तिषु॥ वपुःस्थैर्ये प्रयोगे च विष्कंभादिषु भेषजे॥ १८॥ विश्रब्धघातके द्रव्योपायसन्नहनेष्वपि॥ कार्मणेऽपि च रंगो नागे नृत्ये रणक्षितौ॥ १९॥ अस्त्री त्रपुणि रागस्तु मात्सर्ये लोहितादिषु॥ क्लेशादावत्तु रागे च गांधारादौ नृपेऽपि च॥ २०॥ रोगः कुष्ठौषधे व्याधौ लगस्तु संगपिङ्गयोः॥ लिंगं चिन्हेऽनुमाने च सांख्योक्तप्रकृतावपि॥२१॥ शिवमूर्तिविशेषेऽपि मेहनेऽपि नपुंसकं॥ व्यंगो भेके च हीनांगे वंगं सीसकरंगयोः॥ २२॥ वार्ताकेऽपि च कार्पासे पुं भूम्निनी तु दंलरे॥ वल्गुः स्याच्छगले पुंसि सुंदरे चाभिधेयवत्॥२३॥ वेगो जवे प्रवाहे च महाकालफलेऽपि च॥ शार्ङ्गः कार्मुकमात्रेऽपि विष्णोरपि शरासने॥ २४॥ शृंगो वरोऽस्मातकयोः पर्कट्यामपि चास्त्रियां॥ शृंगं प्रभुत्वे शिखरे चिन्हे क्रीडांबुयंत्रके॥ २५॥ विषाणोत्कर्षयोश्चाथ शृंगः स्यात्कूर्चशीर्षके॥ स्त्री विषायां स्वर्णमीनभेदयोर्ऋषभौषधौ॥ २६॥ सर्गस्तु निश्चयाध्यायमोहोत्साहात्मसृष्टिषु॥ ॥गत्रि॥ अयोगो विधुरे कूटे विश्लेषे कठिनोद्यमे॥ २७॥ अनंगो मदने नंगमाकाशमनसोरपि॥ अपांगस्त्वंगहीने स्यान्नेत्रांते तिलकेऽपि च॥ २८॥ आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि॥ आयोगोऽव्याप्तौ गंधमाल्योपहारबोधयोः॥२९॥ अंशुगो मारुते बाणेऽथुद्गंक्रमुकीफले॥ उद्वेगो ध्युद्गा हुलको द्वेजनोद्गमनेषु च॥ ३०॥ उत्सर्गः पुंसि सामान्ये न्याये चत्यागदानयोः॥ कलिंगः पूतिकरंजे धूम्याटे भूम्निनीवृति॥ ३१॥ नद्योः कौटजफले महिलायां तु योषिति॥ कालिंगो भूमिककारो दंतावलभुजंगयोः॥ ३२॥ कालिंगी राजकर्कट्यां चक्रांगो मानसौकसि॥ चक्रांगी कटुरोहिण्यां जिह्मगोऽहौ च मंदगे॥ ३३॥ तडागोऽस्त्रीज

लाधारविशेषे यंत्रकूटके॥ तालगुः स्कद्रतानेनाजनकस्य हितेत्रिषु॥३४॥ त्रिवर्गो धर्मकामार्थेस्त्रिफलायां कटुत्रिके॥ वृद्धिस्थानक्षयेसत्वरजस्तम सिचेष्यते॥३५॥ तुरगी चाश्वगंधायां तुरगश्चित्तवाजिनोः॥ धारांगोऽसौ च तीर्थे च नरांगस्तु वरंडके॥३६॥ मेहनेनद्वयोश्चाथ नारंगः पिप्पलीरसे॥ यमजप्राणिनि विटे नागरंगद्रुमेऽपि च॥३७॥ निषंगः संगते तूणे निसर्गो रूपसर्गयोः॥ नीलंगुः स्यात्कृमौ पुंसि भम्भराल्यां तु योषिति॥३८॥ पत्रांगं नद्वयोर्भूर्जे पद्मके रक्तचंदने॥ पन्नगश्चौषधीभेदे तथैव पवनाशने॥३९॥ प्लवगो वानरे भेके सारथौ चोष्णदीधितेः॥ पराग: सुमनोरेणौ धूलिस्नानीययोरपि॥४०॥ गिरिप्रभेदे विख्यातावुपरागे च चंदने॥ प्रयागस्तीर्थभेदे स्याद्यज्ञे शतमखाश्वयोः॥४१॥ प्रयोगः कर्मणेऽपि स्यात्प्रयुक्तौ च निदर्शने॥ पतंगः शलभे शालिप्रभेदे पक्षिसूर्ययोः॥४२॥ क्लीबं स्रुते प्रियंगुः स्त्री राजिकाकणयोरपि॥ फलिन्यां कंगुसस्ये च पुन्नागस्तु सितोत्पले॥४३॥ जातीफले नरश्रेष्ठे पांडुनागे द्रुमांतरे॥ वरांगं योनिमातंगमस्तकेषु गुडत्वचि॥४४॥ भुजंगो ह्रीच षिंगे च मातंगः श्वपचे गजे॥ मृदंगः पटहे घोषे र स्तांगस्तु महीसुते॥४५॥ कंपिल्ले स्त्री तु जीवंत्यां क्लीबं विद्रुमधीरयोः॥ रथांगं नद्वयोश्चक्रे नाचक्रांगविहंगमे॥४६॥ वातिगः पुंसि भंटाक्यां धातुवादिनि चान्यवत्॥ विडंगस्त्रिष्वभिज्ञे स्यात्कृमिघ्ने पुन्नपुंसकं॥४७॥ विसर्गस्तु पुमान्दाने त्यागे च मलनिर्गमे॥ विसर्जनीये प्ययन भेदे पि च विभावसोः॥४८॥ विहंगस्तु त्रिलिंगः स्यादाशुगे च विहंगमे॥ सर्वंगं सलिले क्लीबं सर्वंगः शांकरे विभौ॥४९॥ संभोगस्तु पुमान्भोगे सुरते जिनशासने॥ सारंगः पुंसि हरिणे चातके च मतंगजे॥५०॥ शाबले त्रिषु हेमांगो गरुडे परमेष्ठिनि॥ गचतुः स्यादपवर्गस्त्यागे मोक्षे कार्याव- सानसाफल्ये॥५१॥ अभिषंगो नपुंलिंगः पराभवाक्रोशशापथेषु॥ ईहामृगस्तु पुंसि स्यात्कोकरूपकभेदयोः॥५२॥ उपरागस्तु पुंसि स्याद्राहुग्रस्ताऽर्कचंद्रयोः॥ दुर्नये ग्रहकल्लोले व्यसनेपि निगद्यते॥५३॥ उपसर्गः पु

मान्त्रोगभेदे प्लवयोरपि॥ कटप्पंगस्तु शस्यानां हस्तच्छेदे नृपात्ययौ॥ ५४॥
छत्रभंगो पि वैधव्ये स्यात् स्वातंत्र्ये नृपनाशयोः॥ दीर्घाध्वगः पुमानुष्ट्रे लेखहारे तु भेद्यवत्॥ ५५॥ मल्लनागो ऽभ्रमातंगे वात्स्यायनमुनावपि॥ समायोगस्तु संयोगे समवाये प्रयोजने॥ ५६॥ संप्रयोगो रते पि स्याद्दन्वितौ कार्मणेपि च॥ ॥गपंच॥ कथाप्रसंगो वातूले विषवैद्ये च वाच्यवत्॥ ५७॥ नाडीतरंगः काकोले हिंडकेरनहिंडके॥ ॥
इति गांतवर्गः॥ ॥ घेकं घो घंटायां घर्घरे ना-
स्त्रियां तु कांचि घातयोः॥ ॥ घद्वि अघं तु व्यसने दुःखे दुरिते च नपुंसकं॥ १॥ अर्घः पूजाविधौ मूल्ये प्युद्घः स्याद्देहजानिले॥ अंघो हस्तपुटे शस्ते प्योघो वेगे जलस्य च॥ २॥ वृंदे परंपरायां च द्रुतं नृत्योपदेशयोः॥ मघा मघी च नक्षत्रे धान्यभेदे यथाक्रमं॥ ३॥ मघो द्वीपांतरे मेघो मुस्ताजलदयोः पुमान्॥ मोघा स्त्री पाटलायां स्याद्धीननिष्फलयोस्त्रिषु॥ ॥४॥ लघुरगुरौ च मनोज्ञे निःसारे वाच्यवत् क्लीबं॥ शीघ्रे च कृष्णागुरुणि पृक्कानामौषधौ तु स्त्री॥ ५॥ श्लाघा स्त्रियां प्रशंसायां परिचर्याभिलाषयोः॥ घत्रि अनघो निर्मलापापमनोज्ञेष्वभिधेयवत्॥ ६॥ अमोघं सफले वाच्यवत् स्त्री पथ्याविडंगयोः॥ उल्लाघो पि शुचौ दक्षे नीरोगयोस्त्रिषु॥ ७॥ काचिघः कांचने पि स्यात्क्षेमंडे मूषके पि च॥ निदाघो ग्रीष्मकाले स्यादुष्णस्वेदांबुनोरपि॥ ८॥ पलिघः काचकलशे घटे प्राकारगोपुरे॥ परिघो योगभेदे ऽस्त्रविशेषे र्गलघातयोः ॥९॥ प्रतिघः प्रतिघाते स्यात्क्रोधे पि परिकीर्तितः॥ महार्घस्तु महामूल्ये त्रिषु स्याल्लावके पुमान्॥ १०॥ सर्वौघो गुरुभेदे च सर्वसन्नहने पुमान्॥ इति घांतवर्गः॥ ॥ङेकं॥ ङः पुमान् विषये ख्यातः स्पृहायां विषयस्य च॥ इति ङांतवर्गः॥
चेकं चश्चंडेशे पुमानुक्तः कच्छपे चंद्रचौरयोः॥ चद्वि ॥ अर्च्चा पूजाप्रतिमयोः कूर्चः केशे गुरोः स्तने॥ १॥ बंधे शुष्कव्रणे

पुंसि करिण्यांतु कच्चास्त्रियां॥ काचः शिक्यमणौनेत्ररोगभेदेमृदंतरे ॥२॥ काची स्यान्मेखला दाम्नि प्रभेदे नगरस्य च॥ कूर्चमस्त्रियां भ्रुवोर्मध्ये कोठ नश्मश्रुकैतवे॥ ३॥ क्रौंचो द्वीपविशेषेस्यासक्षिपर्वतभेदयोः॥ चर्चा चिंतास्थासकयोश्चर्चिकायांतु योषिति॥ ४॥ चंचा तु नल्वनिर्माणे तृणनिर्मितपूरुषे॥ चंचूरस्त्री द्वयोः स्त्रियांपुंसि शोनाडीके श्वरुबके॥ ५॥ त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशेषतः॥ न्यञ्ची च निम्नयोर्नीचः पामरे वामने पि च॥ ६॥ प्राञ्च्छब्दो दिशि देशे च काले च वाच्यलिंगकः॥ पिचुर्नी कुष्ठभेदे च कर्षे तूले स्क्रशांतरे॥ ७॥ मोचः शोभांजने पुंसि मोचा रा कदलि रम्भयोः॥ रुचिः स्त्री दीप्तौ शोभायामभिष्वंगाभिलाषयोः॥ ८॥ रुक् स्त्री शोभाद्युतीच्छासु वच्चः कीरे वचौषधौ॥ शारिकायां च वाग्वाचे भारत्यां वचने स्त्रियौ॥ ९॥ वीचिः स्वल्पतरंगे स्याद वकाशेसु खेद्वयोः॥ शची द्राण्यां शतावर्यां तथा स्त्री करणांतरे॥ १०॥ शफ़्ची शीर्षाग्रशृंगारे श्वापादे शब्द मंत्रिणि॥ ज्येष्ठे च पुंसि धवले शक्रे नु पदहते त्रिषु॥ ११॥ सूची तु सीवन द्रव्ये प्यांगिकाभिनयांतरे॥ चत्रि॥ उदङ्दिग्देशकालेषु वाच्यवच्चितये ऽव्ययं॥ १२॥ कपीची पुष्पितलता गुंजयोः शाकटे स्त्रियां॥ कवचो गर्दभांडे च सन्नाहे पटहे पि च॥ १३॥ क्रकचः करपत्रे ऽस्त्री ग्रंथिलाख्यतरौ पुमान्॥ नमुचिस्तु पुमान्दैत्यभेदे कुसुमकार्मुके॥ १४॥ नाराच्येषणिकायां ना लोहबाणांबुहस्तिनोः॥ प्रपंचः संचये पि स्याद्विस्तारे च प्रतारणे॥ १५॥ प्रत्यग्दिग्देशकालेषु वाच्यवच्चितये ऽव्ययं॥ मरीचिर्मुनिभेदे ना गभस्तौ वनपुंसकम्॥ १६॥ मारीचो रक्षसो भेदे कक्कोले याजक द्विजे॥ मारीची देवताभेदे विपंची केलिवीणयोः॥ १७॥ विकचः क्षपणे केतौ ना ऽकेशे स्फुटिते ऽन्यवत्॥ विरिंचिर्ना विरिंचश्च वैकुंठे परमेष्ठिनि ॥१८॥ संकोचो मीनभेदे स्यात्बधे क्लीबं तु कुंकुमे॥ सम्यक् स्याद्वाच्यलिंगं तु मनोज्ञे संगते पि च॥ १९॥ चचतुः जलसूचिः कंकत्रोटिमत्स्य भृंगादयोरपि॥ शिशुमारे च पुल्लिंगो जलौकायांतु योषिति॥ २०॥ मलि

स्फुचोमासंभेदेचौरज्वलनयोः पुमान्॥ ॥चपंचं॥ रतनारी-चीनारीणांसीत्कारेचशुनिस्वरे॥२१॥ इतिचांतवर्गः॥

॥ छेकं॥ छाछादनेस्त्रियांख्याताविर्मलेन्यवदिष्यते॥ ॥छद्वि॥ ॥अच्छः स्फटिकभल्लूकनिर्मलेष्वच्छमव्ययम्॥ १॥ आभिमुख्येऽथकच्छः स्यादनूपेतुन्नकद्रुमे॥ नौकांगेपुंसिवाराह्यांचीरिकायांचयोषिति॥२॥ स्याद्गुच्छः स्तबकेस्तंबेहारभेदकलापयोः॥ पिच्छापूगच्छटाकोशमोचाशाल्मलिवेष्टके॥३॥ भक्तसंभूतमंडेचपंक्तावश्वपदामये॥ ॥स्त्रियांपुंसितुलांगूलेनद्वयोर्बर्हचूडयोः॥४॥ पुच्छः पश्चात्प्रदेशे स्याल्लांगूलेपुच्छमिष्यते॥ म्लेच्छः पामरभेदेचपापरक्तेऽपभाषणे॥५॥ ॥छचतुः॥ ॥महाकच्छस्तुपुंसिस्यात्समुद्रेचप्रचेतसि॥ ॥इतिछांतवर्गः

॥जेकं॥ जोनामृत्युंजयेजन्यांतातमात्रेजनार्दने॥ जूस्त्वरागमनेप्रोक्तासामान्यगमनेस्त्रियां॥१॥ जूराकाशसरस्वत्यांपिशाच्यांजवनेस्त्रियाम्॥ ॥जद्वि॥ अजश्छागेहरिब्रह्मविधुस्मरनृपेहरे॥ २॥ अब्जोस्त्रीशंखेनानिचुलेधन्वंतरौचहिमकिरणे॥ क्लीबपद्मेऽथाजिः स्त्रीसमभूमौचसंग्रामे॥३॥ ऊर्ज्जस्तुकार्तिकोत्साहबलेषुप्राणनेपिच॥ कंजः केशेविरिंचेच कंजं पीयूषपद्मयोः॥४॥ कुजाकात्यायनीदेव्यां कुजोनरकभौमयोः॥ कुब्जोवृक्षप्रभेदेनान्युब्जेस्याद्वाच्यलिंगकः॥ ५॥ कुंजोऽस्त्रियांनिकुंजेपिहनौदंतेपिहस्तिनां॥ खंजाछंदःप्रभेदेस्त्रीकुटिलांघ्रौतुवाच्यवत्॥ ६॥ खजामंथेप्रहस्तेऽथ खर्जुः कीटांतरेस्मृता॥ खर्जूरीपादपेकंड्वांगजोमानेमतंगजे॥७॥ वास्तुनः स्थानभेदेपिगंजाखनौस्त्रागृहे॥ गंजः स्यात्पुंसिरीढायांभांडागारेतुनस्त्रियां॥८॥ ॥गुंजातुकाकचिंचायांपटहेचकलध्वनौ॥ द्विजः स्याद्ब्राह्मणक्षत्रवैश्यदंतांडजेषुना॥९॥ द्विजाभार्ग्यांहरेणौच ध्वजः स्याच्छौंडिकेपुमान्॥ नस्त्रियांतुपताकायांखट्वांगेमेढ्रचिन्हयोः॥१०॥ निजंस्वीयेचनित्येचस्युभ्जोदर्भपयस्तुचि॥ कर्मरंगफलेक्लीबंकुब्जाधोमुखयोस्त्रिषु॥११॥ प्रजा

लोकेच संताने पिंजा तूलहरिद्रयोः॥ बलेक्लीबंवधेपुंसिव्याकुले त्रिष्व-थो भुजा॥ १२॥ द्वयोर्बाहौ करे भर्जूः स्त्रीशक्ष्णोधावकेपिच॥ रजोरेणोप रागेस्यादार्तवेचगुणांतरे॥ १३॥ रज्जुर्वेण्यांगुणेयोषिद्राजिः स्त्री पंक्तिले-खयोः॥ रुजा रोगेच भंगेथ लाजः स्यादार्द्रतंडुले॥ १४॥ नपुंसक मुशीरे थस्त्रियांपुं भूम्निचाक्षते॥ व्रजो गोष्ठाध्ववृंदेषु वाजो निस्वनपक्षयोः॥ १५॥ वेगेपुमानथक्लीबेघृतयज्ञान्नवारिषु॥ व्याजः शाठ्येऽपदेशेऽथ-बीजमंकुरकारणे॥ १६॥ हेतुतत्वाधानशुक्रेसर्जुर्वणिजिविद्युति॥ स्त्रि यां स्कंजो विधौरुद्रे स्वजः प्रस्वेदपुत्रयोः॥ १७॥ क्लीबंरक्तेऽथसंजः स्या त्सन्नद्धेसंभृतेत्रिषु॥ ॥जत्रि॥ अंडजा मृगनाभौस्या त्सरटेऽहौखगेझषे॥ १८॥ अंगजं रुधिरेनंगकेशपुत्रगदेषुना॥ अंबु जोनिचुलेपुंसि कमलेतुनपुंसकम्॥ १९॥ असृक् स्याद्योगभेदेनारक्तेपि स्यान्नपुंसकम्॥ कंबोजो हस्तिभेदेपिशंखदेशविशेषयोः॥ २०॥ करजं स्याद्व्याघ्रनखे करंजनखयोःपुमान्॥ कारुजः शिल्पिनांचित्रे वामलूरे गजार्भके॥ २१॥ कांबोजोऽश्वांतरेसोमवल्केपुन्नागपादपे॥ कांबोजी माषपर्ण्यांचबलक्षखदिरेऽस्त्रियां॥ २२॥ कुटजो वृक्षभेदेस्याद्गस्त्यद्रो णयोरपि॥ गिरिजंत्वभ्रकेऽपिस्याच्छिलाजतुनिशोरुजे॥ २३॥ लोहेपि गिरिजा गौरीमातुलुंग्योश्चयोषिति॥ जलजंकमलेशंखेनीरजंकुष्ठप द्मयोः॥ २४॥ परंजस्तैलयंत्रेस्याच्छुरिकाफलफेनयोः॥ बलजं गोपुरक्षे त्रेशस्यसंगरयोरपि॥ २५॥ बलजा वरयोषायांयूथ्यामथवणिक्स्त्रियां॥ वणिज्यायांपुमान्वाणिज्यकेचकरणांतरे॥ २६॥ बाहुजः क्षत्रियेकी रेस्वयजाततिलेपिच॥ भूमिजो नरकेऽगारेसीतादेव्यांतु भूमिजा॥ २७ वनजा मुद्गपर्ण्यांनामुस्तकेक्लीबमंबुजे॥ सहजः स्यान्निसर्गेनासहोत्थे पुनरन्यवत्॥ २८॥ समजः पशुवृंदेनाविपिनेतुनपुंसकं॥ सामजस्तुग जेपुंसिसामोत्थेपुनरन्यवत्॥ २९॥ हिमजा तुशचीगौर्योःपुंसिमैनाक पर्वते॥ जचतुः अहिभुग्बर्हिणेतार्क्ष्येपुंसि काश्मी

रजं पुनः॥ ३०॥ कुष्ठकुंकुमयोः क्लीबेति विषायांतु योषिति॥ क्षीराब्धिजं तु सामुद्रलवणे मौक्तिकेपिच॥ ३१॥ पुमांस्कधारकिरणे कमलायांतु योषिति॥ ग्रहराजो रवौ चंद्रे जघन्यजः कनीयसि॥ ३२॥ वृषले द्विजराजस्तु चंद्रेऽनंते गरुत्मति॥ धर्मराजो यमे बुद्धे युधिष्ठिरनृपे पुमान्॥ ३३॥ भरद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहंगमे॥ भारद्वाजा वनकार्पास्यां नाद्रोणऋषिभेदयोः॥ ३४॥ अथ भृंगराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे॥ यक्षराट् पुंसि धनदे मल्लानां रंगचत्वरे॥ ३५॥ राजराजः कुबेरेपि सार्वभौमे सुधाकरे॥ ॥ जपंच॥ ॥ ऋषभध्वज एषोपि शंकरे चार्हदंतरे॥ ३६॥ मुनिभेषजमागस्त्यहरीतक्यां चलंघने॥ इति जांतवर्गः झेकं झोझंटीशो सुरगुरौ दैत्यराजे ध्वनावपि॥ झद्वि झंझावातेनारवायौ नष्टेपि कीर्त्यते बुधैः॥ झंझाध्वनिविशेषेच स्यादंबुकणवर्षणे॥ इति झांतवर्गः ॥

ञैकं ञः पुमान्स्याद्बलीवर्दे शके चामम तावपि॥ ज्ञो ब्रह्मबुधविद्वत्सु स्यादज्ञो जडमूर्खयोः॥ १॥ प्रज्ञस्तु पंडिते वाच्यलिंगो बुद्धौ च योषिति॥ राज्ञी राजप्रियायां च भार्यायां भास्करस्य च॥ २॥ संज्ञा नामनि गायत्र्यां चेतना रवियोषितोः॥ अर्थस्य सूचनायां च हस्ताद्यैरपि योषिति॥ ३॥ ञत्रि॥ कृतज्ञः कुक्कुरे पुंसि समर्थादिन्यभिधेयवत्॥ क्षेत्रज्ञ आत्मनि छेके दैवज्ञो गणके पुमान्॥ ४॥ देवज्ञे क्षणिकायां स्त्री सर्वज्ञः शिवबुद्धयोः॥ ॥ इति ञांतवर्गः॥

॥ टैकं॥ टः पुमान्वामने पादे निःस्वनेपि क्वचिन्मतः॥ ॥ टद्वि॥ अट्टं भक्ते च शुष्केना क्षौमे ऽत्यर्थे गृहांतरे॥ १॥ इष्टमाशंसितेपि स्यात्पूजिते प्रेयसि त्रिषु। समतंतो पुमान् क्लीबे संस्कारे ऋतु कर्मणि॥ २॥ इष्टिर्मताऽभिलाषेपि संग्रहश्लोकयागयोः॥ कटः श्रोणौ द्वयोः पुंसि किलिंजे ऽतिशये शरे॥ ३॥ समये गजगंडे च पिप्पल्यां तु कटी मता॥ कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि॥ ४॥ नपुंसकमकार्ये स्यात्सु

क्लिंगेरसमानके॥ त्रिषु तद्वत्स्फगंध्योश्च मत्सरेपिखरेपि च॥ ५॥ कष्टं तु गहने कृच्छ्रे क्रुष्टं रोदनरावयोः॥ कुटः कोटे पुमान्स्त्री घटे स्त्रीपुंसयो गृहे॥ ६॥ कुटी स्यात्कुंभदास्यां च सुरायां चित्रगुच्छके॥ कूटो ऽस्त्री निश्चलेराशौ लोहमुद्गरदंभयोः॥ ७॥ मायाद्रिशृंगयोस्तुच्छे सीरावयवयंत्रयोः॥ अनृते चाथ कृष्टिः स्यादाकर्षे स्त्री बुधे पुमान्॥ ८॥ कोटिः स्त्री धनुषो ऽग्रे ऽश्रौ संख्याभेदप्रकर्षयोः॥ खटो ऽध कूपकफयोः प्रहारांतरटंकयोः॥ ९॥ खटिस्तु सक्ष्वहेपि स्यात्किणे शवरथे स्त्रियां॥ खेटः कफे ग्रामभेदे चर्मण्यस्त्र्यर्वतित्रिषु॥ १०॥ अथ गृष्टिः सकृत्सूतगवीबदर्योः स्त्रियाम्॥ घटः समाधिभेदे भशिरःकूटकुटेषु च॥ ११॥ घटा घटनगोष्ठीभघटनासु च योषिति॥ घृष्टिः स्त्री घर्षणस्पर्द्धाविष्णुक्रांतासु नाकिरे॥ १२ घोंटा तु बदरीपूगवृक्षयोरपि योषिति॥ चटुश्चाटौ ऽपि पिंडे च व्रतिनामासने पुमान्॥ १३॥ जटा लग्नकचे मूले मांस्यां लक्षे पुनर्जटी॥ जुष्टं तु क्लीबमुच्छिष्टे सेविते वाच्यलिंगकं॥ १४॥ झाटो निकुंजे कांतारे व्रणादीनां च मार्जने॥ तटं नपुंसकं क्षेत्रे प्रतीरे तु तटी त्रिषु॥ १५॥ त्वष्टा पुमान्देवशिल्पितक्ष्णोरादित्यभिद्यपि॥ त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः॥ १६॥ त्रोटिः स्त्री कट्फले चंच्वां खगे मीनांतरे ऽपि च॥ दिष्टं दैवे पुमान्काले दिष्टिर्मुत्परिमाणयोः॥ १७॥ स्त्रियां दृष्टिः स्त्रियां बुद्धौ लोचने दर्शने ऽपि च॥ धटो दिव्यतुलायां स्याद्धटी चीरे च वाससः॥ १८॥ नटी नल्यौषधे स्त्री स्यात् शैलूषाशोकयोः पुमान्॥ पटश्चित्रपटे वस्त्रे ऽस्त्री प्रियालद्रुमे पुमान्॥ १९॥ पटुर्दक्षे च नीरोगे चतुरेप्यभिधेयवत्॥ पटोले तु पुमान्क्लीबे छत्रा लवणयोरपि॥ २०॥ पट्टः पेषणपाषाणे व्रणादीनां च बंधने॥ चतुष्पथे च राजादिशासनांतरपीठयोः॥ २१॥ पाटिः स्त्री पटभेदे स्याद्वास्तु लौकुंभिकाद्रुमे॥ पुष्टिः स्त्री पोषणे वृद्धौ फटा तु फणदंतयोः॥ २२॥ वटी त्रिषु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः॥ भटः स्यात्पुंसि वीरे च विशेषे पामरस्य च॥ २३॥ भृष्टिः स्याद्भर्जने शून्यवाटिकायां च योषिति॥ म्लिष्टं त्रि

ऽव्यक्तवाचिम्लाने मुष्टिर्द्वयोः फले॥ २४॥ बद्धपाण्योत्सेधे यष्टिः पुंसि
स्याद्भुजदंडके॥ द्वयोर्हारलतायां स्त्री भार्ग्यां मधुकाशस्त्रभेदयोः॥ २५॥ रि
ष्टं क्षेमाशुभाभावे पुंसि खड्गे च फेनिले॥ रिष्टिः खड्गेऽशुभे स्त्री लाटो
देशान्तरे शुके॥ २६॥ वाटो मार्गे वृतिस्थाने स्यात्कुटी वास्तुनोः स्त्रियां
॥ विटो ऽद्रौ लवणे षिड्गे मूषिके खदिरेऽपि च॥ २७॥ विष्टिः स्त्रिषु कर्म
करे स्याज्जू वेतनकर्मसु॥ व्युष्टिः फले समृद्धौ स्त्री व्युष्टं कल्ये त्रिषूषि
ते॥ २८॥ सटा जटाकेसरयोः स्फुटो व्यक्तप्रफुल्लयोः॥ व्याप्ते त्रिषु स्फु
टिर्योषित्पादस्फोटामयेऽपि च॥ २९॥ निर्भिन्नकर्कटीशस्ये ऽपि स्यात्स्रु
ष्टं तु निर्भिन्ने ऽयुक्तनिश्चितयोः प्राज्ये त्रिषु सृष्टिस्तु निर्मितौ॥ ३०॥ स्व
भावे चापि कथिता हृष्टो रोमाञ्चितेऽपि च॥ जातहर्षे प्रहसिते विस्मितेऽप्य
भिधेयवत्॥ ३१॥ ॥ टत्रि॥ ॥ अवटः स्यात्तिले गर्ते कूपे
कुहकजीविनि॥ अरिष्टो लशुने निंबे फेनिले काककंकयोः॥ ३२॥ अ
रिष्टमशुभे तक्रे सूतिकागार आसवे॥ शुभे मरणचिन्हे चा ऽदिष्टमादे
शिते त्रिषु॥ ३३॥ आज्ञप्तोच्छिष्टयोः क्लीबमुत्कटस्तीव्रमत्तयोः॥ उद्भटः
कच्छपे शूर्पे कर्कटो विहगान्तरे॥ ३४॥ राशिभेदे कुलीरे च वालुक्यां शा
ल्मलीफले॥ कर्हटः करहाटे स्यात् पंकपंकारयोरपि॥ ३५॥ करटो ग
जगंडे स्यात्कुसंभे निंद्यजीवने। एकादशाहाद्याश्राद्धे दुर्दुरूटेऽपि वायसे॥ ३६
करटो वाद्यभेदेऽथ कार्पटो जतुकार्पिणोः॥ कीकटः कृपणे निःस्वे त्रि
षु पुंभूम्नि नीवृति॥ कुरुंटो दारुपुत्र्यां ना झिंटीम्लानप्रभेदयोः॥ कुक्कु
टस्ताम्रचूडायां पुंसि स्याच्चरणायुधे॥ ३८॥ निषादशूद्रयोः पुत्रे तृणो
ल्कायां च कुक्कुभे॥ कुनटी मनःशिलायां नेपाल्यामपि योषिति॥ ३९॥
कूपीट मुदरे तोये केशाद्देहर्यजोत्कटे॥ चर्पटः स्फारविपुले च पेटप
र्पटेऽपि च॥ ४०॥ चक्राटो विषवैद्येऽपि धूर्तदीनारयोरपि॥ चिपिटः
स्वाद्यभेदे ना त्रिषु पिट्टितविस्तृते॥ ४१॥ चिरिंटी तु सुवासिन्यां स्या
द्वितीयवयःस्त्रियां॥ जकुटं वार्त्ताकुपुष्पे जकुटो मलये शुनि॥ ४२॥

त्र्यंकटं शिक्यभेदेपि धौतांजन्यांचनद्वयोः॥ त्रिकूटं सिंधुलवणे त्रिकूटः पर्वतांतरे॥ ४३॥ त्रिपुटा मल्लिकायांच सूक्ष्मैलात्रिवृतोः स्त्रियां॥सतीनकेचतीरेच त्रिपुटः समुदाहृतः॥ ४४॥ द्रोहाटः कथितोगाथाप्रभेदे मृगलुब्धके॥ वैडालव्रतिकेचाऽथ धाराटश्चातकाश्वयोः॥ ४५॥ निर्दंटस्तु दयाशून्ये कथितो निष्प्रयोजने॥ परापवादरक्तेच वाच्यलिंगोयमिष्यते॥ ४६॥ निष्कुटस्तु गृहोद्याने स्यात्केदारकपाटयोः॥ पर्कटी नूतनफले पूगांदेः प्लक्षपादपे॥ ४७॥ परीष्टिः परिचर्यायां प्राकाम्येऽन्वेषणेस्त्रियाम्॥ पर्पटं पिष्टभेदेस्यात्पर्पटो भेषजांतरे॥४८॥ पात्रटः कर्परेपुंसि देशे स्यादभिधेयवत्॥ पिच्चटो नेत्ररोगे स्यात्क्लीबं सीसकरंगयोः॥ ४९॥ वरटा द्वयोर्वरट्यांस्त्री हंस्यांचतत्सतीपुमान्॥ बर्बटी पण्ययोषायां व्रीहिभेदेच योषिति॥ ५०॥ वैकटः स्याद्वैकटिके मत्स्यभेदेच यूनिच॥ भावाटो भावके साधुनिवेशे कामुकेनटे॥ ५१॥ भाकूटः शैलझषयोर्भेदेस्यादथ मर्कटी॥ करंजभिच्छूकशिंब्योः पुंसिवानरलूतयोः॥ ५२॥ मोचाटः कृष्णजीरेच रंभास्थिमलयोद्भवे॥ मोरटं तु भवेदिक्षुमूलांकोठप्रसूनयोः॥ ५३॥ सप्तरात्रात्परक्षीरे मूर्विकायांतु मोरटा॥ वर्णाटो गायने चित्रकरे स्त्रीकृतजीवने॥ ५४॥ विकटा वज्रवाराह्यां त्रिषु रूविकरालयोः॥ शाकटं शाकटस्येदमित्यर्थे तस्यनोदरि॥ ५५॥ शैलाटो देवले सिंहे शुक्लकाचे किरातयोः॥ संसृष्टं त्रिषु संसर्गे संशुद्धे वसनादिना॥ ५६॥ ॥

टचतुः॥ ॥ उल्लिंगटस्तु णगडमत्स्ये कोपनपूरुषे॥ करहाटः शिफाकंदे पद्मस्य मदनद्रुमे॥ ५७॥ स्यात्कार्यपुटः क्षपणोन्मत्तानर्थकरेषुच॥ कामकूटस्तु वेश्यायाः प्रियविभ्रमयोः पुमान्॥ ५८॥ कुटन्नटं तु कैवर्तीमुस्तके पुंसि शोणके॥ कुंडकीटस्तु चार्वाकवचनाऽभिज्ञपूरुषे॥ ५९॥ पतितब्राह्मणीपुत्रदासीकामुकयोरपि॥ खड्गरीटस्तु फलकासिधाराव्रतधारिणोः॥ ६०॥ गाढमुष्टिः कृपाणेनाकृपणे

स्वभिधेयवत्॥ चक्रवाटः क्रियारोहे पर्य्यंते च शिखांतरे॥ ६१॥ चतुःषष्टिः कलासंख्या भेदयोर्बहुनिस्त्रियां॥ नारकीटः श्मकीटेस्यात्स्वदत्ताशाविहंतरि॥ ६२॥ परपुष्टः परभृते वारनार्यां तु योषिति॥ प्रतिकृष्ट मतं गुह्ये द्विराहृत्याच कर्षिते॥ ६३॥ प्रतिसृष्टः प्रेषितेस्यात्प्रत्याख्याते च वाच्यवत्॥ वर्करादः कटाक्षेस्यात्तरुणादित्यरोचिषि॥ ६४॥ नारीपयोधरोत्संग कांतदंतनखक्षते॥ शिपिविष्टस्तु खलतौ शिवे दुश्चर्मणि स्मृतः॥ ६५॥ अथ श्रुतिकटः प्रांच लोहे च पापशोधने॥ ॥ टपंच॥ दशनोच्छिष्टः पुंसि स्यान्निश्वासाधरचुंबयोः॥ ६६॥ ॥ इतिटांतवर्गः ॥

ठेकं॥ ॥ ठो मंडले चंद्रबिंबे शून्ये च लोकगोचरे॥ ॥ ठद्वि कठो मुनौ तदाख्यात वेदाध्येतृज्ञयोः स्वरे॥ १॥ कंठो गले सन्निधाने ध्वनौ मदनपादपे॥ काष्ठा दारुहरिद्रायां कालमान प्रकर्षयोः॥ २॥ स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकं॥ कुष्ठं रोगे पुष्करे स्त्री कुंठो कर्मण्यमूर्खयोः॥ ३॥ कोष्ठः कुसूले चात्मीये मध्ये कुक्षौ गृहस्य च॥ गोष्ठं गोस्थानके गोष्ठी सभा संलापयोः स्त्रियां॥ ४॥ ज्येष्ठः श्रेष्ठेऽतिवृद्धे च त्रिषु मासांतरे पुमान्॥ ज्येष्ठा तु गृहगोधाख्य जंतु नक्षत्रभेदयोः॥ ५॥ निष्ठा निष्पत्तिनाशांतयाञ्चा निर्वहणेषु च॥ प्रष्ठस्त्रिष्वग्रगे श्रेष्ठे पुंसि स्यांडालिकौषधौ॥ ६॥ पाठश्च पठने स्यात्तो विद्धपर्ण्यां तु योषिति॥ पृष्ठं चरममात्रेपि देहस्यावयवांतरे॥ ७॥ वंठः स्यादकृतोद्वाहे खर्वे कुंतायुधेपि च॥ शाठो मध्यस्थपुरुषे धूर्तधूस्तूरयोरपि॥ ८॥ श्रेष्ठो वरे कुबेरे च शाठो मूर्खः लसेपि च॥ षष्ठी कात्यायनी तिथ्योः स्त्रिषु षण्णां च पूरणे॥ ९॥ हठः स्यात्प्रसभे पुंस्यां हेठो बाधाविहेठयोः॥ ॥

ठत्रि॥ ॥ अपष्ठु पुंसि काले च वामे स्यादन्यलिंगकः॥ १०॥ अंबष्ठो देशभेदेपि विप्राद्वैश्यासुतेपि च॥ अंबष्ठा चाम्ललोण्यांस्यात्पाठायूथिकयोरपि॥ ११॥ कमठः कच्छपे पुंसि भांडभेदे नपुंसकम्॥ क

निष्ठोऽतिपुंवात्स्वल्पानुजेस्त्रीदुर्बलांगुलौ ॥१२॥ जरठः कर्कशेपांडौ कठिणेप्यभिधेयवत् ॥ नर्मठश्चिबुकेषिड्गे प्रतिष्ठागौरवेक्षितौ ॥१३॥ स्थानेचयागनिष्पत्तिचतुरक्षरपद्ययोः ॥ प्रकोष्ठोमणिबंधस्यकूर्परस्यांतरेपिच ॥१४॥ नृपकक्ष्यांतरेपिस्याद्दरिष्ठंमरिचेपिच ॥ नाम्नेक्लीबंनितेनावरोरुतमयोस्त्रिषु ॥१५॥ मकुष्ठोव्रीहिभेदेनामंथरेपुनरन्यवत् ॥ लघिष्ठोःस्वल्पकेभेलेवैकुंठः कृष्णशक्रयोः ॥१६॥ श्रीकंठोदेशभिद्युग्रेस्माधिष्ठोऽतिदृढार्ययोः ॥ ॥ठचतुः॥ ॥ कलकंठः कलध्वानेहंसेपारावतेपिके ॥१७॥ कालकंठश्चदात्यूहेकलविंकेचखंजने ॥ मयूरे पीतशालेचस्यात्खंडपरशौपुमान् ॥१८॥ कालपृष्ठंकर्णचापेपुंसिकंकविहंगमे ॥ स्याद्दंतशठोजंबीरेकपित्थेकर्मरंगके ॥१९॥ नागरंगेपिचपुमान्स्यान्नांगेर्यांतुयोषिति ॥ पूतिकाष्ठंचसरलदेवदारुमहीरुहोः ॥२०॥ सूत्रकंठः पुमान्विप्रेखंजरीटकपोतयोः ॥ हारिकंठः पिकेपुंसिहारान्वितगलेत्रिषु ॥२१॥ ॥ इतिठांतवर्गः ॥

॥ ॥डैकं॥ ॥डः पुमान्वाडवाग्नौस्याड्डाकिन्यांस्त्रीनिगद्यते ॥ ॥

डद्वि॥ ॥अंडंमुष्केचपेश्यांस्यादिडातुबुधयोषिति ॥१॥ सौरभेय्यांचवचनेवसुमत्यामपिस्त्रियाम् ॥ कांडः स्तंबेतरुस्कंधेबाणेऽवसरनीरयोः ॥ कुत्सितेचसभिन्नाडीवृंदेरहसिनस्त्रियाम् ॥ क्रीडाकेलिप्रकारस्यात्खलावज्ञानयोरपि ॥३॥ कुंडमग्न्यालयेमानभेदेदेवजलाशये ॥ कुंडीकमंडलौजारात्पतिवत्नीसुतेपुमान् ॥४॥ पिठरेतुनना क्ष्वेडो ध्वनौकर्णामयेविषे ॥ क्ष्वेडावंशशलाकायांसिंहनादेचयोषिति ॥५॥ लोहितार्कपर्णफलेघोषपुष्पेनपुंसकम् ॥ दुरासदेचकुटिलेवाच्यलिंगः प्रकीर्तितः ॥६॥ क्रोडः शनौसूकरेनानपुमानंकरस्पसोः ॥ खंडो स्त्रीशकलेनेक्षुविकारमणिदोषयोः ॥७॥ खंडः पानांतरेभेदे गंडः स्यात्पुंसिखड्गिनि ॥ ग्रहयोगप्रभेदेचवीथ्यंगेपिटकेपिच ॥८॥ चिन्हवीरकपोलेषुहयभूषणबुद्बुदे ॥ गडुः पृष्ठगुडे

कुब्जे गडो मीनांतराययोः॥ ९॥ गुडः स्याद्गोलके हस्तिसन्नाहे इक्षु
विकारयोः॥ गुडा स्नुह्यांच कथिता गुडिकायांच योषिति॥ १०॥ गोंडः
पामरजातौ च वृद्धनाभौ च नहूनि॥ चंडो नातितिंडीवृक्षे यमकिंकरदैत्य
योः॥ ११॥ चंडा धनहरीशंखपुष्प्योः स्त्रियामति कोपने॥ चंडी कात्याय-
नीदेव्यां हिंस्रकोपनयोषितोः॥ १२॥ तीव्रेपि चूडा वडभी शिखायां बाहु
भूषणे॥ चोडः प्रावरणे भूम्नि देशभेदे जडा स्त्रियां॥ १३॥ शूकशिंब्यां
हिमग्रस्तमूकाप्रज्ञेषु तु त्रिषु॥ ताडस्तु ताडने घोषे मुष्टिमेयतृणादिषु
॥१४॥ ताडी पत्रद्रुमे चाथ दंडोऽस्त्री लगुडे पुमान्॥ व्यूहभेदे प्रकांडे
ऽश्वे कोणमंथानयोरपि॥ १५॥ सैन्ये काले मानभेदे चंडांशोः पारिपार्श्वि
के॥ दमे यमेऽभिमाने च नाडी नाले व्रणांतरे॥ १६॥ शिरायां गंडदूर्वायां
चर्यायां कुहनस्य च॥ तथा षट्क्षणकालेपि नीडं स्थानकुलाययोः॥ १७
पंडः पंडोपि च स्त्री स्यात् पांडुर्ना नृपतौ सिते॥ पिंडो बोले बले सांद्रे दे
हागारैकदेशयोः॥ १८॥ देहमात्रे निवापे च गोलसिल्हकयोरपि॥ ओड्रु
पुष्पे च पुंसि स्यात् क्लीबमाजीवनायसोः॥ १९॥ पिंडी तु पिंडीतगरेऽलाबु-
खर्जूरभेदयोः॥ पीडा कृपाशिरोमाल्याऽपमर्दसरलद्रुषु॥ २०॥ भांडं पा
त्रे वणिङ्मूलधने भूषाऽश्वभूषयोः॥ मंडः पंचांगुले शाकभेदे क्लीबं तु म
स्तुनि॥ २१॥ आमलक्यां स्त्रियां मंडाऽथाऽस्त्रियां सारपिच्छयोः॥ मुंडो
दैत्यांतरे राहुग्रहे नामुंडिते त्रिषु॥ २२॥ मुंडा मुंडीरिकायां स्यात् स्त्रियाम
स्त्री तु मूर्द्धनि॥ रंडा मूषिकपर्ण्यां च विधवायां च योषिति॥ २३॥ रोडः क्षो
दभवे पुंसि तृप्ते तु वाच्यलिंगकः॥ रंडा तु पांसुलायां स्त्री त्रिषु हस्तादिव
र्ज्जिते॥ २४॥ व्याडो हिंस्रपशौ सर्पे शुंडा पानगृहे मता॥ अप्यंबुहस्ति
नी वेश्या हस्तिहस्त स्फुरा स्फुच॥ २५॥ शौंडो मत्ते च विख्यातः पिप्पल्यां
च भवेत् स्त्रियां॥ षंडं पद्मादिसंघाते न स्त्री स्याद्गोपतौ पुमान्॥ २६॥
॥ ॥ डत्रि॥ ॥ करंडो मधुकोशासिकारंडेषु दलाढ
के॥ कूष्मांडस्तु मायां स्त्री पुंसि कर्करौ च गणांतरे॥ २७॥ भ्रूणांतरे

ऽथ कोदंडं चापेनानीवृदंतरे ॥ भुग्यथो गारुडं क्ष्वेडमंत्रेमरकते पि च ॥ २८ ॥ तरंडो बडिशीसूत्र—— बद्धकाष्ठादिके प्लवे ॥ नौकायामपि न स्त्री स्यात्तित्तिडी डिंबचिंचयोः ॥ २९ ॥ द्राविडो देशभिज्जाते संख्याभिद्वेध मुख्ययोः ॥ निर्गुंडी नीलशेफाल्यां सिंधुवारद्रुमेपि च ॥ ३० प्रचंडो दुर्वहेश्वेतकरवीरे प्रतापिनि ॥ प्रकांडो न स्त्री विटपे मूलशाखांतरे तरोः ॥ ३१ ॥ शस्तेपि चंडउदरे पशोरवयवे पुमान् ॥ पूत्यंडो गंधकीटे पि तथा जंत्वंतरे पुमान् ॥ ३२ ॥ वरंडो प्यंतरवेदी समूहमुखरोगयोः ॥ वारुंडी क्षारपिंड्यां स्त्री फणिनां राजके पुमान् ॥ ३३ ॥ न स्त्रियां सेकपात्रे च मलेक्ष्णः श्रवणस्य च ॥ भेरुंडा देवताभेद यक्षिण्यंतरयोः स्त्रियां ॥ ३४ ॥ भयानकेवाच्यवत्स्यान्मार्तंडः क्रोडसूर्ययोः ॥ मार्कंडोऽंडे भुजंगानां मार्गे गोमय मंडले ॥ ३५ ॥ वरंडा सारिकावर्त्तिशस्त्रभेदे च योषिति ॥ वितंडा वादभेदे स्यात्कच्चीशाके शिलाह्वये ॥ ३६ ॥ करवीर्यामपि स्त्री स्याच्छिखंडो बर्हचूडयोः ॥ शरंडस्तु पुमान्धूर्त्ते शरटे भूषणांतरे ॥ ३७ ॥ ॥ ङचतुः ॥ ॥ अपोगंडस्तु बलिभे विकलांगे शिशावपि ॥ अलिगंडो योगभेदे वृहद्गंडे तु वाच्यवत् ॥ ३८ ॥ चक्रवाडोऽद्रिभेदे स्याच्चक्रवाडं तु मंडले ॥ जलरुंडो जलावर्त्ते पयोरेणौ भुजंगमे ॥ ३९ ॥ देवताडः सैंहिकेये जीमूते च हुताशने ॥ अथ चालडुडा वास्या राजशोणितयोरपि ॥ ४० ॥ पिच्छिल स्फोटिकायां च वामायामपि योषिति ॥ ॥ इति डांतवर्गः ॥ ॥ ॥ ५२० ॥ ॥ ढो ढक्कायां पुमानुक्तः शुनि तस्य च लांगुले ॥ ॥

ढद्वि ॥ ॥ गूढं रहसि गुप्ते च नढयोः संवृते त्रिषु ॥ १ ॥ दृढं स्थूले नितांते च प्रगाढे बलवत्यपि ॥ माढिः स्त्री पत्रपंक्तौ च दैन्यस्यापि प्रकाशने ॥ २ ॥ मूढस्तु तंद्रिते बाले राढा स्त्री शुद्धशोभयोः ॥ रूढं जाते प्रसिद्धे च व्राढं दृढमतिज्ञयोः ॥ ३ ॥ व्यूढः संहतविन्यस्त पृथुलेष्वभिधेयवत् ॥ षोढा नाभारिके स्थूलेशं ढः स्यात्पुंसि गोपतौ ॥ ४ ॥ आढ्

षंडेवर्षवरेतृतीयाप्रकृतावपि॥षोढातितिक्षासंयुक्तेशक्तेचाप्यभि
धेयवत्॥५॥ ॥ढत्रि॥ ॥अध्यूढाकृतसापत्न्यनार्यामध्यू
ढईश्वरे॥ आषाढोव्रतिनांदंडेमासेमलयपर्वते॥६॥स्त्रीपूर्णि
मायामालीढंपादन्यासेशितेत्रिषु॥उद्गूढंऊढेस्थूलेस्यादुपोढो
निकटोढयोः॥७॥प्रगाढःकृच्छ्रदृढयोःप्रमीढोमूत्रितेघने॥प्र
रूढोजठरेबद्धमूलेवारूढइत्ययं॥८॥वस्त्रांचलेकपाटेऽश्रोपं-
जरेशंबलेपिच॥विरूढोंकुरितेजातेविगूढोगर्हितेपिच॥९॥गु
प्तेपित्रिषुसंरूढःप्रोढेचांकुरितेत्रिषु॥समूढःपुंजितेभुग्नेसद्यो
जातेनुपप्लुते॥१०॥ ॥ढचतुः॥ ॥अध्यारूढंसमारू
ढेऽभ्यधिकेचाभिधेयवत्॥खट्वारूढःश्रितेखट्वामविनीते
चवाच्यवत्॥११॥प्रत्यालीढंतुचरणन्यासभेदेशितेत्रिषु॥ छ
इतिढांतवर्गः॥ ॥५३१॥ ॥णैकम्॥ ॥णःपु-
मान्बिंदुदेवेस्याद्भूषणेगुणवर्जिते॥पानीयनिलयेपीतिकेचिदूचुर्वि
पश्चितः॥१॥ ॥णद्वि॥ ॥अणुर्व्रीहिविशेषेस्यात्पुंसिसूक्ष्मे
भिधेयवत्॥अणिराणिवदक्षाग्रकीलाश्रिसीमसुद्वयोः॥२॥
उष्णोग्रीष्मेपुमान्दक्षाशीतयोरन्यलिंगकः॥ऊर्णामेषादिलो-
म्निस्यादंतरावर्तकेभ्रुवोः॥३॥कर्णःपृथाज्येष्ठसुतेसुवर्णालौश्रु
तावपि॥क्षणःपर्वोत्सवव्यापारेषुमानेऽप्यनेहसः॥४॥कणा-
जीरककुंभीरमक्षिकापिप्पलीषुच॥कणोऽतिसूक्ष्मेधान्यांशे-
काणःकाकेकचक्षुषोः॥५॥कीर्णश्छन्नेचविक्षिप्तेहिंसितेप्यभिधे
यवत्॥कुणिस्तुन्नकवृक्षेनाकुकरेत्वभिधेयवत्॥६॥कृष्णः
सत्यवतीपुत्रेवायसेकेशवेऽर्जुने॥कृष्णास्याद्द्रौपदीनीलीकणा
द्राक्षासुयोषिति॥७॥मेचकेवाच्यलिंगःस्यात्क्लीबेमरिचलोह
योः॥कोणोवाद्यप्रभेदेस्याद्वीणादीनांचवादने॥८॥एकदेशेगृहा-
दीनामश्रौचलगुडेपिच॥गणःप्रथमसंख्यौघेचंडासैन्यप्रभेदयोः

॥ ९॥ गुणो मौर्व्यामप्रधाने रूपादौ सूद इंद्रिये॥ त्यागशौर्यादिस
त्वादिसंध्याद्यावृत्तिरज्जुषु॥१०॥ शुक्लादावपिवद्यांच गेष्णुर्ना
गायनेनटे॥ घ्राणं क्लीबंनासिकायां घ्रातेस्याद्वाच्यलिंगकं॥ ११॥
घृणाजुगुप्साकृपयोरथ चूर्णी कपर्दके॥ चूर्णो धूलौक्षारभेदेचू
र्णानिवासयुक्तिषु॥१२॥ जर्णुश्चंद्रेच वृक्षेच जिष्णुर्ना वासवेर्जुने
॥ जित्वरेवाच्यवज्जीर्णं परिपक्वपुराणयोः॥१३॥ झूणिः क्रमुकभे
देपिदुष्टदैवश्रुतौस्त्रियां॥ त्राणं तु त्रायमाणायां रक्षणेरक्षितेत्रिषु
॥१४॥ तीक्ष्णं सामुद्रलवणेविषलोहाजिमुष्कके॥ क्लीबं जवाग्रजेपुं
सितिग्मात्मत्यागिनोस्त्रिषु॥१५॥ तूणी नील्यांनिषंगेना तृष्णा-
स्यात्तर्षलिप्सयोः॥ दीर्णं विदारितेभीते द्रुणं चापेऽलिनि द्रुणः॥१६
द्रुणयं बुद्रोणीकच्छप्यौर्देष्णुर्दातरिदुर्गमे॥ द्रोणोऽस्त्रियामाढके
स्यादाढवापचतुष्टये॥ १७॥ पुमान्कृपीपतौदग्धकाकेस्त्रीनीवृदंतरे
॥ तथाकाष्ठांबुवाहिन्यां गवादिन्यामपीष्यते॥ १८॥ पणो वराटमानेस्या
न्मूल्येकार्षापणेग्रहे॥ क्रय्यद्याकादिकायूतव्यवहारेभृतौधने॥ १९
पर्णं पत्रेकिंशुकेना पार्ष्णिः स्यादुन्मदस्त्रियां॥ स्त्रियां द्वयोः सैन्यपृ
ष्ठेपादग्रंथ्यधरेपिच॥२०॥ प्राणो हृन्मारुतेबोले काव्यजीवेऽनिलेब
ले॥ पुल्लिंगः पूरितेवाच्यलिंगः पुंभूम्निचासुषु॥ २१॥ पूर्णः शक्तेसमग्रे
नापूरितेत्वभिधेयवत्॥ फाणिर्गुडेकरंवेच स्त्रियां वाणीतुयोषिति
२२॥ स्तुतावपिसरस्वत्यां भ्रूणः स्त्रीगर्भडिंभयोः॥ मणिः स्त्रीपुंस
योरश्मजातौमुक्तादिकेपिच॥२३॥ कंठदेशेस्तनेजायालिंगाग्रेऽलिंज
रेपिच॥ मोणः शुष्कफलेनक्रमक्षिकाऽहिकरंडयोः॥२४॥ रणः कोणे
क्वणेपुंसिसमरेपुंनपुंसकं॥ रेणुः स्त्रीपुंसयोर्धूलौपुल्लिंगः पर्पटेपुनः
॥२५ वर्णो द्विजादिशुक्लादियशोगुणकथासुच॥ स्तुतौनामस्त्रि
यांभेदरूपाक्षरविलेपने॥ २६॥ बाणः स्याद्गोस्तनेदैत्यभेदेकेवलकां
डयोः॥ वाणातुवाणमूलेस्त्रीनीलझिंझ्यांपुनर्द्वयोः॥२७॥ वीणाविद्यु

निवल्लक्यां वृष्णिः पांडवचंद्रयोः॥ त्रिषु नायादवे मेषे वेणी केशस्यबंधने॥२८॥ नद्यादेरंतरे देवताले वेणुर्नृपांतरे॥ त्वक्सारेपि च पुंसि-स्याच्छाणो मासचतुष्टये॥२९॥ लौहादीनां च निघ्नके शाणी प्रावरणांतरे॥ श्राणं पक्वे यवाग्वां स्त्री शीर्णं तनुविशीर्णयोः॥३०॥ श्रेणिः स्त्री पुंसयोः पंक्तौ समानशिल्पिसंहतौ॥ शोणः कृशानोऽश्योनाके लोहिताश्वे नदे पुमान्॥३१॥ त्रिषु कोकनदच्छाये स्थाणुः कीलहरे पुमान्॥ अस्त्री ध्रुवेऽथ स्थूणा स्यात्सूर्म्यां स्तंभे गृहस्य च ३२ णत्रि अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ॥ निःशब्दे कपिले कुष्ठभेदेनाशुणिनि त्रिषु ३३॥ अरुणाऽतिविषाश्यामा मंजिष्ठा त्रिवृतासु च॥ अरणिर्वह्निमंथे नाद्वयोर्निर्मथ्यदारुणि ३४ अभीक्ष्णं तु भृशे नित्ये तद्युक्तक्रिययोस्त्रिषु॥ इंद्राणी करणे स्त्रीणां पौलोमासिंधुवारयोः॥३५॥ ईरिणं नूषरे शून्ये पीक्षणं दर्शने दृशि॥ उषणं मरिचे क्लीबं कणायां मुषणा स्त्रियाम्॥३६॥ एषणी-व्रणमार्गानुसारिण्यां च तुलाभिदि॥ करुणस्तु रसे वृक्षे कृपायां करुणा मता॥३७॥ कर्त्तृणं तृणभिसृभ्योः करणं हेतुकर्मणोः॥ वणिजादौ हस्तलेपे नृत्यगीतप्रभेदयोः॥३८॥ क्रियाभेदेंद्रियक्षेत्रकायसंवेशनेषु च॥ कायस्थे साधने क्लीबं पुंसि शूद्राविशोः सुते॥३९॥ कल्याणमक्षयस्वर्गे मंगलेपि नपुंसकं॥ कंकणं करभूषायां सूत्रमंडनयोरपि॥४०॥ करेणुर्गजयोषायां स्त्रियां पुंसि मतंगजे॥ कार्मणं मंत्रतंत्रादियोजने कर्मठेपि च॥४१॥ काकिणी पणतुर्यांशे मानदंडे च दृश्यते॥ कृष्णलैकवराट्योः स्यादुन्मानस्यांशकेपि च॥४२॥ कारणं करणे हेतुवधयोश्च नपुंसकम्॥ स्त्री यातनायां कुर्वाणो भृत्यकारकयोस्त्रिषु॥४३॥ कृपाणः खड्गे छुरिका कर्त्तर्योरपि योषिति॥ कृपणस्तु कृमौ पुंसि मंदकुत्सितयोस्त्रिषु॥४४॥ क्षेपणं प्रेरणे नौकादंडजालभिदोः स्त्रियां॥ ग्रहणं स्वीकारदरकरोपरागोपलब्धिबंदिषु॥४५॥ स्याद्ग्रामणीः प्रधानेऽधिपतौ त्रिषु नापिते पुंसि॥ ग्रामीणा नीलिकायां स्त्री ग्रामोद्भूतेऽभिधेयवत्॥

॥४६॥ गोकर्णोऽश्वतरे सर्पे सारंगे च गणांतरे॥ अंगुष्ठानामिकोन्माने गोकर्णी मूर्विकौषधौ॥४७॥ चरणो ऽस्त्री बह्वृचादौ मूले गोत्रे पदेपि च ॥ चमणो भक्षणे चापि नपुंसक उदाहृतः॥४८॥ जरणं जीरके ऽजाजी हिंगु सौवर्चले पि च॥ तरुणं कुब्जपुष्पे ना रुबुके यूनि तु त्रिषु॥४९॥ तरणिर्द्युमणौ पुंसि कुमारी नौकयोः स्त्रियां॥ दक्षिणो दक्षिणोद्भूत सरलछंदवर्त्तिषु॥५०॥ आरामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम्॥ द्रविणं नहृयोर्वित्ते कांचने च पराक्रमे॥५१॥ दारुणो रसभेदे ना त्रिषु तु स्याद्भयावहे॥ द्रुघणो मुद्गरेपि स्यान्द्रुहिणे च परश्वधे॥५२॥ दुर्वर्णं त्रिषु सद्वर्णे क्लीबमैलेयरूप्ययोः॥ दौर्वीणं भ्रष्टपर्णे स्याद्दूर्वायां स्वरसेपि च॥ ५३॥ धर्मणस्तु पुमान्वृक्षभेदसर्पप्रभेदयोः॥ धरणं मानभेदेपि धारणे धरणी भुवि॥५४॥ धर्षणं स्यात्परिभवे रते ऽसत्यां तु धर्षिणी॥ धरुणः सम्मते नीरे स्वर्ल्लोके परमेष्ठिनि॥५५॥ धारणी नाडिकायां स्याद्ध्रुवोन्क्रमं त्रभिद्यपि॥ धारणा गेच योगस्य नपुंसि स्याद्धिधारणे॥५६॥ धिषणस्त्रिदशाचार्ये धिषणा धियियोषिति॥ निःश्रेणिरधिरोहिण्यां खर्जूरीपादपे स्त्रियाम्॥५७॥ निर्याणं वारणापांगदेशे मोक्षे ध्वनिर्गमे॥ निर्माणं निर्मितौ सारे समंजसे नपुंसकं॥५८॥ निर्वाणमस्तंगमने निर्वृतौ गजमज्जने॥ संगमेप्यपवर्गे च प्रवणो ना चतुष्पथे॥५९॥ क्रमनिम्नमहीभागोदरप्रह्वेषु च त्रिषु॥ प्रघणस्ताम्रकुंभे स्यादलिंदे लोहमुद्गरे॥ ६०॥ प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि॥ इयत्तायां च हेतौ च क्लीबैकले प्रमातरि॥६१॥ पत्रोर्णं धौतकौशेये क्लीबं स्याच्छोणके पुमान्॥ पक्षिणी पूर्णिमायां स्याद्विहग्यां शाकिनीभिदि॥ ६२ आगामिवर्तमानाहर्युक्तरात्रावपि स्त्रियाम्॥ प्रवेणिः स्त्री कुथावेण्योः पुराणं पंचलक्षणे॥ ६३॥ पणे पुंसि त्रिषु प्रत्ने पूरणः पूरके त्रिषु॥ क्लीबं पिंडप्रभेदे च पूरणी शाल्मलिद्रुमे॥६४॥ पटारंभकसूत्रेषु प्रोक्षणं सेचने वधे॥ वरुणास्तरुभेदे ऽप्सु पश्चिमाशापतावपि॥६५॥ वरुणस्तु पु

मानुनिष्कशाकप्राकारयोरपि॥ क्लीबंकन्यादिवरणेवेष्टनेस्त्रीनदीभि
दि॥६६॥ वारणंप्रतिषेधेस्याद्वारणस्तुमतंगजे॥ ब्राह्मणंब्रह्मसं
घातेवेदभागेनपुंसकं॥६७॥ भूमिदेवेतुपुल्लिंगःस्फुजिकापृक्कयोःस्त्रि
याम्॥ वारुणीगंडदूर्वायांप्रतीचीसुरयोरपि॥६८॥ भरणीघोषकेऋ
क्षेभरणंवेतनेभृतौ॥ भ्रमणीकारंडिकायांक्रीडाद्यायामधीशितुः
॥६९॥ भीषणोरसेसल्लक्यांनागादेदारुणेत्रिषु॥ मसृणोऽकर्कशे
स्निग्धेत्रिषूमायांतुयोषिति॥७०॥ मत्कुणोनिर्विषाणेभेनिःश्मश्रुपु
रुषेपिच॥उद्दंशोनालिकेरेच मार्गणोयाचकेशरे॥७१॥ याच्ञान्वेष
णयोःक्लीबं यंत्रणंरक्षणेस्मृतं॥ बंधनेस्यान्नियमनेरवणःशब्दने-
स्वरे॥७२॥ रमणंपटोलमूलेनार्यांस्त्रीनाधवेस्मरे॥ रोषणःपारदेहे
मघर्षणोपलयोःपुमान्॥७३॥ क्रोधनेवाच्यलिंगःस्या द्रोहिणीकंठ-
रुग्भिदि॥ तडित्कटुंभरासोमवल्केषुलोहितागवोः॥७४॥ लवणंसैं
धवादौनासिंधुरक्षोभिदोरसे॥ तद्युक्तेवाच्यलिंगःस्यान्नदीभेदेद्वयोः
स्त्रियाम्॥७५॥ लक्षणंनाम्निचिन्हेचसारस्यांलक्ष्मणाक्वचित्॥
लक्ष्मणात्वौषधीभेदेसारस्यामपियोषिति॥७६॥ रामभ्रातरिपुंसि
स्यात्सश्रीकेचाभिधेयवत्॥ विषाणीक्षीरकाकोल्यांअजशृंग्यांच
योषिति॥७७॥ कुष्ठनाम्नौषधेक्लीबंपशुशृंगेभदंतयोः॥ विपणिःप-
ण्यवीथ्यांचभवेदापणपण्ययोः॥७८॥ शरणंगृहरक्षित्रोर्वधरक्ष-
णयोरपि॥ श्रवणंचश्रुतौकर्णेनक्षत्रेनपुंसकम्॥७९॥ श्रमणोय
तिभेदेनानिंद्यजीविनितुत्रिषु॥ स्त्रियांसुदर्शनामांस्योर्मुंडरीशबरी
भिदोः॥८०॥ श्रावणोमासिपाखंडेद्ध्याल्यांश्रावणास्त्रियां॥ शिं
घाणंकाचपात्रेचलोहनासिकयोर्मले॥८१॥ श्रीपर्णीकाश्मरीकुंभ्योः
क्लीबंपद्माग्निमंथयोः॥संकीर्णनिचितेपिस्यादशुद्धेचापिभेद्यवत्॥
८२॥ सरणिःपंक्तौमार्गेचसारणोराक्षसांतरे॥ रुग्भेदेनाप्रसारण्यां
स्वल्पनद्यांचसारणी॥८३॥ सुषेणःकरमर्देस्याद्विष्णुसुग्रीववैद्य-

योः॥ सुवर्णोनास्वर्णकर्षेसुवर्णातुमरवांतरे॥ ८४॥ श्रीकृष्णागुरुणि
क्लीबेकांचनेहरिचंदने॥ सुपर्णः स्वर्णचूडेचगरुडेकृतमालके॥ ८५॥
सुपर्णाकमलिन्यांचवैनतेयस्यमातरि॥ हरेणुर्नासतीलेस्त्रीरेणु-
काकुलयोर्मितोः॥ ८६॥ हरणंयौतकादीनांद्रव्येभुजेहृतावपि॥ ह
रिणः पुंसिसारंगेविषदेत्वभिधेयवत्॥ ८७॥ हरिणीहरितायांचनारी
भिद्वृत्तभेदयोः॥ सुवर्णप्रतिमायांचहर्षणोऽक्षिरुगंतरे॥ ८८॥ हर्षके
योगभेदेचश्राद्धदेवेपिचक्वचित्॥ हिरण्यंरेतसिस्वर्णेवराटेचनपुंस
कम्॥ ८९॥ ॥णचतुः॥ ॥अंगारिणीहसंत्यांचभास्कर
त्यक्तदिश्यपि॥ अथर्वणिर्नाऽथर्वज्ञब्राह्मणेचपुरोधसि॥ ९०॥ आ
तर्पणंप्रीणयेस्यान्मंगलालेपनेपिच॥ आरोहणंस्यात्सोपानेसमा
रोहेप्ररोहणे॥ ९१॥ उत्क्षेपणंतुव्यजनेधान्यमर्दनवस्तुनि॥ स्यादु
द्धरणमुद्धारवांतान्नोन्मूलनेष्वपि॥ ९२॥ कार्षापणोऽस्त्रीकार्षिकेप
णषोडशकेपिच॥ अथकामगुणोरागेविषयाभोगयोरपि॥ ९३॥ ची
र्णपर्णंतुनिंबेपिखर्जूरीभूरुहेपुमान्॥ चूडामणिःशिरोरत्नेकाकचि
ञ्चाफलेपुमान्॥ ९४॥ जुहुवाणोऽपिचाध्वर्यावपिस्याज्जातवेदसि॥
तंडुवीणःकीटमात्रेबर्बरेतंडुलोदके॥ ९५॥ त्रायमाणावार्षिकेस्त्री
रक्ष्यमाणेऽभिधेयवत्॥ तैलपर्णीमलयजेश्रीवासेसिल्हकेपिच॥ ९६॥
दाक्षायणीत्वपर्णायामश्विन्याद्युडुषुस्त्रियां॥ अथदेवमणिर्भर्गेऽ
श्वावर्तेकौस्तुभेपिच॥ ९७॥ नारायणोच्युतेभीरुगौर्योर्नारायणी
मता॥ अथोनिगरणंक्लीबंभोजनेस्याद्गलेपुमान्॥ ९८॥ अथनिःस
रणंमृत्यूपायमोक्षेषुनिर्गमे॥ स्यान्निस्तरणमुपायेनिस्तारेतरणेपि
च॥ ९९॥ निरूपणंस्यादालोकेविचारेचनिदर्शने॥ पर्परीणाश्चपर्ण-
स्यशिरायांचूनकंबले॥ १००॥ पर्णचूर्णरसेपिस्यात्पर्परीणंतुपर्वणि
॥ प्रवारणंनिषेधेस्यात्काम्यदानेचनद्वयोः॥ १०१॥ परीरणःस्यात्कम
ठेदंडेचपट्टशाटके॥ परायणमभीष्टेस्यात्तत्पराश्रययोरपि॥ १०२॥

परवाणिः पुमान्धर्माध्यक्षवत्सरयोरपि ॥ परायणं समासंगत्ता-
त्पर्यपारगतावपि ॥ १०३ ॥ पीलुपर्णी बिंबिकायां मूर्वायामौषधीभि
दि ॥ अथ पुष्करिणी चेभ्यां सरोजिन्यां जलाशये ॥ १०४ ॥ मधुपर्णी
तु गंभार्यां नीलीसंज्ञौषधावपि ॥ मीनी स्त्रीणा स्त्तु पुल्लिंगो दुर्दुरामे च
खंजने ॥ १०५ ॥ रक्तरेणुस्तु सिंदूर पलाशकोरके पुमान् ॥ रागचूर्-
णः पुमान्दंनधावने मकरध्वजे ॥ १०६ ॥ रैरिहाणास्तु पुंसिस्यान्म
हादेवे वरेपि च ॥ लंबकर्णः स्मृतो कोठ पादपे छगलेपि च ॥ १०७ ॥
विदारणं विडंबे च भेदे क्लीबं रणे द्वयोः ॥ अथ वैतरणी नद्यां प्रेता
नां यातु मालरि ॥ १०८ ॥ शरवाणिः शरमुखे पापिष्ठे शरजीविनि ॥
पुमानथो शिखरिणी रसाला वृत्तभेदयोः ॥ १०९ ॥ नारीरत्ने मल्लि
कायां रोमावल्यामपि स्त्रियां ॥ अथ संसरणं क्लीबमसंबाधचमूग-
तौ ॥ ११० ॥ घंटापथे च संसारे रणारंभे च कुत्रचित् ॥ समीरणः स्यात
पवने पथिके च फणिज्जके ॥ १११ ॥ हस्तिकर्णश्चोरुबूके पलाशग
णभेदयोः ॥ ॥ णपंच ॥ ॥ अवग्रहणमित्येन स्मृतिरोधे
प्यनादरे ॥ ११२ ॥ अवतारणं भूतादिग्रहे वस्त्रांचलेर्चने ॥ प्रविदा
रणमाख्यानं संपराये विदारणे ॥ ११३ ॥ परिभाषायां सन्निंदोपालंभने
नियमेपि च ॥ उक्तो मत्तवारणस्तु प्रक्लिन्नकटकुंजरे ॥ १४ ॥ क्लीबं
प्रासादवीथीनां कुंडवृक्षइतावपि ॥ मंडूकपर्णी मंजिष्ठाब्राह्मण्योर्ना
तु शोणके ॥ १५ ॥ रोमहर्षणं रोमांचे नासूतेच विभीतके ॥ वात
रायण उन्मत्ते निष्प्रयोजनपूरुषे ॥ १६ ॥ कांडे च परपत्रे च कूटे च पर
संक्रमे ॥ ॥ णषट् ॥ ॥ दोहदलक्षणं मुक्तं वयः संधौ च
गर्भे च ॥ १७ ॥ यौवनलक्षणं मध्याख्यातं लावण्यकुचयोश्च
॥ ॥ ॥ इति णांतवर्गः ॥ ॥ ६४९ ॥ ॥ तैकं ॥
त श्चौरामृतपुच्छेषु क्रोडे म्लेच्छे च कुत्रचित् ॥ अपुमांस्तरणे पुण्ये क-
थितः शब्दवेदिभिः ॥ १ ॥ ॥ तद्वि ॥ ॥ अस्तं क्षिप्तेप्यवसिते

त्रिषु नापि श्चिमाचले॥ अंतं स्वरूपे नाशे नानस्त्री शेषेऽन्तिके त्रि
षु॥२॥ आर्त्तिः पीडाधनुष्कोट्योः स्यासेलब्धेस्वसत्तयोः॥ आ
प्तिः स्त्री योगसंप्राप्त्योरितं स्मृते गते त्रिषु॥ ईतिर्डिंबे प्रवासे ति
वृष्यादिषट्के च स्त्रियाम्॥ उक्तमेकाक्षरे छंदस्युक्तं स्याद्भाषि
ते त्रिषु॥४॥ ऊतिः स्त्री रक्षणे स्यूतावृतिः कल्याणवर्त्मनोः॥ जुगु
प्सास्पर्धयोः स्त्री स्यादृतं मुञ्छशिलेजले॥५॥ सत्ये दीप्ते पूजिते स्या
दृतुर्वर्षादिषट्के च॥ आर्तवे मासि च पुमानेतः कर्बुर आगते॥६॥
क्षत्ता शूद्रात्क्षत्रियजे प्रतीहारे च सारथौ॥ भुजिष्यातनयेपि स्या-
न्नियुक्ते वेधसोः पुमान्॥७॥ कर्ता तु कारके वाच्यलिंगो ना परमेष्ठि
नि॥ क्रतुर्यज्ञे मुनौ पुंसि कांतिः शोभेच्छयोः स्त्रियाम्॥८॥ कां
ता नार्यां प्रियंगौ स्त्री शोभने त्रिषु नाथवे॥ लोहे च चंद्रसूर्यीयः पर्या
यांतः शिलासु च॥९॥ क्षितिर्निवासे मेदिन्यां कालभेदे क्षये स्त्रि
याम्॥ कीर्त्तिः प्रसादयशसोर्योषित् कुंतो गवेधुकायां स्यात्॥
१०॥ प्रासायुधे च कुंती गुग्गुलुपृथयोश्च शल्लक्यां॥ कृतं युगेल
मर्थे स्याद्विहिते हिंसिते त्रिषु॥११॥ कृत्तं तु वेष्टिते छिन्ने कृतिः का
रणाहिंसयोः॥ कृत्तिश्चर्मणि भूर्जे कृत्तिकार्थाहृये स्त्रियाम्॥१२॥
केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्ष्मणि॥ गर्त्तः स्त्री गर्त्तभेदे स्या
दवटे च कुकुंदरे॥१३॥ ग्रस्तं ग्रासीकृतेपि स्याल्लुप्तवर्णपदेपि च॥
गतिः स्त्री मार्गदशयोर्ज्ञाने यात्राभ्युपाययोः॥१४॥ नाडीव्रणसर
ण्यां च गतं विज्ञानयातयोः॥ गातुर्ना कोकिले भृंगे गंधर्वे त्रिषु रोष
णे॥१५॥ गीतिश्छंदसि गाने स्त्री गीतं शब्दितगानयोः॥ गुप्तिः स्त्र्य
प्रकरस्थाने कारागारे च रक्षणे॥१६॥ गुप्तं स्याद्रक्षिते गूढे घातः
कांडप्रहारयोः॥ घृतमाज्ये जले क्लीबं प्रदीप्ते त्वभिधेयवत्॥१७॥
चित्तं छन्ने त्रिषु चिता चित्यायां संहतौ स्त्रियाम्॥ चितिश्चि
त्यावृंदयोः स्त्री जातं व्यक्तौघजन्मसु॥१८॥ क्लीबं त्रिलिंगमुत्पन्ने

जातिः स्त्रीगोत्रजन्मनोः॥ अश्मन्तिकामलक्योश्च सामान्यच्छन्दसोरपि ॥ १९॥ जातीफलेच मालत्यां ज्ञातिस्तातसगोत्रयोः॥ पुमानथ ततं व्याप्ते विस्तृते चत्रिलिंगकं ॥ २०॥ क्लीबं वीणादिवाद्येस्यात्पुल्लिंगस्तु समीरणे॥ तातोनुकंप्ये जनके तिक्तोरसस्कगंधयोः॥ २१॥ तिक्ता तु कटुरोहिण्यां पर्पटे तु नपुंसकम्॥ तूस्तं रेणौच विख्यातं जटायां च नपुंसकम्॥ २२॥ त्रेता युगे त्रिभिश्रितये दत्तं विश्राणिते त्रिषु रक्षिते च दत्तो द्विकटके कुंजे दशाने योषधौ स्त्रियाम्॥ २३॥ दान्तस्तु दमिने पि स्यात्तपःक्लेशसहे त्रिषु॥ दितिर्दैत्यजनन्यां च खंडनेपि च योषिति॥ २४॥ दीप्तं निर्भासिते दग्धे ज्वलिते च त्रिषु॥ शीघ्रे विलीने वेश्मणे द्युतिः स्त्री रश्मिशोभयोः॥ २५॥ दृतिश्चर्मपुटे मत्स्ये ना धातुर्नेंद्रियेषु च॥ शब्दयोनिमहाभूतत्तद्गुणेषु रसादिषु॥ २६॥ मनःशिलादौ श्लेष्मादौ विशेषादस्थिरिके स्थिरे च॥ धाता हिरण्यगर्भे ना पालके त्रिषु योधुतं॥ २७॥ त्यक्ते विधूते धूतं तु कंपिते भर्त्सिते त्रिषु॥ धूर्तं तु खंडलवणे धूस्तूरे ना विटे त्रिषु॥ २८॥ धृतिर्नैष्ठौ स्त्रियां तुष्टौ योगभिद्धैर्यधारणे॥ नतं तगरपाद्यां स्यात्क्लीबं कुटिलनम्रयोः॥ २९॥ त्रिषु नीतिर्नये पि स्यात्प्रापणे पि च योषिति॥ पंक्तिः स्त्री गौरवे पाके पत्तिर्ना पदगे स्त्रियां॥ ३०॥ गतावेकरथैकेभत्र्यश्वपंचपदातिके॥ पंक्तिः दशाक्षरं छंदो दशसंख्याली बुस्त्रियाम्॥ ३१॥ पतिर्धवे ना त्रध्वीशे प्राप्तं लब्धे समंजसे॥ पातो निपातने त्राते त्रिषु प्राप्तिर्महोदये॥ ३२॥ लाभेपि च स्त्रियां प्रातिः पूर्तिप्रादेशयोः स्त्रियाम्॥ पीतिर्ना श्वे स्त्रियां पाने पीतं दक्षिण नर्मणोः॥ ३३॥ पीतं पाने हरिद्रायां स्त्रियां गौरे ऽभिधेयवत्॥ प्रीतिर्योगांतरे प्रेम्णि स्मरपत्नी मुदोः स्त्रियाम्॥ ३४॥ पुस्तं क्लीबे पुस्तके च लेप्यादिशिल्पकर्मणि॥ प्लुतं तुरंगमगतौ क्लीबं पुंसि त्रिमात्रके॥ ३५॥ पूतं त्रिषु पवित्रे च शारिते बहुलीकृते॥ पूर्तं त्रिषु पूरिते स्यात्क्लीबं खातादिकर्मणि॥ ३६॥ प्रोतं नपुंसकं वस्त्रे खचिते वाच्य

लिंगकं॥ प्रेतो भूतांतरे पुंसि मृते स्याद्वाच्यलिंगकः॥ ३७॥ पोतः शि
शौ वहित्रे च गृहस्थाने च वाससि॥ वृतिस्तु वरणेपि स्याद्वेष्टनेऽपि च
योषिति॥ ३८॥ भर्ता स्वामिनि पुंसि स्यात्त्रिषु धातरि पोष्टरि॥ भक्ति
र्विभागे सेवायां स्त्रियां भ्रांतिस्तु योषिति॥ ३९॥ मिथ्यामतौ च भ्रम
णे भित्तिः कुड्यप्रदेशयोः॥ भीतिर्भये स्त्रियां भीतं भयेऽथ भीयु
ते त्रिषु॥ ४०॥ भूतिर्भस्मनि संपत्तौ हस्तिशृंगारयोः स्त्रियाम्॥ भूतं
क्ष्मादौ पिशाचादौ जंतौ क्लीबं त्रिषूचिते॥ ४१॥ प्राप्ते वित्ते समे सत्ये देवयो
न्यंतरे तु ना॥ कुमारेपि भृतिः स्त्री स्यान्मूल्येपि भरणेपि च॥ ४२॥ मतं
तु सम्मते ज्ञाने मतिः स्त्रीच्छाधियोः स्मृतौ॥ मंतुः पुंस्यपराधेपि मनुष्येपि
प्रजापतौ॥ ४३॥ माता गौर्यादिजननी गोब्राह्मण्यादिभूमिषु॥ मातिर्मा
नेप्यवच्छेदे मुक्तिर्मोक्षे च मोक्षणे॥ ४४॥ मात्रादयः स्त्रियां मुक्तः प्राप्त
मोक्षे च मोचिते॥ त्रिषु स्त्री मौक्तिके मूर्तिः कायकाठिन्ययोः स्त्रियाम्
॥४५॥ मूर्तः स्यात्त्रिषु मूर्छाले कठिने मूर्तिमत्यपि॥ मृतं तु याचिते मृत्यौ
क्लीबं मृत्युमति त्रिषु॥ ४६॥ यतिः स्त्री पादविच्छेदे निकारयतिनोः पु-
मान्॥ यंता मेठे च सूते ना युक्तिः स्त्री न्याययोगयोः॥ ४७॥ युतो यु
क्तोऽपृथग्भूते क्लीबं हस्तचतुष्टये॥ रक्तोनुरक्ते नील्यादिरंजिते लो-
हिते त्रिषु॥ ४८॥ क्लीबं तु कुंकुमे ताम्रे प्राचीनामलके सृजि॥ रतिः
स्त्री स्मरदारेषु रागे सुरतगुह्ययोः॥ ४९॥ रत्नं वर्त्मनि नद्यां स्त्री रतं
सुरतगुह्ययोः॥ रिक्तं शून्ये वने रीतिः स्त्रियां स्पंदप्रचारयोः॥ ५०॥
पित्तले लोहकिट्टे च लता प्रियंगुशाखयोः॥ पृक्काज्योतिष्मतीवल्ली
रुत्ताकस्तूरिकासु च॥ ५१॥ माधवीदूर्वयोर्लिप्तं विलिप्तविषदिग्ध
योः॥ भुक्ते लूतानूर्णनाभपिपीलिकागदांतरे॥ ५२॥ वप्ता तु जनके पुं
सि वापकेप्यभिधेयवत्॥ वक्ता तु पंडितेपि स्याद्वाग्मिन्यप्यन्यलिंग
कः॥ ५३॥ व्यस्तं तु व्याकुले व्याप्ते व्यक्तः स्फुटमनीषिणोः॥ वस्ति
र्द्वयोर्निरूहे नाभ्यधोभूमिदशासु च॥ ५४॥ वर्त्तिर्भेषजनिर्माणेन

यनांजनलेरसयोः॥ गात्राऽनुलेपनीदीपदशादीपेषुयोषिति॥ ५५॥ वार्त्तातुवर्त्तनेवार्त्तिंगणेकृष्याद्युदंतयोः॥ निःसारारोग्ययोः क्लीबंवृत्तिर्मद्वारुजोः स्त्रियां॥ ५६॥ व्याप्तंरव्यातेसमाक्रांते व्याप्तिर्व्यापनरंभयोः॥ स्त्रियांवित्तिर्विचारेचलाभसंभावयोःस्त्रियां॥ वित्तंक्लीबंधनेवाच्यलिंगंरव्यातेविचारिते॥ ५७॥ वीतमसारगजेस्यादंकुशकर्म-प्वसारतुरगेपि॥ वीतिर्गतौचदीप्तौप्रजनाशनधावनेषुस्त्री॥ ५८॥ वृत्तिर्विवरणाजीवकैशिक्यादिप्रवर्तने॥ ५९॥ स्त्रीवृतंप्रसवबंधेघटीधाराकुचाग्रयोः॥ वृत्तोऽधीतेप्यतीतेनिवर्तुलेपिवृतेमृते॥ ६०॥ वृत्तेऽन्यलिंगंवाक्लीबंछंदश्चारित्रवृत्तिषु॥ शक्तिरस्त्रांतरेगौर्यामुत्साहा-दिबलेस्त्रियां॥ ६१॥ शस्तंक्षेमेप्रशस्तेचशांतिः स्त्रीमंगलेशमे॥ शास्तासमंतभद्रेनाशासकेपुनरन्यवत्॥ ६२॥ शांतोऽभियुक्तरसयोः पुंसित्रिषुशमान्विते॥ अव्ययंवारणेशांतं शातं शितंचदुर्बले॥ ६३॥ निशितेचशितिर्भूर्जेनासितासितयोस्त्रिषु॥ शीतंहिमगुणेक्लीबंशीतलालसयोस्त्रिषु॥ ६४॥ वानीरेबहुवारेनाशक्तंपूताम्लनिष्ठुरे॥ श्रुतिःश्रोत्रेचतत्कर्मण्याम्नायवार्तयोःस्त्रियाम्॥ ६५॥ शुक्तिःकपालशकलेशंखेशंखनखेपिच॥ नख्यश्चावर्त्तदुर्नामसुक्तास्फोटेषुचस्त्रियां॥ ६६॥ श्रुतमाकर्णितेशास्त्रेश्वेतोद्वीपाद्रिभेदयोः॥ श्वेतावराटिकाकाष्ठपाटलाशंखिनीषुच॥ ६७॥ क्लीबंरूप्येऽन्यवच्छुक्लेसत्त्वसाधौधीरशस्तयोः॥ मान्येसत्येविद्यमानेत्रिषुसाध्व्युमयोस्त्रियां॥ ६८॥ सातिर्दानेऽवसानेस्त्रीस्वांतंचेतसिगह्वरे॥ स्थितंप्रतिज्ञातवतिचोर्ध्वनिश्चलयोस्त्रिषु॥ ६९॥ स्थितिःस्त्रियामवस्थानेमर्यादायांचसीमनि॥ सितमवसितेचबद्धेधवलेत्रिषुधवलायां-स्त्री॥ ७०॥ सीतालांगलपद्धतिर्वैदेहीस्वर्गगंगासु॥ सक्तस्तक्पार्थिवेपुंस्येव्यपत्येतुसुतास्मृता॥ ७१॥ स्फातिः स्पर्शांजनानिद्राविश्रमेष्वपीस्त्रियाम्॥ सूतस्तकेसारथौतक्ष्णिक्षत्रियाद्ब्राह्मणीसुते॥ ७२॥ बंदि

तिः स्यादायुधज्वालासूर्यतेजः सुयोषिति॥ ॥ तत्रि॥ ॥
अमृतंयज्ञशेषेस्यात्पीयूषेसलिलेघृते॥७६॥ अयाचितेचमोक्षेच
नाधन्वंतरिदेवयोः॥ अमृतामागधीपथ्यागुडूच्यामलकीषुच॥७७॥
अनृतंकृषावसत्येप्यजितोनाहरौत्रिषु॥ अनिर्जितेचाच्युतस्तु
हरौपुंसित्रिषुस्थिरे॥७८॥ अर्दितंयाचितेपिस्याद्वातव्याधौचहिंसि
ते॥ अक्षतंनद्वयोः षंडेलाजेषुत्रिष्वहिंसिते॥७९॥ यवेपिक्कचिदव्य
क्तोहरौस्मरहरेपुमान्॥ परमात्ममहदाद्योः क्लीबंस्यादस्फुटेत्रिषु॥
॥८०॥ अनंतः केशवेशेषेपुमाननवधौत्रिषु॥ अनंताचविशल्यायां
शारिवादूर्वयोरपि॥८१॥ कणादुरालभापथ्यापार्वत्यामलकीषुच॥वि
श्वंभरागुडूच्योः स्यादनंतंसुरवर्त्मनि॥८२॥ अश्मंतमक्षमेचुल्यांम
रणेऽनवधावेपि॥ क्षेत्रेप्यथाऽयतिः पुंसिहिमदीधितिकालयोः॥८३
॥ अर्हंस्तु क्षपणेबुद्धेपुंसिमान्येऽन्यलिंगकः॥ अर्हंतश्चापिसुगते
क्षपणेपिचदृश्यते॥८४॥ अगस्तिः कुंभयोनौचवंकसेनतरौपुमान्
अवंतीकुंभदास्यांचवडवायांचयोषिति॥८५॥ अंगतिः पुंस्यभि-
होत्रब्रह्मवन्हिष्वथादितिः॥ भूदेवमात्रोरंहतिस्त्यागेरोगेप्युभेस्त्रि
यौ॥८६॥ आपातः पुंसिपतनेतदात्वेचप्रकीर्तितः॥ आघ्रातंशिं-
घितेक्रांतेप्याख्यातंभाषितेतिङि॥८७॥ आध्मातः शब्दितेदग्धे
वातरुग्भेदसंयुते॥ आप्लुतः स्नातकेस्नातेऽप्यादृतः सादरेर्चिते॥
८८॥ आचितः शकटोन्मेयेपलानामयुतद्वये॥ पुल्लिंगः संगृहीतेपि
छन्नेपिस्यात्त्रिलिंगकः॥८९॥ आहतंगुणितेचापिताडितेचमृषार्थ
के॥ स्यात्पुरातनवस्त्रेपिनववस्त्रेन्त्रमाऽनके॥९०॥ आनर्तोदेशभेदे






पितृत्वस्थानेजलेरणे॥ आवर्त्तश्चिंतनेवारिभ्रमेचावर्त्तने पुमान्॥९१
॥ आस्फोतंतुपुमानर्कपर्णेस्यात्कोविदारके॥ आस्फोतागिरिकर्ण्यां
चवनमल्यांचयोषिति॥९२॥ आयस्तस्तेजितेक्षिप्ते क्लेशितेकुपितेह
ते॥ आयतिस्तुस्त्रियांदैर्घ्येप्रभावागामिकालयोः॥९३॥ आय-
त्तिस्तुस्त्रियांस्नेहेवशित्वेवासवेबले॥ आकृतिस्तुस्त्रियांरूपेसा
मान्यवपुषोरपि॥९४॥ आसत्तिः संगमेलाभेस्त्रियामापत्तिरापदि
॥ प्रापणेपिचयोषित्स्यादुद्दंतः साधुवार्त्तयोः॥९५॥ उषितंव्युषितेदग्धे
प्युदात्तस्तुस्वरांतरे॥ दयात्यागादिसंपन्नेकाव्यालंकारकृत्ययोः॥ ९६
उत्तप्तंशुष्कमांसेथविषुतप्तेपरिप्लुते॥ उचितंतुभवेन्यस्तेमितेज्ञाते
समंजसे॥९७॥ उद्धृतंस्यात्त्रिषूत्क्षिप्तेपरिभुक्तोज्झितेपिच॥ उत्थि
तंस्यात्त्रिषूत्पन्नेप्रोद्यतेवृद्धिमत्यपि॥९८॥ उद्घातस्तुपुमान्पादस्ख
लनेसमुपक्रमे॥ पवनाभ्यासयोगस्यकालभेदेचकीर्तितः॥९९॥ उत्तुं
गेप्युन्नतेपिस्यादुदितंतूक्तआगते॥ उच्छ्रितंत्रिषुसंजातेसमुन्नद्ध
प्रवृद्धयोः॥१००॥ उन्मत्तउन्मादवतिधूस्तूरमुचुकुंदयोः॥ उद्भ्रांतो
निर्मदगजेपुमानुद्भ्रमितेत्रिषु॥१०१॥ एधतुःपुरुषेग्नौना कलितं
विदितात्मयोः॥ कपोतःस्याच्चित्रकंठपारावतविहंगयोः॥१०२॥अथ
क्रंदितमाह्वानेरुदितेपिनपुंसकं॥ क्षारितःस्राविते क्षारेअभि
शस्तेपिचत्रिषु॥१०३॥ कापोतारुचकेक्लीबेकपोतोयेजनांतरे॥
किरातोम्लेच्छभेदेस्याद्भूनिंबेऽल्पतनावपि॥१०४॥ स्त्रियांचामर
धारिण्यांकुट्टिनीदुर्गयोरपि॥ कृतांतोयमसिद्धांतदैवाकुशलकर्म-
स्तु॥१०५॥ गर्जितंवारिवाहादिध्वनौनामत्तकुंजरे॥ ग्रथितंगुं
फितेक्रांतेहिंसितेचत्रिलिंगकम्॥१०६॥ गभस्तिःकिरणेसूर्ये
नास्वाहायांतुयोषिति॥ गर्मुत्स्त्रीस्वर्णलतयोर्गोपतिःशिवषं
ढयोः॥७॥ नृपभास्करयोःपुंसिचेष्टितंगतिचेष्टयोः॥ जगत्स्यात्त्रि
पिष्टपेक्लीबंवायौनाजंगमेत्रिषु॥८॥ जगतीभुवनेक्ष्मायांछंदोभेदे

रंद्ग्योरपि॥ जृंभितं करणे स्त्रीणामीहास्फोटितयोरपि॥ १२॥ त्वरि
तं प्रजवे शीघ्रे त्रिगर्तो गणितांतरे। देशेपि नाघुर्घुरिकाकामुकांगन
योः स्त्रियां॥ १३॥ तृणता धनुषि तृणलेदं शितमपि जातदंशितेपि
स्यात्॥ कवचाचिते द्विजाति र्विप्रांडजयोश्च पुल्लिंग॥ १४॥ दुर्जातं
व्यसने क्लीबे सम्यग्जातेऽन्यलिंगकं॥ दुर्गतिर्नरकेनैस्व्ये स्त्री दृष्टांत
उदाहृतौ॥ १५॥ शास्त्रेन्व मरणे धीमान् पंडिते च बृहस्पतौ॥ निर्ऋतिः
स्यादलक्ष्म्यां स्त्री दिशांपालांतरे पुमान्॥ १६॥ निकृतं विप्रलब्धे स्या
न्नीचे विप्रकृतेपि च॥ निर्मुक्तस्त्यक्तसंगे स्यान्मुक्तकंचुकभोगिनि॥
१७॥ निरस्तस्त्रिषु निष्ठ्यूते प्रेषिते चोद्धृतादिते॥ संत्यक्तेच प्रतिहते
निमित्तं हेतु लक्ष्मणोः॥ १८॥ निवातो दृढसन्नाहे वातशून्येपि चाश्र
ये॥ निशांतं त्रिषु शांते स्यात् क्लीबं तु भवनोषसोः॥ १९॥ निकृतिर्भ
र्त्सने क्षेपे शठे शाठ्येपि च स्त्रियां॥ निर्वृतिः सुस्थिता वस्तंगमने च
स्वस्वे स्त्रियां॥ २०॥ नियतिर्नियमे दैवे स्त्री पतन् पातुके खगे॥
प्रहतं वितते क्षुण्णे पर्यस्तः पतिते हते॥ २१॥ प्रभूतमुद्गते प्राज्ये पं
डितः सिल्हके कवौ॥ पलितं शैलजे तापे केशपाके च कर्दमे॥ २२॥ प्र
सृतः स्यात् प्रसारे स्याद्विनीते वेगिते त्रिषु॥ अर्द्धांजलौ तु पुल्लिंगो जंघा
यां प्रसृता मता॥ २३॥ प्रसूतं कुसुमे क्लीबं त्रिषु संजातसूतयोः॥ प्र
णीतः संस्कृताग्नौ ना यज्ञपात्रांतरे स्त्रियां॥ २४॥ त्रिषु क्षिप्तोपसंपन्न
विहितेषु प्रवेशिते॥ प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोस्त्रिषु॥ २५॥
प्रमीतं वाच्यलिंगं स्यात् प्रोक्षितेपि मृतेपि च॥ परेतो वाच्यलिंगः स्यात्
मृते भूतांतरे पुमान्॥ २६॥ पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः॥

देवमुन्यंतरेशैले प्रपातो निर्झरे ऽतटे॥ २७॥ पर्याप्तं तु यथेष्टे स्यात्तृ
प्तौ शक्ते निवारणे॥ पंचता पंचभावे स्यान्मरणेपि च योषिति॥ २८॥ प-
क्षतिश्च भवेत्पक्षमूले च प्रतिपत्तिथौ॥ प्रसूतिरुद्भवेपि स्यात्तनये दु
हितर्यपि॥ २९॥ प्रततिर्विस्तृतौ वल्यां पद्धतिः पंक्तिवर्त्मनोः॥ प्रवृत्ति
स्तु प्रवाहे स्याद्वृत्तांते च प्रवर्त्तने॥ ३०॥ आवंत्यादौ च पर्याप्तिः प्रका-
मप्राप्तिरक्षणे॥ प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः॥ ३१॥
॥ योनौ लिंगे पौरवर्गे ऽमी पक्षत्यादयः स्त्रियां॥ पार्वती सल्लकी दुर्गा
गोपालपुत्रिकास्वच॥ ३२॥ प्रार्थितं याचिते शत्रुसंरुद्धे भिहते त्रि
षु। पतत्रिर्विहंगमे पुंसि पतने छो पुनस्त्रिषु॥ ३३॥ पिशितं मांसे मां-
स्यां स्त्री। पिंडितं गुणिते घने॥ पीडितं करणे स्त्रीणां यंत्रिते बाधिते-
पि च॥ ३४॥ पुटितं स्याद्धस्तपुटे पाटितस्यूतयोरपि॥ पृषन्मृगे पु
मान्बिंदौ न द्वयोः पृषतोपि ना॥ ३५॥ अनयोश्च त्रिषु श्वेतबिंदुयुक्ते-
प्युभाविमौ॥ प्रोक्षितं निहते सिक्ते बृहती वसनांतरे॥ ३६॥ छंदो
भित्क्षुद्रवार्ताकी वारिधानीषु वाच्यपि॥ कंटकारी महत्योश्च भवद्यु
ष्मत्ततो स्त्रिषु॥ ३७॥ स्त्री वाणभेदे भरतो नाट्यशास्त्रमुनौ नटे॥ रा
मानुजे च दौष्यंतौ भास्वान्भास्वरसूर्ययोः॥ ३८॥ भारतं ग्रंथभेदे स्या
द्वर्षभेदे ऽथ भारती॥ वचने च सरस्वत्यां पक्षिवृत्तिप्रभेदयोः॥ ३९॥
भासंतः सुंदराकारे त्रिषु ना भासपक्षिणि॥ भावितं वासिते प्राप्ते भू
भृन्नाड्यौ महीपतौ॥ १४०॥ महती वल्लकीभेदे राज्ये स्यात्तु नपुंसकं॥
तत्त्वभेदे पुमान्वृद्धे वाच्यवन्मथितं पुनः॥ ४१॥ क्लीबं निर्जलघोले
स्यात्त्रिष्वालोडितघृष्टयोः॥ मरुद्देवे समीरे ना ग्रंथिपर्णे नपुंसकम्॥
४२॥ मुषितं स्तनखंडितयोर्मूर्छितमपि सोच्छ्रये च मूढे च॥ रजतं
त्रिषु शुक्ले स्यात्क्लीबं हारे च दुर्वर्णे॥ ४३॥ रमतिर्नायके नाके पुंसि स्या
द्रसितं पुनः॥ रुतस्वनितयोः क्लीबं स्वर्णादिखचिते त्रिषु॥ ४४॥ रेव
ती हलिपत्न्यां स्यात्ताराभिन्मातृभेदयोः॥ रैवतस्तु सुवर्णालौ शैलभे

णेंचत्रिषुतद्वानि॥४८॥ वर्द्धितं प्रसितेछिन्नेपूरितेवर्द्धितेगर्वि॥
सचिवेपुंसिवहतुःपथिकेवृषभेपुमान्॥४९॥ वनिता जातराग-
स्त्रीस्त्रियोस्त्रिषुचयाचिते॥सेविते वाधितं बीजाकृतमुंडितयो-
स्त्रिषु॥५०॥ वसतिःस्यात्स्त्रियांवासे यामिन्यांचनिकेतने॥व्या
यतं व्यापृतेदीर्घेदृढेचातिशयेऽन्यवत्॥५१॥ व्याघातो योगभे
देस्यादंतरायप्रहारयोः॥ वासिता करणीनार्योर्वासितं भाविते
रुते॥५२॥ वासंती माधवीयूथ्योरुष्ट्रेनावाहितेत्रिषु॥ विविक्तं-
त्रिषुसंपृक्तेरहःपूतविवेकिषु॥५३॥ वस्फनंदेनाविहस्तःपंडितेव्या
कुलेत्रिषु॥ विनीतःस्ववहाश्वेस्याद्वणिज्यपिपुमांस्त्रिषु॥५४॥
जितेंद्रियेऽपनीतेचनिभृतेविनयान्विते॥ विश्वस्तो जालविश्वा
से विश्वस्ताविधवस्त्रियाम्॥५५॥ विद्युत्ताडितिसंध्यायांस्त्रि
यांत्रिषुतुनिष्प्रभे॥ विवृताक्षकुक्कुटभेदेविस्तृतेत्वभिधेयवत्॥
॥५६॥ विनेताऽ देशाकेराज्ञिना विधाता तु वेधसि॥स्मरेना
विनता तार्क्ष्यजनन्यांपिटकाभिदि॥१५७॥ विनतःप्रणतेभुग्ने
शिक्षितेचाभिधेयवत्॥ विकृतं त्रिषुवीभत्सरागितेसंस्कृतेपिच
५८॥ विच्छित्ति रंगरागेविच्छेदेहारभेदेस्त्री॥ विदितं बुधितार्थि
तयोर्विपत्तिरपियातनापदोर्योषित्॥५९॥ वृत्तांतःप्रक्रियायां
स्यात्कार्त्स्न्येवार्त्ताप्रभेदयोः॥प्रस्तावे वेष्टितं रुद्धेलासकेकरणांतरे॥
६०॥ वेल्लितं गमनेक्लीबंकुटिलेविधुनेत्रिषु॥ विवर्तः समुदायेस्या
दपवर्तननृत्ययोः॥६१॥ शकुंतःकीटभेदेस्याद्भासपक्षिविहंग
योः॥ श्रीमान्स्तिलकवृक्षेनामनोज्ञजानकत्रिषु॥६२॥ श्रीपतिः

पुंसिपृथिवीनाथेचमधुसूदने॥शुद्धांतोंतःपुरेक्ष्माभृत् ग्रहःकक्षांतरेपिच॥६३॥स्रवंतीतुतरंगिण्यांगुल्मस्यानोषधीभिदोः॥संवर्तःप्रलयेमुन्यंतरेकर्षफलेपिच॥स्खलितंचलितेभ्रेषे संहृतंसंगतेहृदे॥संस्कृतःकृत्रिमेशस्तेभूषितेप्यन्यलिंगकः॥६५॥क्लीबंतुलक्षणोपेते स्थपतिःकंचुकिन्यपि॥जीवेष्टियाजकेशिल्पिभेदेनासत्तमेत्रिषु॥६६॥संघातःपुंसिघातेचसंहतौनरकांतरे॥संवित्तिःप्रतिपत्तौस्याद्वीथ्या द्वेजनस्यच॥६७॥संततिःस्यात्संक्तौगोत्रेपारंपर्येपुत्रपौत्राणाम्॥संगतिःसंगमेज्ञानेसन्नतिःप्रणतौध्वनौ॥६८॥समितिःसंपरायेस्यात्सभायांसंगमेपिच॥समाप्तिरवसानेस्यात्समर्थनेऽथसंमतिः॥६९॥अभिलाषेप्यनुज्ञायांसंवित्याद्यास्त्रयोषिति॥स्थापितंनिश्चितेन्यस्ते स्तिमितोऽचंचलार्द्रयोः॥७०॥सिकतास्त्रीसिकतिलेवालुकायांतुभूमनि॥स्फुरतंस्यान्निधुवनेदेवत्वेस्फुरतास्मृता॥७१॥सुकृतंतुशुभेपुण्येक्लीबंसुविहितेत्रिषु॥सुव्रतासुखसंदोह्याशोभनव्रतयोरपि॥७२॥सुनीतिःशोभननयेध्रुवमातरियोषिति॥सूनृतंमंगलेपिस्यात्प्रियसत्येवचस्यपि॥७३॥हरिद्दिशिस्त्रियांपुंसिहयवर्णविशेषयोः॥अस्त्रियांस्यात्तृणेचाथहर्मितंक्षिप्तदग्धयोः॥७४॥हरितास्त्रीचदूर्वायांहरिद्वर्णयुतेऽन्यवत्॥हस्तिगंधारधान्यांचमल्लिकाशाकिनीभिदोः॥७५॥हरीतःपक्षिभेदेस्यान्मुनिभेदेचकैतवे॥हृषितंविस्मितेभीतेप्रहतेहृष्टलोमनि॥७६॥

॥ ॥तन्वतुः॥ ॥ अवसितमृद्धेज्ञातेप्यवसानगतेचवाच्यलिंगंस्यात्॥अर्थपतिःपुल्लिंगोधनाधिनाथेचनरनाथे॥ ॥७७॥अवदातःसितेगौरेविशुद्धेप्यन्यलिंगकः॥अपगीतंतुनिर्वादेत्वष्टगाहीनयोरपि॥७८॥अंतर्गतंविस्मृतेस्यान्मध्यप्रसेचवाच्यवत्॥अंगारितंतुदग्धेस्यात्पलाशकलिकोद्गमे॥७९

हसंत्यांचलतामात्रेनदीभेदेचयोषिति ॥ अपावृतस्त्वपिहितेस्वतं
त्रेपिचवाच्यवत् ॥ १८० ॥ अत्याहितंमहाभीतौजीवानपेक्षकर्म
णि ॥ अभिनीतंत्रिषुन्याय्येसंस्कृतामर्षिणोरपि ॥ ८१ ॥ अभि
जातःकुलीनेस्यान्न्याय्यपंडितयोस्त्रिषु ॥ अभियुक्तःपरैरुद्धेत
त्परेप्यभिधेयवत् ॥ ८२ ॥ अतिमुक्तस्तुनिःसंगेवासंत्यांतिनिशेपि
च ॥ अवध्वस्तःपरित्यक्तेनिंदितेप्यवचूर्णिते ॥ ८३ ॥ अधिक्षिप्तः
प्रणिहितेकुत्सितेभर्त्सितेत्रिषु ॥ अंशुमान्भास्करेशालपर्ण्यामं
शुमतीस्मृता ॥ ८४ ॥ भवेदपचितिःपूजाव्ययनिष्कृतिहानिषु ॥
अथानुमतिरूनेंदुपूर्णिमानुज्ञयोरपि ॥ ८५ ॥ अभिशस्तिःप्रा
र्थनापवादयोश्चत्रयंस्त्रियां ॥ आयुष्मान्योगभेदेनावाच्यवच्चिर
जीविनि ॥ ८६ ॥ उपाहितोऽनलोत्पातेपुमानारोपितेत्रिषु ॥ उपाकृ
तोऽध्वरहतपशौनोपद्रुतेत्रिषु ॥ ८७ ॥ उदास्थितःप्रतीहारेप्रव्र-
ज्यावसितेचरे ॥ स्यादुल्लिखितमुत्कीर्णेतनूकृतेचवाच्यवत् ॥ ८८
उद्ग्राहितमुदीर्णेस्याद्बद्धग्राहितयोस्त्रिषु ॥ भवेदुपचितंदग्धेस
मृद्धेवाच्यलिंगकं ॥ ८९ ॥ उज्जृंभितंप्रफुल्लेचेष्टायांतुनपुंसकं
॥ उपरक्तोव्यसनार्तेराहुग्रस्तेंदुसूर्ययोः ॥ ९० ॥ उपसत्तिःसंगमा
त्रेसेवायामपियोषिति ॥ ऊर्ध्वप्रोक्ताशतावर्यांनिबलामूकशिंबि
षु ॥ ९१ ॥ ऐरावतोऽभ्रमातंगेनारंगेलकुचद्रुमे ॥ नागभेदेचपुंसि-
स्याद्विद्युत्तद्भेदयोःस्त्रियां ॥ ९२ ॥ नपुंसकंमहेंद्रस्यऋजुदीर्घशरास
ने ॥ कलधौतंस्वर्णेस्याद्रजतेचनपुंसकं ॥ ९३ ॥ भवेत्कुहरितं
क्लीबंपिकालापेरतध्वनौ ॥ कुमुद्वान्कुमुदप्रायदेशेस्याद्वाच्य
लिंगकः ॥ ९४ ॥ कुमुद्वतीकुमुदिन्यांकुशपल्यांचयोषिति ॥ कृ-
ष्णावृंतापाटलायांमाषपर्ण्यांचयोषिति ॥ ९५ ॥ अथगंधवतीपृ
थ्वीपुराभिद्वासमातृषु ॥ सुरायांचगरुत्मांश्चपक्षिमात्रेखगाधि
पे ॥ ९६ ॥ भवेद्गृहपतिःपुंसिगृहस्थेपिचमंत्रिणि ॥ चंद्रकांतस्तु

पुंसिस्यान्मणिभेदेचकैतवे॥ चर्मण्वतीनदीभेदे कदलीपादपेस्त्रि
याम्॥ चित्रगुप्तस्तु पुंसिस्याद्यमेतस्य चलेखके॥ १९८॥ दिवाभी
तः कुंभिलेस्यादुलूकेकुमुदाकरे॥ दिवाकीर्तिस्तु पुंसिस्यान्नापि
तांतावसायिनोः॥ १९९॥ द्वीपवान्सिंधुनद्योर्द्वीपवत्यापगाभुवोः
॥ दृषद्वतीनदीभेदे कात्यायन्यामपिस्त्रियाम्॥ २००॥ स्याद्धूमकेतु
रुत्पातभेदेवैश्वानरेपुमान्॥ नंद्यावर्तः पुमान्वेश्मप्रभेदेभगव
द्द्रुमे॥ २०१॥ नदीकांतः समुद्रेस्याद्विज्जलेसिंदुवारके॥ नदीकां
ता स्त्रियांजंब्वांकाकजंघौषधावपि॥ २०२॥ नागदंतो द्विपरदे गृहा
न्निर्गतदारुणि॥ नागदंती तु कुंभायांश्रीहस्तिन्यामपिस्त्रियाम्॥
॥२०३॥ निष्काशितो निर्गमिते ऽप्याहिते ऽधिकृतेपिच॥ अथनि
स्तुषितं त्यक्ते वप्रहीने लघूकृते॥ ४॥ निराकृतिरनाकारेऽस्वा
ध्यायेवा रणेत्रिषु॥ परिगतं त्रिषुप्राप्ते विस्मृतज्ञातचेष्टिते॥ ५॥
अथप्रणिहितं न्यस्ते प्राप्तेपिचसमाहिते॥ अथपल्लवितं लाक्षा
रक्ते सपल्लवेतते॥ ६॥ भवेत्प्रणिहितं द्विष्टे प्रतिस्खलितबद्धयोः
॥ प्रतिक्षिप्तं वारितेस्यात्प्रेषिते पंचकंत्रिषु॥ ७॥ परिवर्तो विनि
मये कूर्मराजे प्रवर्तने॥ परिस्रुता स्त्रीवारुण्यांस्यन्नेस्यादभिधे
यवत्॥ ८॥ प्रधूपिता क्लेशितायांस्त्रूर्यगंतव्यदिश्यपि॥ पंचगुप्त
स्तुचार्वाकदर्शनेकमठे पुमान्॥ ९॥ प्रजापतिर्भवेद्दक्षादौमहीपाले
विधातरि॥ प्रजापतिः प्रवर्तोनचप्रागल्भ्येगौरवेपिच॥ १०॥ संप्रा
प्तौनप्रबोधेचपदप्राप्तौचयोषिति॥ अथप्रव्रजिता मांसी मुंडी
रीतापसीषुच॥ ११॥ प्रतिकृतिरर्चायां प्रतिनिधिप्रतीकारयो
श्चस्त्री॥ पाशुपतो बकपुष्पेस्यात्पशुपत्यधिदेवतेचतद्भक्ते॥ १२
पारिजातः सुरतरौ पारिभद्रतरावपि॥ पारावती गोपगीते नदीभिल्लु
वल्लीफले॥ १३॥ पारावतः कलरवे तयामर्कटतिंदुके॥ पुष्पदंतस्तु
दिङ्नागभेदे विद्याधरांतरे॥ १४॥ पुरस्कृतोऽभिशस्तारिग्रस्ताग्रेकृ

तपूजिते॥ भगवान्नाजिनेगौर्यास्त्रियांपूज्येतुवाच्यवत्॥१५॥ अथभो
गवतीनागपुरीनद्यो रङ्गो पुमान्॥ रंगमातातुकुट्टिन्यांलाक्षरोगांतरेस्त्रि
यां॥१६॥ लक्ष्मीपतिः पुमान्वासुदेवेनरपतावपि॥ व्यतीपातो महो-
त्पातेयोगभेदापयानयोः॥ १७॥ वनस्पतिर्नाद्रुमात्रेविनापुष्पफलि
द्रुमे॥ विनिपातोनिपातेस्याद्दैवादव्यसनेपुमान्॥ १८॥ विजृंभि
तंतुचेष्टायांक्लीबंत्रिषुविकस्वरे॥ विवस्वान्विबुधेसूर्येतन्नगर्यांवि
वस्वती॥१९॥ वैजयंतोगृहेशक्रध्वजप्रासादयोःपुमान्॥ वैजयंतीप
ताकायांजयंतीपादपेपुमान्॥२०॥ भवेच्छतघ्निः पुंसिशक्रेचपर
मेष्ठिनि॥ शुण्डदंतीस्कदंत्यांस्यात्पुष्पदंतेभयोषिति॥ २१॥ समुद्धृतं
समुत्क्षिप्तेप्यपनीतेचवाच्यवत्॥ सदागतिर्नाकवातनिर्वाणेषुसदी
श्वरे॥ २२॥ सरस्वांश्चनदेवाब्धौनान्यवद्रसिकेस्त्रियां॥ वाणीस्त्री
रत्नवाग्देवीगोनदीषुनदीभिदि॥ २३॥ मनुपत्न्यामपिसत्यवतीव्या
सस्यमातरि॥ नारदर्षीकयोः पत्न्यांस्त्रियांपुंसिनृपांतरे॥ २४॥ समु
द्गांतातुकार्पासीपृक्काट्टरालभास्वच॥ समाहितः समाधिस्थेप्युक्तसि
द्धांतआहिते॥२५॥ निर्विवादीकृतेपिस्यात्प्रतिज्ञातेचवाच्यवत्॥स
माघातोवधेयुद्धे संख्यावान्पंडितेपुमान्॥२६॥ संख्यायुक्ते१न्यलिं-
गः१थस्कंधाग्निः पुमानग्नवे॥ चंद्रस्कभाषिनोबुद्धेपुमान्सूक्तेनपुंसकं
॥२७॥ सूर्यभक्तस्तुबंधूकेपुंसित्रिष्वर्कपूजके॥ सेनापतिः कार्तिकेये
प्यनीकाधिपतौपुमान्॥ २८॥ हिमारातिः पुमान्वीतिहोत्रेकिरणमालि
नि॥ हैमवत्यभयास्वर्णक्षीर्योः श्वेतवचोमयोः॥२९॥ ॥
तपंच॥ ॥ अवलोकितोनालोकनाथेत्रिषुनिरीक्षिते॥
अपराजित ईशाजेष्वंतरेनाऽजितेत्रिषु॥ ३०॥ गिरिकर्णीजया
दुर्गाशनपर्णीषुयोषिति॥ उपधूपित आसन्नमरणेपरिधूपिते॥३१
स्याद्गणाधिपतिःपुंसिशंकरेपिगजानने॥ भवेत्सिपतिषन्नपित्सौत्रिषु
पुंसिविहंगमे॥ ३२॥ पृथिवीपतिस्तुभूपालेऋषभाख्यौषधौपुमान्

॥ मूर्धाभिषिक्तो भूपाले मंत्रिणि क्षत्रियेपि च ॥ ३३ ॥ यादसां पतिरंभोधौ पश्चिमाशापतावपि ॥ वसंतदूतश्चैत्रे स्यात्पिके पंचमरागयोः ॥ ३४ ॥ वसंतदूती पाटल्यामभियुक्ते च योषिति ॥ ॥ तषट् ॥ ॥ श्वेतपारावतश्चित्रकंठे तित्तिरिपक्षिणि ॥ ३५ ॥ तसप्त ॥ समुद्रनवनीतं स्यात्क्लीबं पीयूषचंद्रयोः ॥ ॥ इति तांतवर्गः ॥ ॥ थेकं ॥ ॥ थं रक्षणे मंगले च साध्वसे च नपुंसकं ॥ शिलोच्चये पुमानेव क्वचित्तु भयरक्षके ॥ १ ॥ ॥ थद्वि ॥ ॥ अर्थो विषयार्थनयोर्धनकारणवस्तुषु ॥ अभिधेये च शब्दानां निवृत्तौ च प्रयोजने ॥ २ ॥ आस्था त्वालंबनास्थानयत्नापेक्षासु योषिति ॥ कंथा स्यूतपटे स्त्री स्याद्वस्त्रप्रावरणांतरे ॥ ३ ॥ क्वाथः स्याद्दतिदुःखेपि निष्पाकेपि द्रवस्य च ॥ कुथः स्त्रीपुंसयोर्वर्णकंबले पुंसि बर्हिषि ॥ ४ ॥ कोथो नानेत्ररोगस्य भेदे च शटिते त्रिषु ॥ ग्रंथो ग्रथनाधनयोः स्यात्स्त्री... क्षरसंख्ययोः ॥ ५ ॥ ग्रंथिस्तु ग्रंथिपर्णे नाबंधे रुग्भेदपर्वणोः ॥ गाथा श्लोके संस्कृतान्यभाषायां गेयवृत्तयोः ॥ ६ ॥ तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च ॥ अवतारर्षिजुष्टांबुपात्रोपाध्यायमंत्रिषु ॥ ७ ॥ तुत्थमंजनभेदे स्यान्नीलसूक्ष्मैलयोः स्त्रियाम् ॥ दुःस्थः स्याद्दुर्गते मूर्खे दुःखेन तिष्ठति त्रिषु ॥ ८ ॥ प्रस्थोऽस्त्रियां मानभेदे सानावुन्मितवस्तुनि ॥ पाथोऽर्के ऽग्नौ जले क्लीबं पृथुः स्यान्महति त्रिषु ॥ ९ ॥ त्वक्पर्ण्यां कृष्णजीरे ऽस्त्रीपुमानग्नौ नृपांतरे ॥ प्रोथो स्त्री हयघोणायां नाकुस्यामध्वगे त्रिषु ॥ १० ॥ मंथः स्यात्पुंसि मंथाने साक्तवे च दिवाकरे ॥ यूथं तिर्यक्समूहे ऽस्त्री पुष्पभेदे च योषिति ॥ ११ ॥ रथः पुमानवयवे स्यंदने वेतसेपि च ॥ वीथी पंक्तौ गृहांगे च रूपकांतरवर्त्मनोः ॥ १२ ॥ संस्थाध्वरे ऽवस्थितौ स्त्री स्थितौ सादृश्यनाशयोः ॥ सार्थो वणिक्समूहे स्यादपि संघातमात्रके ॥ १३ ॥ सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकं ॥ ॥ थत्रिः ॥ ॥ अतिथिः कुशपुत्रे स्यात्पुमानागंतुके त्रिषु ॥ १४ ॥ ॥

अश्वत्थः पिप्पलद्रौस्यादश्वत्थापूर्णिमातिथौ ॥ अव्यथोनिर्व्यथे-सर्पेचारटीपथ्ययोः स्त्रियां ॥१५॥ उन्माथः कूटयंत्रेस्यान्मारणेघा तकेपुमान् ॥ उपस्थः शेफशिश्नोडेनथामदनमंदिरे ॥१६॥ उद्ग्रथोरथकीलेस्यात्ताम्रचूडाख्यपक्षिणि ॥ क्षवथुर्नाक्षुतेकासेका यस्थः परमात्मनि ॥१७॥ नरजातिविशेषेनाह यनक्यांतु योषिति ॥ कापथः कुत्सितपथेउशीरेक्लीबमिष्यते ॥१८॥ गोग्रंथिर्नाक शेषेस्याद्गोष्ठगोजिह्विकौषधौ ॥ दमथस्तुपुमान्दंडे दामेच परिकीर्तितः ॥१९॥ निशीथस्तुपुमानर्धरात्रेस्याद्रात्रिमात्रके ॥ निर्ग्रंथो नग्नकेपिस्यान्निःस्वबालिशयोरपि ॥२०॥ प्रमथास्याद्धरीतक्यांह रपारिषदेपुमान् ॥ वरूथोरथगुप्तौस्यात् वरूथंचर्मवेश्मनोः ॥ २१॥ मन्मथः कामचिंतायांकपित्थेकुसुमायुधे ॥ वयस्थातुस्त्रि यांब्राह्मीगुडूच्यामलकीषुच ॥२२॥ सूक्ष्मैलायांचकाकोल्यांपथ्याली तरुणेत्रिषु ॥ वमथुः पुंसिवमनेगजस्यकरशीकरे ॥२३॥ विदथो योगिकृतिनोः शमथः शांतिमंत्रिणोः ॥ षड्ग्रंथातुवचायांस्त्री-स्यात्करंजांतरेपुमान् ॥२४॥ समर्थस्तुहितेशक्तेसंबद्धेप्यन्यलिंग कः ॥ सिद्धार्थस्तुपुमान्शाक्येसिंहेचसितसर्षपे ॥२५॥ ॥थ चतुः ॥ ॥ अनीकस्थोरणगतेहस्तिशिक्षाविचक्षणे ॥ राज रक्षिणिचिह्नेचवीरमर्दनकेपिच ॥२६॥ भवेदितिकथापार्थवाच्य श्रद्धेयनष्टयोः ॥ चतुष्पथं चतुर्मार्गेसंगमेब्राह्मणेपिना ॥२७॥ ॥ अथचित्ररथः सूर्यगंधर्वांतरयोःपुमान् ॥ दशमीस्थोनष्टवीर्ये स्थविरेप्यन्यलिंगकः ॥२८॥ प्राणनाथो यमेनास्यात्त्रिष्प्राणाधिपे मतः ॥ वानप्रस्थोमधूकेपिस्यात्तृतीयाश्रमेपुमान् ॥२९॥ भवेद्बुद रथिः पुंसिसमुद्रेचवियन्मणौ ॥ ॥ इतिथांतवर्गः ॥ ॥ ९१४॥ ॥ दैकं ॥ ॥ दः पुमानचलेदत्तेस्त्रियांशोधनदान योः ॥ छेदोपतापरक्षासुपुमांस्तुदानरिस्मृतः ॥१॥ ॥ द्विदं ॥ ॥

अब्दः संवत्सरेवारिवाहमुस्तकयोः पुमान्॥ कंदोऽस्त्री सूरणे श स्यमूलेजलधरेपुमान्॥२॥ अंदूः स्त्रियांस्यान्निगडेप्रभेदेभूषणस्य च॥ कुंदो माघ्येऽस्त्री मुकुंदभ्रमिनिध्यंतरेषुना॥३॥ क्षोदः स्या त्सुक्ष्मरजसि पेषणेचप्रकीर्तितः॥ गदो भ्रातरि विष्णोः स्यादामयेना युधेगदा॥४॥ छदः पलाशेगरुतिग्रंथिपर्णतमालयोः॥ छंदो वशे प्यभिप्राये धीदा पुत्रीमनीषयोः॥५॥ नंदिर्द्यूतांगआनंदे ऽस्त्री नंदि केश्वरेपुमान्॥ नदी सरिति शोणादौ ना नंदा स्याद्दलिंजरे॥६॥ गौर्यांति थिविशेषेस्त्री निधिराजभिदोः पुमान्॥ निंदा स्यादपवादेपि कुल्यायाम पियोषिति॥७॥ पदं शब्देच वा क्ली च व्यवसायप्रदेशयोः॥ पादतच्चिन्ह योः स्थान त्राणयोरंक वस्तुनोः॥८॥ श्लोकपादेपिचक्लीबंपुल्लिंगः किरणे पुनः॥ पादो बुध्नेतुरीयांशे शैलप्रत्यंतपर्वते॥९॥ चरणेच मयूरवेच वं- द्राल तोंतरे स्मृता॥ भिस्कृत्यामपि वंद्यां च विंदुर्दंतक्षतांतरे॥१०॥ भ्रु वोर्मध्येरूपकार्यप्रकृतौ पृषते पुमान्॥ वेदितर्यन्यलिंगः स्यात् भद्रं क ल्याणशर्मणोः॥११॥ भेदो द्वैधे विशेषे स्यान्उपजापे विदारणे॥ मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः॥१२॥ मंदोऽतीक्ष्णेच मूर्खेच स्वैरे चा भाग्यरोगिणोः॥ अल्पे च त्रिषु पुंसि स्याद्द्वि[illegible]जात्यंतरे शनौ॥१३॥ मृ दुः स्यात्कोमले ऽतीक्ष्णे रदो दंतेविलेखने॥ विदा ज्ञाने च निर्दिष्टा म- नीषायां च योषिति॥१४॥ वेदः श्रुतौ च वृत्ते च वेदिः स्यात्पंडितेपुमान्॥ स्त्रियामंगुलिमुद्रायां स्यात्परिष्कृतभूतले॥१५॥ शादः स्यात्कर्दमे शष्पे स्वादुर्मिष्टमनोज्ञयोः॥ सूदस्तु कथितः सूपकारे च व्यंजनांत रे॥१६॥ स्वेदस्तु स्वेदने घर्मे ह्रदः क्लीबं तु कृत्विनयोः॥ ॥

॥ दत्रिः॥ ॥ अंगदः कपिभेदे ना केयूरे तु नपुंसकं॥१७॥ अंगदायाम्यदिग्दंतिहस्तिन्यामपि योषिति॥ अर्द्धेंदुरर्द्धचंद्रे स्या द्गलहस्तनखांकयोः॥१८॥ अर्द्धेंदुः स्यादतिप्रौढस्त्रीयोन्यंगुलियोजने॥ अर्बुदो मांसकीले स्यात्पुरुषे दशकोटिषु॥१९॥ महीधरविशेषे ना

ऽथास्पदं पदकृत्ययोः॥ आमंदो वासुदेवे स्यात्स्वङ्गाभेदे च योषिति ॥२०॥ आक्रंदः क्रंदने व्हाने मित्रदारुणयुध्धयोः॥ भ्रातर्यपि च पुंसि स्यादामोदो गंधहर्षयोः॥२१॥ ककुदं स्त्री ककुदोप्यस्त्री वृषांकेराड्ध्वजे वरे॥ क्षणदो गणके रात्रौ क्षणदा क्षणदं जले॥२२॥ कपर्दः खंडपरशोर्जटाजूटे वराटके॥ कर्णादुरुक्षिप्तिकायां कर्णपाल्यामपि स्त्रियां॥२३॥ क्रव्यादस्तु असि पुंसि स्यान्मांसाशिन्यन्यलिंगकः॥ कामदा कामधेनौ स्त्री कामदा तरि वाच्यवत्॥२४॥ कुमुद् त्रिषु स्यात्कृपणे कैरवे तु नपुंसकं॥ कुमुदं कैरवे रक्तपद्मे स्त्री कुंभिकौषधौ॥२५॥ गंभार्यां पुंसि दिङ्नागनागशाखामृगांतरे॥ कुसीदं जीवने दृष्ट्यां क्लीबं त्रिषु कुसीदिके॥२६॥ कौमुदः स्यात्कार्तिकके चंद्रिकायां तु कौमुदी॥ गोष्पदं गोपदश्वभ्रे गवां चरगतिगोचरे॥२७॥ गोविंदो वासुदेवे स्याद्गवाध्यक्षे बृहस्पतौ॥ गोनर्दमपि कैवर्तीमुस्तके पुंसि सारसे॥२८॥ जलदो मुस्तके मेघे जीवदो वैद्यविद्विषोः॥ तरद् स्त्रियां प्लवेपि स्यात्कारंडे च विहंगमे॥२९॥ तोयदो मुस्तके मेघे पुमान्नाज्ये नपुंसकं॥ दरद् स्त्रियां प्रपातेपि भयपर्वतयोरपि॥३०॥ दारदो विषभेदे स्यात्पारदे हिंगुले पुमान्॥ दायादस्तु भवेत्पुंसि सपिंडे तनयेपि च॥३१॥ दृषद् निष्पेषणशिलापट्टप्रस्तरयोः पुमान्॥ धनदस्तु कुबेरे स्यात्पुल्लिंगो दानरि त्रिषु॥३२॥ नलदं स्यात्पुष्परसोशीरमांसीषु नद्ध्योः॥ नर्मदः केलिसचिवे नर्मदा सरिदंतरे॥३३॥ निर्वादः स्याल्लोकवादे परिनिश्चितवादयोः॥ निषादः स्वरभेदे स्याच्चंडाले धीवरांतरे॥३४॥ प्रमदः संमदे मत्ते स्त्रियामुत्तमयोषिति॥ प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यप्रसन्नतिषु॥३५॥ प्रणादस्तु पुमान्स्तारशब्दे च श्रवणामये॥ प्रासादो देवनृपयोर्गृहेऽथ वरदा स्त्रियां॥३६॥ कन्यायां वाच्यलिंगस्तु प्रसन्ने च समर्द्धके॥ भसद् स्त्री भास्वरे योनौ मर्यादा सीमनि स्थितौ॥३७॥ माकंदः सहकारेऽ

स्त्रीधात्रीनगरभेदयोः॥ मुकुंदो निधिभिद्विष्णुरत्नभेदे च कुंदुरौ ॥ ३८॥ मेनादस्तु पुमान्केकिमार्जारच्छगलेषु च ॥ विशदः पांडुरे व्यक्ते शरद् स्त्री वत्सरे ऋतौ ॥ ३९॥ शारदोऽब्दे स्त्रियां तोयपिप्पलीसप्तपर्णयोः॥ सस्ये क्लीबं शरज्जातनूतनाप्रतिभे त्रिषु॥ ४०॥

षड्बिंदुः स्यात्कीटभेदपुंडरीकाक्षयोः पुमान्॥ संपत् भूतौ गुणोत्कर्षे हारभेदेपि च स्त्रियां ॥ ४१॥ संविद् स्त्रियां प्रतिज्ञायामाचारज्ञानसंगरे॥ संभाषणे क्रियाकारे संकेते नाम्नि तोषणे॥ ४२॥ संभेदः स्युदने संगे सुनंदा रोचनोमयोः॥

द्त्र्यनुः

अभिष्यंदोऽतिवृद्धौ स्यादास्रावेक्षिगदेपि च॥ ४३॥ अष्टापदोऽस्त्री कनके शारीणां फलकेपि च॥ अष्टापदी चंद्रमल्ल्यां शरभे मर्कटे पुमान्॥ ४४ अववादस्तु निंदायामाज्ञाविस्रंभयोरपि॥ अभिमर्दस्तु पुंसि स्यादवमर्दे संपराये च॥ ४५॥ एकपदं तत्कालेन पुंसकं वर्त्मनि स्त्री स्यान्॥ कटुकंदः पुमाञ्शिग्रौ शृंगवेरलसोनयोः॥ ४६॥ कुरुविंदं रत्नभेदे मुस्ताकुल्माषयोः पुमान्॥ अथ कोकनदं रक्तकुमुदे रक्तपंकजे॥ ४७॥ चतुष्पदी तु पद्येनापशौ च करणांतरे॥ भवेज्जनपदो जानपदोपि जनदेशयोः॥ ४८॥ तमोनुदग्नींद्वर्केना प्रतिपद् स्त्री तिथौ मतौ॥ परिवादोऽपवादे स्याद्वीणावादनवस्तुनि॥ ४९॥ प्रियंवदः खेचरे नाप्रियवाचि तु वाच्यवत्॥ पीठमर्दोऽतिधृष्टे स्यान्नायकस्य प्रियेपि च॥ ५०॥ पुटभेदो नदीवक्रे पत्तनातोद्ययोरपि॥ महानादः कुंजरे स्याद्दर्दुकाब्दे महास्वने॥ ५१॥ मुचुकुंदो वृक्षभेदे मांधातृतनयेपि च॥ मेघनादस्तु वरुणे तनये रावणस्य च॥ ५२॥ विशारदः पंडिते च धृष्टे विष्णुपदं तु खे॥ क्षीरोदे चास्त्रियां गंगाराविसंक्रांतिभेदयोः॥ ५३॥ शशबिंदुः पुमान्वासुदेवे राजांतरेपि च॥ शतानंदो मुनेर्भेदे देवकीनंदने पि च॥ ५४॥ शतह्रदा स्त्रियां वज्रे सौदामिन्यां च कार्तिता॥ समर्यादः समीपे नामर्यादासहिते त्रिषु॥ ५५॥

॥ दपंच ॥ भवेदुपनिषद्धर्मे वेदांतविजनेस्त्रियां॥ सहस्रपादः कारंडेमार्तंडेयज्ञपूरुषे॥ ५६॥ ॥ इतिदांतवर्गः॥ ॥धेकं॥ ॥धोनाधर्मेकुबेरेच क्लीबंतुवसुनिस्मृतं॥ धो धाचब्रह्मणिख्यातो धातुःस्याद्वारकेपिच॥ १॥ धीर्ज्ञानेज्ञानभेदेपि धूःस्मृताधूननेस्त्रियां॥ ॥धाद्विः॥ ॥अर्द्धंसमांशेखंडेनाऽब्धिर्नासरसिवारिधौ॥ २॥ अंधःस्यात्तिमिरे क्लीबंच-क्षुर्हीनेभिधेयवत्॥ आधिःपुमांश्चित्तपीडाप्रत्याशाबंधकेषुच ॥३॥ व्यसनेचाप्यधिष्ठाने विद्धमातपदीप्तयोः॥ ऋद्धं संपन्नधान्येचसुसमृद्धेचवाच्यवत्॥४॥ ऋद्धिस्त्रस्त्र्योषधीभेदे समृद्धावपियोषिति॥ गंधःप्रातिवेश्यामोदलेशसंबंधगंधके॥ ५॥ गाधःस्थानेचलिप्सायांगोधातलनिहाकयोः॥ दधिक्षीरोत्तरवस्त्राभावेश्रीवाससर्जयोः॥ ६॥ दग्धंप्लुष्टेऽन्यलिंगंस्यात्स्थिताकेदिशिचस्त्रियां॥ दिग्धोविषाक्तबाणेस्यात्पुंसिलिप्तेऽन्यलिंगकः॥७॥ दुग्धंप्रपूरितेक्षीरे दुग्धीक्षीरावकौषधौ॥ दोग्धार्थोपजीविकवौवत्सगोपालयोःपुमान्॥ ८॥ धद्धोवद्धतयोः हृते बंधआधौचबंधने॥ बंधुःस्यात्पुंसिबंधूके मित्रेभ्रातरिबांधवे॥ ९॥ बाधादुःखेनिषेधेचबुधःसौम्येचपंडिते॥ बुद्धोजिनेलब्धवर्णेपुंसिस्याद्बुधितेऽन्यवत् ॥१०॥ बोधिःपुंसिसमाधेश्चभेदेपिप्पलपादपे॥ मधुपुष्परसेक्षौद्रेमद्येनातुमधुद्रुमे॥ ११॥ वसंतदैत्यभिच्चैत्रेस्याज्जीवत्यांतुयोषिति॥ मिद्धंचित्ताभिसंक्षेपे क्लीबमालस्यचित्तयोः॥ १२॥ मुग्धस्तुसुंदरेमूढे मेधावुद्वीक्रतौपुमान्॥ राधोमासांतरेराधाचित्रभेदेचधन्विनी॥ १३॥ गोपीविशाखामलकीविष्णुक्रांतास्तुविद्युति॥ लुब्धआकांक्षिणिव्याधे वधूःस्त्रीश्वारिबौषधौ॥ १४॥ स्नुषाज्ञाढानवोढास्तुभार्याप्टक्कांगनासुच॥ व्याधिःकुष्ठेचरोगेना व्याधोमृगयुदुष्टयोः॥ १५॥ नारामयेरवेचविधुर्नाकर्पूरेंदुहारिषु॥ विद्धंस्याद्वेधि-

तेक्षिप्तेसदृशेबाधितेत्रिषु ॥१६॥ विधिर्नानियतौकालेविधानेपरमेष्ठि
नि ॥ विधागजाशनेरूढौप्रकारेवेतनेविधौ ॥१७॥ वृद्धोजीर्णेप्रवृद्धे
ज्ञेत्रिषुक्लीबंतुशैलजे ॥ वृद्धिस्त्रुवर्द्धनेयोगेप्यष्टवर्गौषधांतरे ॥१८
कालांतरेचाभ्युदयेसमृद्धावपियोषिति ॥ श्रद्धाऽदरेचकांक्षायां
श्राद्धंश्रद्धान्वितेत्रिषु ॥१९॥ हव्यकव्यविधौक्लीबंशुद्धंस्यात्त्रिषुकेव
ले ॥ निर्दोषेचपवित्रेचसंधास्थितिप्रतिज्ञयोः ॥२०॥ स्पर्द्धासंघर्षणे
पिस्यात्साम्येक्रमसमुन्नतौ ॥ संधिःपुमान्सुरुंगायांभगेसंघट्टने-
पिच ॥ २१॥ रूपकानांमुखाद्यंगेसावकाशेपिकीर्तितः ॥ स्कंधःस्या
न्नृपतावंसेसंपरायसमूहयोः ॥ २२॥ कायेनरुप्रकांडेचभद्रादौछंद
सोभिदि ॥ साधुर्वार्द्धुषिकेचारौसज्जनेचाभिधेयवत् ॥ २३॥ सि
द्धोनाव्यासादौभेदेयोगस्यदेवयोनेश्च ॥ त्रिषुनिष्पन्नेस्निग्धंस्ने
हयुतेचिक्कणेपिस्यात् ॥ २४॥ सिंधुर्वमथुदेशाब्धिनदेनासरिति
स्त्रियां ॥ सिद्धिःस्त्रीयोगनिष्पत्तिपादुकांतर्द्धिवृद्धिषु ॥२५ ॥ स्र
धास्त्रीलेपनेमूर्व्यांस्नुहीगंगेष्टकामृते ॥

॥ धत्रिः ॥

अवधिस्त्ववधानेस्यात्सीम्निकालेबिलेपुमान् ॥ २६॥ अगाध
मतलस्पर्शेत्रिषुश्वभ्रेनपुंसकं ॥ अनद्धंमुरजादौचक्लीबंस्यात्संदि
तेत्रिषु ॥२७॥ आविद्धोवाच्यलिंगस्यात्कुटिलेचपराहते ॥ आब
द्धोदृढबंधेस्यात्प्रेमालंकारयोद्वयोः ॥२८॥ उत्सेधस्तूच्छ्रयेनस्त्री-
क्लीबंसंहननेपिच ॥ उपाधिर्धर्मचिंतायांकुटुंबव्यापृतेछले ॥ विशेष
णेपुंस्युपधिःपुंसिस्याजरथांगयोः ॥ कबंधोऽस्त्रीक्रियायुक्तव्यपमू
र्धकलेवरे ॥३०॥ क्लीबंजलेपुंस्युदरेराहुरक्षोविशेषयोः ॥ दुर्विधोवा-
च्यलिंगःस्याद्दुर्गतेपिखलेपिच ॥ ३१॥ न्यग्रोधस्तुपुमान्व्यामवटयो
श्चशमीतरौ ॥ न्यग्रोधीनृपचित्रायांनिरोधोनाशरोधयोः ॥ ३२ ॥
निषधःकठिनेदेशेतद्राजेपर्वतांतरे ॥ परिधिर्नायज्ञियद्रुशाखा
यामुपसूर्यके ॥ ३३॥ प्रसिद्धोभूषितेख्यातेप्रणिधिर्नाऽनुचरेच

रे॥ मागधी स्त्रीकणायूथ्योर्वाच्यवन्मगधोद्भवे॥ ३४॥ पुंसि वैश्यात्क्षत्रियाजे शुक्लजीरकबंदिनोः॥ विवधो वीवधश्चापि पर्याहारेऽध्वभावयोः॥ ३५॥ विश्रब्धोऽत्युद्धटेपि स्याद्गाढविश्वस्तयोस्त्रिषु॥ विबुधो ज्ञे सुरे वीरुल्लताविटपयोः स्त्रियां॥ ३६॥ सन्नद्धो वर्मिते व्यूढे संबाधः संकटे भगे॥ संनिधिः सन्निधानेपि पुमानिंद्रियगोचरे॥ ३७॥ संसिद्धिः प्रकृतौ सिद्धौ मदोद्धायामपि स्त्रियां॥ संबोधो बोधने क्षेपे समाधिर्नासमर्थने॥ ३८॥ ध्याननीवाकनियमे काव्यस्य च गुणांतरे॥ धचतुः ॥ अवरोधस्तिरोधाने राजदारेषु तद्गृहे॥ ३९॥ अवष्टब्धोऽविदूरे स्यादाक्रांते चावलंबिते॥ अनुबंधस्तु बंधे स्याद्दोषोत्पादे विनश्वरे॥ ४०॥ मुख्यानुयायि बाले च प्रकृतस्यानिवर्तने॥ अनुबंधी तु हिक्कायां तृष्णायामपि योषिति॥ ४१॥ अनिरुद्ध उषानाथे पुंसि चाऽबंधनेऽन्यवत्॥ आशाबंधः समाश्वासे पुंसि मर्कटजालके॥ ४२॥ इष्टगंधः सुगंधौ स्यात्त्रिषु क्लीबं तु वालुके॥ इक्षुगंधा कोकिलाक्षे क्रोष्ट्र्यां काशे च गोक्षुरे॥ ४३॥ उपलब्धिर्मतौ प्राप्तावपि ज्ञाने च योषिति॥ उग्रगंधाजमोदायां वचायां छिक्किकौषधौ॥ ४४॥ कालस्कंधस्तमाले स्यात्तिंदुके जीवकद्रुमे॥ तीक्ष्णगंधा वचाराजिकयोः शोभांजने पुमान्॥ ४५॥ तृणगोधा चित्रकोले कृकलासेपि योषिति॥ परिव्याधस्तु पुंसि स्याद्वेतसे च द्रुमोत्पले॥ ४६॥ ब्रह्मबंधुरधिक्षिप्ते निर्देशे ब्राह्मणस्य ना॥ महौषधं तु शुंठ्यां स्याद्विषायां लशुनेपि च॥ ४७॥ समुन्नद्धः समुद्धूते पंडितंमन्यगर्विते॥ ॥ धपंच॥ योजनगंधा कस्तूर्यां सीतायां व्यासमातरि॥ ४८॥ ॥ इति धांतवर्गः॥ ॥ नैकम्॥ ॥ नः पुमान्सुगते बंधे द्विरुंडे प्रस्तुतेपि च॥ ॥ नद्विः॥ ॥ अग्निर्वैश्वानरेपि स्याच्चित्रकाख्यौषधौ पुमान्॥ १॥ अन्नं भक्ते च भुक्ते स्यादिनः पत्यौ नृपार्कयोः॥ उन्नं क्लिन्ने च करते कृत्स्नं सर्वबुकुक्षिषु॥ २॥ घनं स्यात्कांस्यतालादि

दिवाद्यमध्यमन्त्रयोः॥ नामुस्ताब्द्यौघदार्ढ्येषु विस्तारे लोहमुद्गरे॥
३॥ त्रिषु सान्द्रे दृढे चाथ चिन्हं लक्ष्मपताकयोः॥ चीनो देशांशुकव्रीहि
भेदे तन्तौ मृगान्तरे॥ ४॥ छन्नं तु रहसि क्लीबं छादिते वाच्यलिंगवत्॥।
छिन्नं कृत्ते त्रिलिंगं स्याद्गुडूच्यामपि योषिति॥ ५॥ जनो लोके महर्लो
कात्परलोके च पामरे॥ जनी सीमन्तिनीवध्वोरुत्पत्तावोषधीभिदि॥ ६॥
जन्हुः स्यात्पुंसि राजर्षिभेदे च मधुसूदने॥ ज्यानि जीर्णे च हानौ च तटि
न्यामपि योषिति॥ ७॥ जिनोर्हति च बुद्धे च पुंसि स्याज्जित्वरे त्रिषु॥ ज्यो
त्स्ना चन्द्रातपेपि स्याज्ज्योत्स्नायुक्तनिशि स्मृता॥ ८॥ ज्योत्स्नी पटोलि
कायां स्याज्ज्योत्स्नायुक्तनिशि स्त्रियां॥ तनुः काये त्वचि स्त्री स्यात्त्रि
ष्वल्पे विरले कृशे॥ ९॥ दानं गजमदे त्यागे पालनच्छेदशुद्धिषु॥ दानुर्दा
तरि विक्रान्ते दीना स्त्री मूषिके स्त्रियां॥ १०॥ वाच्यवद्दुर्गते भीते द्युम्नं
वित्ते बलेपि च॥ धनुः पुमान्प्रियालद्रौ राशिभेदे शरासने॥ ११॥ धनं तु-
गोधने वित्ते धाना भृष्टयवेपि च॥ धान्याके भिन्नबोऽङ्कुरे धेनी नद्यां न
दे पुमान्॥ १२॥ नग्नो वन्दिक्षपणयोः पुंसि त्रिषु विवाससि॥ न्यूनं गर्ह्योन
योः पानं पीतिभाजनरक्षणे॥ १३॥ भानुर्नाकिरणे सूर्ये भिन्नः स्यात्
त्रिषु दारिते॥ संगतेऽन्यत्र फुल्ले च मानश्चित्तोन्नतौ ग्रहे॥ १४॥ क्लीबं प्रमा
णे प्रस्थादौ मीनो राश्यन्तरे झषे॥ मुनिः पुंसि वसिष्ठादौ वंकसेनतरौ जिने
॥ १५॥ मृत्स्ना मृत्सा तु वर्योः स्त्री यानं स्याद्वाहने गतौ॥ योनिः स्त्रीपुं
सयोश्च स्यादाकरे स्मरमन्दिरे॥ १६॥ रत्नं स्वजातिश्रेष्ठेपि मणावपि नपुंस
कं॥ रास्ना च स्याद्भुजंगाख्यां एलापर्ण्यामपि स्त्रियाम्॥ १७॥ लग्नं राश्यु
दये क्लीबं सक्तलज्जितयोस्त्रिषु॥ वस्नस्त्वविक्रये पुंसि वेतने स्यान्नपुंस
कम्॥ १८॥ वनं नपुंसकं नीरे निवासालयकानने॥ वन्हिर्वैश्वानरेऽपि
स्याच्चित्रकाख्यौषधौ पुमान्॥ १९॥ वानं शुष्कफले शुष्के स्यूतिकर्मकटे
गतौ॥ विन्नं विचारिते लब्धे बुध्नो नामूलरुद्रयोः॥ २०॥ श्वा पुमान्कुक्कु
रे स्यात्तु स्थानभेदे च वास्तुन॥ शीनो मूर्खे चाजगरे श्येनः पक्षिणि पां

दुरे॥ २१॥ स्वप्नः स्वापे प्रसुप्तस्य विज्ञाने दर्शने पुमान्॥ सानुरस्त्री वने
प्रस्थे वा स्यामार्गाग्रकोविदे॥ २२॥ स्थानं सादृश्येऽवकाशे स्थितौ वृद्धिक्ष
येतरे॥ स्त्यानं स्निग्धे प्रतिध्वाने घनतालस्ययोरपि॥ २३॥ स्नानं स्ना
नीयेऽभिषवे सूनं प्रसवपुष्पयोः॥ सूना पुत्र्यां वधस्थाने गलशुंडिकयोः
स्त्रियां॥ २४॥ सूनुः पुत्रेऽनुजेऽर्के ना स्थूनुः किरणसूर्ययोः॥ हनुर्हट्टवि
लासिन्यां स्त्रीनावज्रे गदे स्त्रियां॥ २५॥ द्वयोः कपोलावयवे हीनं गर्ह्योन
योस्त्रिषु॥ ॥ नत्रिः॥ ॥ अंजनं कज्जले चाक्तौ सौवीरे च र-
सांजने॥ २६॥ पुंसि ज्येष्ठा दिग्गजयो रंजना वानरीभिदि॥ अंजनी ले
प्यनार्यां चावनं प्रीतौ च रक्षणे॥ २७॥ अयनं पथि भानोरप्युदग्दक्षि-
णतो गतौ॥ अपानं तु गुदे क्लीबं पुंसि स्यात्तत्स्थमारुते॥ २८॥ असनं
क्षेपणे क्लीबं पुंसि स्याज्जीवकद्रुमे॥ अंगनं प्रांगते याने कामिन्यामंग
नामना॥ २९॥ अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः॥ मातुरेकसुते
पिस्यात्सुल्लिंगो धवलेऽन्यवत्॥ ३०॥ नपुंसकं तृणे नेत्रगदे चाप्यर्जुनी
गवि॥ उषायां बाहुदानद्यां कुट्टिन्यामपि च क्वचित्॥ ३१॥ अम्लानो महा
सहायां नान्यलिंगस्तु निर्मले॥ अर्शोघ्नी तालमूल्यां स्यादर्शोघ्नः सूर
णेपि च॥ ३२॥ असिक्नी स्यादवृद्धान्तःपुरप्रेष्यानदीभिदोः॥ अशनिः
स्त्रीपुंसयोः स्याच्चंचलायां पवावपि॥ ३३॥ अरत्निर्ना सप्रकोष्ठ ततांगु
लिकरेपि च॥ कफोणावप्यथाली स्याद्वृश्चिके भ्रमरे पुमान्॥ ३४॥ अ
र्थी पुमान्याचके स्यात्सेवके च विवादिनि॥ अध्वा ना पथि संस्थाने-
स्यादवस्कंदकालयोः॥ ३५॥ अर्वा तुरंगमे पुंसि कुत्सिते वाच्यलिंगकः
आसनं द्विरदस्कंधे पीठे यात्रानिवर्तने॥ ३६॥ आसनी विपणौ स्त्रि
यामासनो ना तु जीवके॥ आदानं ग्रहणेपि स्यादलंकारे च वाजिनाम्
॥ ३७॥ आपन्नः सविपत्तौ च प्राप्ते वाच्यवदीरितः॥ आत्मा पुंसि स्व
भावेपि प्रयत्नमनसोरपि॥ ३८॥ धृतावपि मनीषायां शरीरब्रह्मणोर
पि॥ आलानं करिणां बंधस्तंभे रज्जौ च न स्त्रियां॥ ३९॥ ईशानं ज्यो

षिक्लीबंपुल्लिंगः स्यान्त्रिलोचने॥ उत्तानमगभीरेस्यादूर्ध्वास्यशयित्ते त्रिषु॥ ४०॥ उत्थानमुद्यमेतंत्रेपौरुषेपुस्तकेरणे॥ प्रांगणोद्गमहर्षेषु मलरोगेपिनद्वयोः॥ ४१॥ उद्यानंस्यान्निःसरणेवनभेदेप्रयोजने॥ उदानोप्युदरावर्तेवायुभेदेभुजंगमे॥ ४२॥ उद्धानमुज्झनेवाच्यलिंगंचुल्यांनपुंसकम्॥ ओदनंनस्त्रियांभक्तेबलायामोदनीस्त्रियां॥ ४३॥ कमनः कामुकेकामेऽभिरूपेऽशोकपादपे॥ कंपनंनद्वयोःकंपेकंप्रेस्यादभिधेयवत्॥ ४४॥ कठिनमपिनिष्ठुरेस्यात्स्तब्धेपित्रिषुनपुंसकंस्थाल्यां॥ कठिनीखटिकायामपिकठिनागुडशर्करायांच॥ ४५॥ क्रंदनंरोदनेपिस्यादाह्वानेप्यथकल्पना॥ करिणःसज्जनायांस्त्रीक्लीबंक्लृप्तौचकल्पने॥ ४६॥ कर्तनंनद्वयोश्छेदेनारीणांसूत्रनिर्मितौ॥ कर्मास्त्रीव्याप्यक्रिययोः कदनंमर्दपापयोः॥ ४७॥ कांचनः कांचनारेस्याच्चंपकेनागकेसरे॥ उदुंबरेचधत्तूरेहरिद्रायांचकांचनी॥ ४८॥ क्लीबेजाकेसरेहेम्निकामिनीभीरुवंस्योः॥ कामीतुकामुकेचक्रवाकेपारावतेपिच॥ ४९॥ कानीनः कन्यकाजाततनयेव्यासकर्णयोः॥ काकिनीपणपादेपिमानदंडवराटके॥ ५०॥ काननंविपिनेगेहेपरमेष्ठिमुखेपिच॥ कुहनंमृत्तिकाभांडविशेषकाचभाजने॥ ५१॥ कुहनादंभचर्यायामीर्ष्यालौकुहनंत्रिषु॥ कृतीस्यात्पंडितेयोग्येकेतनंतुनिमंत्रणे॥ ५२॥ गृहेकेतौचकृत्येथकेशीकेशवतित्रिषु॥ दैत्येनाच्चौरपुष्प्यां स्त्रीकौलीनंगुह्यजन्ययोः॥ ५३॥ कुकर्मणिकुलीनस्तेयुद्धेपश्वहिपक्षिणां॥ कौपीनंस्यादकार्येचचीरगुह्यप्रदेशयोः॥ ५४॥ खलिनीखलवृंदेस्यात्तालपर्ण्यामपिस्त्रियां॥ खंजनंखंजरीटेस्त्रीसर्षप्यांखंजनंगतौ॥ ५५॥ खड्गीनागंडकेमंजुघोषेखड्गधरेत्रिषु॥ गर्जनंनिनदेकोपेगहनंकलिलेत्रिषु॥ ५६॥ नपुंसकंगह्वरेस्याद्दुःखकाननयोरपि॥ गंधनमुत्साहेस्यात्प्रकाशनेसूचनेपिहिंसायां॥ ५७॥ ग्रामीनः शुनिकाकेपुंसित्रिषुसंभृतेग्रामे॥ ग्रावातुप्रस्तरेपृथ्वी-

धरेपुंस्यथरं जनम् ॥ ५८ ॥ विषदग्धपशोर्मांसेक्लीबंपुंसिरसोनके ॥ गोस्तनो हारभेदेस्याद्द्राक्षायांगोस्तनीस्त्रियाम् ॥ ५९ ॥ गोमी शृगालेपुंसिस्यात्त्रिषुगोमत्युपासके ॥ घटना चलनावृत्त्योश्चंदनी तुनदीभिदि ॥ ६० ॥ चंदनो ऽस्त्रीमलजयेभद्रकाल्यांनपुंसके ॥ चलनंकम्पमणेकस्येकंमेतुवाच्यलिंगकम् ॥ ६१ ॥ चलनीचरम्यपोधित्र्यांचारीभेदेपिचक्कचित् ॥ चक्री जालिकभित्कोककुलालाजाहिसूचके ॥ ६२ ॥ चर्मी फलकपाणौस्याद्भूर्जेभृंगरिटावपि ॥ चर्मकृत्तो चफलकेचेतना संविदिस्त्रियाम् ॥ ६३ ॥ वाच्यवत्त्राणयुक्तेथ छद्म व्याजापदेशयोः ॥ छर्दनंवमनेक्लीबंनिंबालंबुषयोःपुमान् ॥ ६४ ॥ छदनं छदनेपक्षेपिधानेछेदनंभिदि ॥ कर्तनेजगत्नुःपुंसिजंतौवैश्वानरेपिच ॥ ६५ ॥ जवनंतुस्यद्वेगिहयेनावेगिनित्रिषु ॥ जननीतुदयामात्रोजननंवंशजन्मनोः ॥ ६६ ॥ जयनंस्यात्तुरंगादिसन्नाहेविजयेऽपिच ॥ जघनंवस्त्रियाःश्रोणिपुरोभागेकटावपि ॥ ६७ ज्ञानीस्यात्पुंसिदैवज्ञेज्ञानयुक्तेन्यलिंगकः ॥ जीवनंवर्तनेनीरप्राणधारणयोरपि ॥ ६८ ॥ जीवनीजीवनाचापिजीवंतीभेदयोःक्रमात् ॥ तपनोरुष्करेपिस्याद्भास्करेनिरयांतरे ॥ ६९ ॥ तलूनःपवनेयूनियुवत्यांतलुनीस्मृता ॥ तलिनेविरलेस्तोकेस्वच्छेपिवाच्यलिंगकम् ॥ ७० ॥ तमोघ्नःसूर्यवह्न्योर्बुद्धशंकरविष्णुषु ॥ त्यागीदानरिशूरेऽथ तेवनंकेलिकानने ॥ ७१ ॥ क्रीडायांतेमनंत्वार्द्रीकरणेव्यंजनेपिच ॥ तेजनःपुंसिवंशेस्यात्तेजनीतृणपूलके ॥ ७२ ॥ तोदनंव्यथनेतोत्रे दंशनंदंशवर्मणोः ॥ दर्शनंनयनस्वप्नबुद्धिधर्मोपलब्धिषु ॥ ७३ ॥ शास्त्रदर्पणयोश्चाथ दमनःपुष्पधीरयोः ॥ दशनःशिखरेदंतेकवचेतुनपुंसकम् ॥ ७४ ॥ दहनश्चित्रकेभल्लातकेग्नौदुष्टचेष्टिते दशानंज्योतिषिक्लीबंपुल्लिंगःस्याद्दिशोवने ॥ ७५ ॥ देवनंव्यवहारेस्याज्जिगीषाक्रीडयोरपि ॥ देवनोऽक्षेषुपुंसिस्याध्वजीतुपृथिवीधरे ॥ ७६ ॥

रथब्राह्मणयोश्चापि भुजंगमतुरंगयोः ॥ धन्वी धनुर्धरेपि स्यादर्ह-णे ककुभद्रुमे ॥ ७७ ॥ धन्वा तु मरुदेशेना क्लीबं चापे स्थलेपि च ॥ धमनोऽनानले भस्त्राध्मापकक्रूरयोः स्त्रिषु ॥ ७८ ॥ धमनी तु शिराहट्टविलासिन्योश्च योषिति ॥ धावनं गमने शुद्धौ पृश्निप-र्ण्यां तु धावनी ॥ ७९ ॥ धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः नंदनं वासवोद्याने नंदनो हर्षके सुते ॥ ८० ॥ नंदी हरप्रतीहारे गर्दभांडे वनद्रुमे ॥ नंदिन्युमायां गंगायां ननांदृधेनुभेदयोः ॥ ८१ नलिनी पद्मिनी व्योमनिम्नगाकमलाकरे ॥ नपुंसकं नीलिकायां नपुंसि सरसीरुहे ॥ ८२ ॥ निदानं कारणे वत्सदामादिकारणक्षये निधनं स्यात्कुलनाशे प्रधनं दारणे रणे ॥ ८३ ॥ पवनं कुंभकार स्यपाकस्थाने नपुंसकम् ॥ निष्पावमारुतौ पुंसि प्रज्ञानं बुद्धिचि ह्नयोः ॥ ८४ ॥ प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि ॥ प्रज्ञा यामपि च क्लीबमेकलिंगं तूत्तमे सदा ॥ ८५ ॥ पद्मिनी पद्मसंघाते स्त्रीविशेषे सरोरुहे ॥ प्रसन्ना स्त्री सुरायां स्यात्स्वच्छसंतुष्टयोस्त्रिषु ॥ ८६ ॥ प्रसूनो वाच्यवज्जाने क्लीबं तु फलपुष्पयोः ॥ पत्री स्यंदने पत्र रथे कांडदुराथिकादिषु ॥ ८७ ॥ पर्व क्लीबं महे ग्रंथौ प्रस्तावे लक्षणांत रे ॥ दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि ॥ ८८ ॥ सूक्ष्मसूत्रादिसू क्ष्मांशो किंजल्के नेत्रलोमनि ॥ पाठीनो मीनभेदे स्यात्पाठके गुग्गुल द्रुमे ॥ ८९ ॥ पावनं तु जले कृच्छ्रे नाध्यासे पावके पि च ॥ पाचनं दशमूल्यादौ प्रायश्चित्ते च नानले ॥ ९० ॥ वाच्यवत्पाचयितरि हरीत क्यां तु योषिति पाशी व्याधे च वरुणे पिशुनं कुंकुमेपि च ॥ क-पिवक्त्रे च काके ना सूचकक्रूरयोस्त्रिषु ॥ पृक्कायां पिशुना स्त्री स्यात्पीननं पीनदारुणि ॥ ९२ ॥ कुंकुमे हरिताले च पुमाना ज्ञातके मतः ॥ पूतना तु हरीतक्यां दानवीरोगभेदयोः ॥ ९३ ॥ पृतना तु स्त्रियां सेनामात्रसेनाविशेषयोः प्रेत्वा ना वासवे वाते प्रेमा

स्त्रीस्नेहहर्षयोः॥९४॥फलिन्यग्निशिखायांस्त्रीफलिन्यांफलिनंत्रिषु॥फाल्गुनस्तुगुडाकेशनदीजार्जुनभूरुहे॥९५॥तपस्यसंज्ञेमासेतत्पूर्णिमायांतुफाल्गुनी॥ब्रध्नस्तलनपोवेदेनद्वयोःपुंसिवेधसि॥९६॥अलिङ्गस्योगभिदोर्विप्रेबंधनंवधबंधयोः॥बंदीनननिजीवानुकटीमाचलकर्मसु॥९७॥वाहिनीस्यात्तरंगिण्यां-सेनासैन्यप्रभेदयोः॥वाणिनीनर्तकीमत्ताविदग्धवनितासुच॥९८॥बुधानस्तुगुरौविज्ञेबोधनंगंधदीपने॥बोधिनीबोधिपिप्पल्योर्भर्मस्यात्कांचनेभृतौ॥९९॥भंडनंकवचेयुद्धेखलीकारेपिनद्वयोः॥भट्टिनीद्विजभार्यायांनाट्योक्त्यांराजयोषिति॥१००॥भवनंस्याद्गृहेभावेभाजनंयोग्यपात्रयोः॥भावनातुननाध्यानेपर्यालोचेधिवासने॥१॥प्लवनंपिष्टपेपिस्यात्सलिलेगगनेजले॥भोगीभुजंगमेपिस्याद्ग्रामणात्रेनृपेपुमान्॥२॥विहायमहिषीमन्यराजयोषितिभोगिनी॥मदनःस्मरवसंतद्रुभिद्रूस्त्रूसिक्थके॥३॥मलनःपटवासेनामर्दनंतुनपुंसकम्॥मलिनंदूषितेकृष्णेऋतुमत्यांतुयोषिति॥४॥मंडनंभूषणेक्लीबंस्यात्त्रिष्वलंकरिष्णुनि॥मार्जनंनद्वयोर्मार्ष्टौपुंसिस्याल्लोध्रशाखिनि॥५॥मालिनीमातृकाछन्दभिदोर्मालिकयोषिति॥गौरीचंपानगर्योश्चमंदाकिन्यांनदीभिदि॥६॥मानिनीतुस्त्रियांफल्यांमानीमानवतित्रिषु॥मिथुनंतुद्वयोराशिभेदेस्त्रीपुंसयुग्मके॥७॥मुंडनंवपनेत्राणेमहनंमूत्रशिश्नयोः॥मैथुनंसुरतेपिस्यात्संगतेपिनपुंसकम्॥८यमनंबंधनेचोपरतौक्लीबंयमेपुमान्॥यवनोदेशभेदेनावेगिवेगाधिकाश्वयोः॥९॥यावान्योषधिभेदेस्त्रीवाच्यवद्गेगिनिस्मृता॥यापनंवर्तनेकालक्षेपेनिरसनेपिच॥१०॥युवांस्यात्तरुणेश्रेष्ठेनि-सर्गबलशालिनि॥युंजानःसरथौविप्रेयोजनंपरमात्मनि॥११॥चतुःक्रोश्यांचयोगेथरसनंस्वदनेध्वनौ॥जिह्वायांतुनपुंसिस्या

द्राक्षायां रसना स्त्रियाम् ॥ १२ ॥ रंजनो रागजनने रंजनं रक्त
चंदने ॥ मुंडारोचनिकानीलीमंजिष्ठासु च रंजनी ॥ १३ ॥ रजनी
नीलिनी रात्रिहरिद्राजतुकासु च ॥ राधनं साधने प्राप्तौ राधना
भाषणे स्त्रियाम् ॥ १४ ॥ राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ ॥
यक्षे शक्रे च पुंसि स्याद्रागी रक्तोपि कामुके ॥ १५ ॥ रेचनी त्रिवृता
दंत्यो रोचनी कर्कशे स्त्रियाम् ॥ रोचना रक्तकल्हारे गोपित्तवर
योषितोः ॥ १६ ॥ रोचनः कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु ॥ रो
दनं क्रंदने स्रेपि दुरालभौषधौ स्त्रियाम् ॥ १७ ॥ रोही रोहितकेऽश्व
त्थवटपादपयोः पुमान् ॥ लंघनं तूपवासे स्यात्क्रमणे प्लवनेऽपि
च ॥ १८ ॥ ललना कामिनीनारीभेदजिह्वासु योषिति ॥ लक्ष्म
चिह्ने प्रधाने च लांछनं मानचिह्नयोः ॥ १९ ॥ स्वेलनं छर्दने ध्व
जे लिपिन्यासेऽथ वर्जनम् ॥ हिंसात्यागयोर्वपनं बीजाधाने च मुं
डने ॥ २० ॥ वसनं छादने वस्त्रे वमनं छर्दनेऽर्दने ॥ वर्द्धनं छेद्धि
र्द्ध्युच्छेदे वर्त्यां तु वर्द्धिनी ॥ २१ ॥ व्यंजनं तेमने चिह्ने श्मश्रुण्य
वयवे हनि ॥ व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु ॥ २२ ॥ दे
वानिष्टफले पापे विपत्तौ निष्फलोद्यमे ॥ वर्तनो वामने स्त्री वंटत्तो
स्त्री प्रेषणाध्वनोः ॥ २३ ॥ नपुंसि तु लनालायां तर्कुपीठे च जीवने ॥
वर्त्तिष्णौ त्रिषु वज्री तु वृद्धे देवाधिपे पुमान् ॥ २४ ॥ वत्सकं स्तपु
मान्वित्रे वानदूके भिधेयवत् ॥ वर्णी स्याल्लेखके चित्रकरे पित्र
ह्मचारिणि ॥ २५ ॥ वर्ष्मा देहप्रमाणाति सुंदराकृतिषु स्मृतम् ॥ व
र्त्म नेत्रच्छदे मार्गे वाजी वाणाश्वपक्षिषु ॥ २६ ॥ वामनो ध्यति
खर्वे च त्रिषु पुंसि तु दिग्गजे ॥ हरावंकोटवृक्षेऽथ वासनं धूपने
पि च ॥ २७ ॥ वारिधान्यां च वस्त्रे च प्रत्याशाज्ञानयोः स्त्रियाम् ॥
वाग्मी पटौ सुराचार्ये विज्ञानं ज्ञानकर्मणोः ॥ २८ ॥ वितु-
न्नं स्नानिषण्णे च शैवाले च नपुंसकम् ॥ विमानो व्योमयाने-

चसार्वभौमगृहेपिच॥ २९॥ घोटकेयानपात्रेचपुंनपुंसकयोर्मतः॥ वि
तानोयज्ञउल्लोचेविस्तारेपुन्नपुंसकम्॥ ३०॥ क्लीबंवृत्तविशेषेस्यात्त्रि-
लिंगोमत्ततुच्छयोः॥ विक्लिन्नोजरसाजीर्णेशीर्णेचार्द्रेचवाच्यवत्॥ ३१॥
विपन्नंविपदाक्रांतेत्रिषुपुंसिभुजंगमे॥ विच्छिन्नंचसमालब्धेविभक्ते
प्यभिधेयवत्॥ ३२॥ विलग्नंनस्त्रियांमध्येत्रिषुस्याल्लग्नमात्रके॥ विष-
घ्नस्तुशिरीषेनागुडूचीत्रिवृतोःस्त्रियाम्॥ ३३॥ व्युत्थानंस्वातंत्र्यकृत्ये
विरोधाचरणेपिच॥ वृजिनंकल्मषेक्लीबंकेशेनाकुटिलेत्रिषु॥ ३४॥ वृ
षाकर्णमहेंद्रेना वेदनाज्ञानदुःखयोः॥ वेष्टनंकर्णशष्कुल्यामुष्णीषे
मुकुटेवृतौ॥ ३५॥ व्योमवारिणिचाकाशेभास्करस्यार्चनाश्रये॥ शकु
निःपुंसिविहगेसौबलेकरणांतरे॥ ३६॥ शयनंसुरतेनिद्राशय्ययोश्च
नपुंसकं॥ शमनंशांतिवधयोःशमनःश्राद्धदेवते॥ ३७॥ श्वसनं
स्वसितेपुंसिमारुतेमदनद्रुमे॥ शकुनस्तुपुमान्पक्षिमात्रपक्षिविशेष
योः॥ ३८॥ शुभशंसिनिमित्तेचशाकुनंस्यान्नपुंसकं॥ शंखिनीश्वेत
चुक्रायांचौरपुष्प्यांवधूभिदि॥ ३९॥ शंखीहरौसमुद्रेनाशंखवत्यभि
धेयवत्॥ शतघ्नीशस्त्रभेदेस्यात्वृश्चिकाल्यांकरंजके॥ ४०॥ शास
नंराजदत्तोर्व्यांलेखाज्ञाशास्त्रशास्तिषु॥ शाखीस्यात्पादपेवेदेतुरुष्का
ख्यजनेपुमान्॥ ४१॥ शिखीवन्हौबलीवर्देशरेकेतुग्रहेद्रुमे॥ मयूरेकु
क्कुटेपुंसिशिखावत्यन्यलिंगकः॥ ४२॥ शिल्पीतुवाच्यवत्कारौस्त्रि
यांकोलदलौषधौ॥ शृंगीशृंगयुतेनागेवृषपर्वतयोरपि॥ ४३॥ श्ले-
ष्मघ्नीमल्लिकायांचज्योतिष्मत्यांचयोषिति॥ शोभनोयोगभेदे-
नास्कंदेवाच्यलिंगकः॥ ४४॥ सवनंत्वध्वरेस्नानेसोमनिर्दलनेपि
च॥ स्तननंध्वनिमात्रेस्यान्मेघशब्देचकुंथिते॥ ४५॥ समानंसत्स
मैकेषुत्रिषुनाभिमारुते॥ संतानःसंततौगोत्रेस्यादपत्येसुरद्रुमे
॥ ४६॥ स्पर्शनोमारुतेपुंसिदानेस्पर्शेनपुंसकम्॥ संस्थानमाकृतौ
मृत्यौसन्निवेशेचतुष्पथे॥ ४७॥ स्यंदनंतुस्रुतौनीरेतिनिशेनारथेस्त्रि

याम्॥ सज्जनंतुभवेत्क्लीबमुपरक्षणघट्टयोः॥ ४८॥ वाच्यलिंगंकुली
नेस्यात्कल्पनायांतुयोषिति॥ संधानंस्यादभिषवेतथासंघट्टनेपिच॥
४९॥ संपन्नंसाधितेपिस्यात्संपत्तिसहितेन्यवत्॥ संधिनीवृषभा
क्रांताकालदुग्धोस्त्वयोः स्त्रियाम्॥ ५०॥ सद्मस्यान्मंदिरेनीरेसंव्या
नंछादनेंशुके॥ सदनंमंदिरेतोयेस्वामीप्रभुविशाखयोः॥ ५१॥ सा
दीतुरंगमातंगरथारोहेषुदृश्यते॥ स्थापनंरोपणेपुंसिवनेपानौष
धौस्त्रियां॥ ५२॥ सावनोयज्ञकर्मांतेयजमानप्रचेतसोः॥ साधनं
मृतसंस्कारेसैन्येसिद्धौषधौगतौ॥ ५३॥ निर्वर्त्तनोपायमेद्रुदापनेऽनु
गमेधने॥ सामक्लीबमुपायस्यभेदेवेदांतरेपिच॥ ५४॥ सीमा घाटस्थि
तिक्षेत्रेष्वंडकोषेऽपिचस्त्रियां॥ सूचनाव्यधनेदुष्टेगंधनेऽभिनयेपि
च॥ ५५॥ सेचनंरक्षणेसेकेनौकायाःसेकभाजने॥ सेनानीः स्यात्सु
मान्कार्तिकेयसेनापतावपि॥ ५६॥ सेवनंसीवनोपास्त्योर्हलीरामेच
कर्षके॥ हस्तिनीगजयोषायांजातिभेदेचयोषितः॥ ५७॥ हसनंन
द्वयोर्हासेऽगारधान्यांतुयोषिति॥ हायनोनस्त्रियांवर्षेपुंस्यर्चिर्व्री-
हिभेदयोः॥ ५८॥ ह्रादिनीवज्रतडितोर्हिंडनंभ्रमणेरते॥ ॥

नचतुः॥ ॥ अवलग्नोऽस्त्रियांमध्येत्रिषुस्याल्लग्नमात्रके॥ ५९
अनूचानोविनीतेस्यात्सांगवेदविचक्षणे॥ अवाचीनमवागधेवि
पर्यस्तेचवाच्यवत्॥ ६०॥ अभिपन्नोऽपराधेभिग्रस्तेचापद्गतेत्रिषु
॥ अवदानंखंडनेस्यादतिवृत्तेचकर्मणि॥ ६१॥ अभिमानोऽर्था
दिदर्पेऽज्ञानेप्रणयहिंसयोः॥ अनीकिनीस्त्रियांसेनामात्रसेनावि
शेषयोः॥ ६२॥ अधिष्ठानंपुरेचक्रेप्रभावेऽध्यासनेपिच॥ अन्वास
नंस्नेहवस्तावुपास्तावनुशोचने॥ ६३॥ अर्यमातुपुमान्सूर्येपितृ
देवांतरेपिच॥ अथर्वाब्राह्मणेपुंसिवेदेतुस्यान्नपुंसकम्॥ ६४॥ प्र
वेदभिजनः ख्यातौजन्मभूम्यांकुलध्वजे॥ कुलेपिचपुमानायोध
नंयुद्धेवधेपिच॥ ६५॥ स्यादाकलनमाकांक्षापरिसंख्यानबंधने॥

आतंचनंप्रतीवापपवनाप्यायनेषुच॥ ६६॥ आराधनंचपचनेप्रा
प्तौसंतोषणेपिच॥ आच्छादनंसंपिधानेवस्त्रेःपर्यस्तिमात्रके॥ ६७
आस्कंदनंतिरस्कारेरणेसंशोषणेपिच॥ आवेशनंशिल्पिशाले
भूतावेशप्रवेशयोः॥ ६८॥ आत्मयोनिःपुमान्कामदेवेचपरमेष्ठिनि
॥ उपधानंविषेगेंडौप्रणयेपिनपुंसकं॥ ६९॥ उत्सादनंसमुल्लेखो
द्वाहनोद्वर्तनेषुच॥ स्यादुत्पतनमुत्पत्तौनत्योर्ध्वगमनेऽपिच॥ ७०॥
उद्वर्तनमुत्पतनेविलेपनेघर्षणेक्लीबं॥ उदयनमुदयेक्लीबंवत्सेशा
गस्त्ययोःपुंसि॥ ७१॥ उद्वाहनंप्रणीतेस्यात्स्त्रीमुद्वाहनीमता॥ उ
पासनंशराभ्यासेप्युपास्त्यावासनेपिच॥ ७२॥ कपीतनोगर्दभांड
शिरीषाम्रातकेषुच॥ अश्वत्थेचकलापीतुप्लक्षबर्हिणयोःपुमान्॥
७३॥ कलध्वनिःपुमान्पारावतेपिकमयूरयोः॥ कंचुकीयंतःपुरा-
ध्यक्षेषिड्गेःहीजेंगकद्रुमे॥ ७४॥ कात्यायनोवररुचौविशेषेचमु
नेःपुमान्॥ काषायवस्त्रेविधवार्द्धजरत्तुभयोःस्त्रियाम्॥ ७५॥ कुं
भयोनिरगस्त्येस्याद्वसिष्ठद्रोणयोःपुमान्॥ कुचंदनंचपत्रांगेद्रुमे
देरक्तचंदने॥ ७६॥ कुंडलीवरुणेकेकिभोगिनोश्चसकुंडले केस
रीतुरगेसिंहेपुन्नागेनागकेसरे॥ ७७॥ क्रौंचादनंतुघंटुल्यां चिचो
टकमृणालयोः॥ खड्गधेनुःस्त्रियांखड्गपुत्रिकागंडकस्त्रियोः॥ ७८
॥ गवादनींद्रवारुण्यांगवांघासादनाश्रये॥ गदयित्नुःपुमान्का
मेजल्पाकेकामुकेपिच॥ ७९॥ घनाघनोवर्षुकाब्देमत्तघातुककुंज
रे॥ चक्रेच घोषयित्नुस्तुविप्रकोकिलयोःपुमान्॥ ८०॥ चित्रभा
नुःपुमान्वैश्वानरेचाहस्करेपिच॥ चोलकीतुकर्थरेस्यान्नारंगे-
विष्कुपर्वणि॥ ८१॥ जलाटनोलोहपृष्ठेजलौकायांजलाटनी॥
तपस्वीतापसेचानुकंप्येपिस्वथयोपिति॥ ८२॥ मांसिकाकटुरो
हिण्योस्तरस्वीशूरवेगिनोः॥ तपोधनस्तापसेस्यान्मुंडियांतुतपो
धना॥ ८३॥ द्विजन्मादशनेविप्रेदुर्नामक्लीबमर्शसि॥ स्याद्दीर्घको

षिकायांस्त्री देवसेनातुवज्रिणः॥ ८४॥ सुतायामपिसेनायांदेवना नांचयोषिति॥ नागांजनेभस्कंद्यौनागयष्टौचयोषिति॥ ८५॥ भवे न्निधुवनंकंपेस्फुरतेचनपुंसकं॥ निर्वासनंहिंसनेस्यान्नगरादे र्वहिष्कृतौ॥ ८६॥ निर्भर्त्सनंखलीकारेऽलक्तकेपिनपुंसकं॥ नि र्यातनंवैरशुद्धौदानेन्यासार्पणेपिच॥ ८७॥ निशामनंदर्शनेस्या दालोचनेचनद्वयोः॥ निशमनमुक्तंदृष्टौश्रुतौनिरसनंवधेप्र निक्षेपे॥ ८८॥ निष्ठीवनेप्रजननंयोनौजन्मन्यपिक्लीबं॥ प्रसह नमपिभंगेस्यात्क्षेपेपंचाननःशिवेसिंहे॥ ८९॥ प्रहसनमपि प्रहासेरूपकभेदेचपरिहासे॥ प्रणिधानंप्रयत्नेस्यात्समाधौचप्र वेशने॥ ९०॥ प्रयोजनंकार्यहेत्वोः पलाशीवृक्षरक्षसोः॥अथ प्रवचनंवेदेप्रकृष्टवचनेऽपिच॥ ९१॥ प्रतिपन्नोऽन्यलिंगःस्याद्विज्ञा तेंगीकृतेपिच॥ प्रस्फोटनंतुशूर्पेस्यात्ताडनेचविकाशने॥ ९२॥ प्र तिमानंप्रतिकायागजकुंभांतरालयोः॥ प्रतियत्नस्तुसंस्कारलि प्सोपग्रहणेषुच॥ ९३॥ प्रत्यर्थीवाच्यलिंगःस्याच्छत्रौचप्रतिवादिनि ॥ परिज्ञातुपुमान्विंदोयातिकेपरिचारके॥ ९४॥ प्रसाधनीतुकंक त्यांसिद्धौवेशेप्रसाधनं॥ पयस्विनीनदीधेन्वोर्विभावर्यांचयोषि ति॥ ९५॥ अथपुण्यजनोयक्षेराक्षसेसज्जनेपिच॥ पृथग्जन स्तुपुल्लिंगःकथितोनीचमूर्खयोः॥ ९६॥ फलकीमत्स्यभेदेनावा च्यवत्फलकाविने॥ वारकीरात्रुचिन्नाश्वपर्णीजीवपयोधिषु॥ ९७ ॥भूतात्मापुंसिनिर्दिष्टोदेहेचपरमेष्ठिनि॥ महाधनंमहामूल्येसु वर्णसिल्हकेपिच॥ ९८॥ महासेनः कार्तिकेयेमहासैन्यपतावपि ॥ मदयित्नुर्मेघपुनेपुमान्मद्येनपुंसकं॥ ९९॥ महामुनिरगस्त्ये नाकुस्तुवुरुणिनद्वयोः॥ मातुलानीकलालेस्याद्भंगायांमातुलस्त्रि याम्॥ १००॥ मालुधानोमातुलाहौमालुधानीलतांतरे॥ मेधावी नास्तुकेब्राह्म्यांस्त्रियांमेधाविनेत्रिषु॥ १०१॥ रसायनंविषेपिस्या

ज्जराव्याधिजिदौषधे ॥ पुल्लिंगः पक्षिराजेच विडंगारव्यौषधेपिच ॥ २ ॥ राजादनंक्षीरिकायांपियालेकिंशुकेपिच ॥ ललामस्यात्प्रभावेचलांछनध्वजवाजिषु ॥ ३ ॥ शृंगेप्रधानेभूषायामपिवालधिपुंड्रयोः ॥ लांगली नालिकेरेद्रौरेवतीरमणोपुमान् ॥ ४ ॥ वनश्वा गंधमार्जारे वंचकव्याघ्रयोःपुमान् ॥ वर्धमानःप्रभभेदेशरावैरंडविष्णुषु ॥ ५ ॥ विस्मापनः स्यात्कुहके गंधर्वनगरेस्मरे ॥ विसर्जनंपरित्यागेदानेसंप्रेषणेपिच ॥ ६ ॥ विरोचनः प्रल्हादस्यतनये ऽर्केऽग्निचंद्रयोः ॥ विहेठनंतुहिंसायांमर्दनेचविडंबने ॥ ७ ॥ भवेद्विहननं विघ्नहिंसयोस्तूलपिंजने ॥ विषयी विषयासक्तेवाच्यवत्क्लीबमिंद्रिये ॥ ८ ॥ पुंसिस्यान्नृपतौकामदेववैषयिकेपिच ॥ विष्वक्सेना फलिंग्यांस्याद्विष्वक्सेनोजनार्दने ॥ ९ ॥ विलेपनी स्त्रीवेषस्त्रीयवाग्वोरपियोषिति ॥ विलासीभोगिनिव्यालेविष्वक्सेनेऽग्निचंद्रयोः ॥ १० ॥ वृक्षादनस्त्वलदलेमधुच्छत्रकुठारयोः ॥ वृक्षादनीतुवंदायांविदारीकंदकेपिच ॥ ११ ॥ वैरोचनिस्तुसुगतेबलिदैत्यार्कपुत्रयोः ॥ शिखरीस्यादपामार्गेशैलपादपयोःपुमान् ॥ १२ ॥ शिखंडिनी यूथिकायांगुंजायामपियोषिति ॥ शिखंडी नाकलापेस्याद्वाणेयाशिमयूरयोः ॥ १३ ॥ शृंगारी पूगगजयोःसशृंगारसुवेषयोः ॥ अथश्लेष्मघनामल्यांकेतक्यामपियोषिति ॥ १४ ॥ संमूर्छनमभिव्याप्तावुच्छ्रायमोहयोरपि ॥ समुत्थानंसमुद्योगेव्याधीनांनिर्णयेपिच ॥ १५ ॥ सदादानो ऽभ्रमातंगेहेरंबेगंधहस्तिनि ॥ स्यात्संवदनमालोचेवशीकारेनपुंसकम् ॥ १६ ॥ समादानं समीचीनग्रहणेसौगतानाह्निके ॥ संवाहनंवाहनेस्याद्भारादेरंगमर्दने ॥ १७ ॥ समापनंपरिच्छेदेसमासिवधयोरपि ॥ सनातनःशाश्वते ऽजेपित्तृतिथ्यंतरेहरे ॥ १८ ॥ स्तनयित्नुःपुमान्वारिधरेपिस्तनितेपिच ॥ सरोजिनीतुकमलाकरेपद्मेचयोषिति ॥ १९ ॥ समापन्नं समासे

स्यात्प्राप्तेक्लिष्टेवधेपिच ॥ संबाधनं द्वाःसदने शूलाग्रद्वारपालयोः
२०॥ संयमनी यमपुर्यां संयमने बंधनेव्रतेऽपिस्यात् ॥ सारसनम
प्युरस्त्रेस्त्रीणांमेखलायांच ॥ २१ ॥ सामिधेनी तु धाय्यायां समि
ध्यपिच योषिति ॥ समयोनि स्तु सामोत्थे ब्रह्मकुंजरयोरपि ॥ २२
सुदर्शनो हरेश्चक्रे मेरुजंबुद्रुमेपुमान् ॥ नद्योः शक्रनगरे आर्द्रौष
धिभिदोः स्त्रियाम् ॥ २३ ॥ सुयामुनो वत्सराजे प्रासादेऽमंतरे च्युते
॥ सुकर्मा तु पुमान्योगभेदे स्याद्देवशिल्पिनि ॥ २४ ॥ सुधन्वा
भेदधानुष्के त्रिषु नाविश्वकर्मणि ॥ २५ ॥ सुपर्वा ना शरे वंशे पर्व
धूमसुरेपिच ॥ २५ ॥ सुदामा तु पुमान्वारिधरपर्वतभेदयोः ॥
सौदामन्यप्सरोभेदे तडित्तद्भेदयोः स्त्रियाम् ॥ २६ ॥ हर्षयित्नुः
पुमान्पुत्रे कांचने तु नपुंसकम् ॥ ॥ नपंच ॥ ॥ अथा
तिसर्जनं दाने वधेपिच नपुंसकम् ॥ २७ ॥ अपवर्जनं तु दाने निर्वा-
णत्यागयोरपि ॥ अपसर्जनमाम्नाते परिवर्जनदानयोः ॥ २८ ॥
अग्रजन्मा द्विजे ज्येष्ठभ्रातरि ब्राह्मणि स्मृतः ॥ अथानुवासनं
स्नेहबस्तिधूपनयोरपि ॥ २९ ॥ अभिनिष्ठानोव्यक्षरमात्रेपिस्या
द्विसर्जनीयेच ॥ अंतेवासी शिष्ये स्याच्चांडाले प्रांतगे चापि ॥ ३० ॥
स्यादुपस्पर्शनं स्पर्शे स्नानाचमनयोरपि ॥ उपसंपन्नमुद्दिष्टंनि
हतेच सुसंस्कृते ॥ ३१ ॥ कारंधमी कांस्यकारे धातुवादरतेपिच ॥
कामचारी कामुके स्यात्स्वच्छंदकलविंकयोः ॥ ३२ ॥ किष्कुपर्वा पु
मानिक्षौ वेणौ पोटगलेपिच ॥ कृष्णवर्त्मा पुमानग्नौ दुराचारे विधु
तुदे ॥ ३३ ॥ स्याद्गंधमादनो भृंगे गंधके वानरांतरे ॥ स्त्रीसुरायां न
गे ना स्त्री चिरजीवी द्विकाजयोः ॥ ३४ ॥ तिक्तपर्वा हिलमोचीगु
डूचीयष्टिषु स्त्रियाम् ॥ दंतधावनः खदिरे दंतशुद्धौ नपुंसकम्
३५ ॥ स्यात्धूमकेतनः पुंसि केतुग्रहहुताशयोः ॥ स्यान्नंदिवर्ध
नो गर्भे पक्षांतेतनयेपिच ॥ ३६ ॥ प्रतिपादनं तु दाने प्रतिपत्तौ च

बोधने॥ स्यात्पृष्टहायनो धान्यविशेषेच मतंगजे॥ ३७॥ प्रचला
की मयूरे स्याद्भुजंगेचापिदृश्यते॥ स्यात्पद्मलांछनो लोके श्वरेब्रह्म
णि भास्करे॥ ३८॥ धनदेच स्त्रियांतारा लक्ष्मीवाग्देवतासुच॥ पीतचंद
नमुद्दिष्टं कालीयक हरिद्रयोः॥ ३९॥ पृष्ठशृंगी पुमान्दंशाभीरोशंदेच
कोदरे॥ वरचंदन माख्यातं कालीयेदेवदारुणि॥ ४०॥ वरवर्णिनी
तुलाक्षाहरिद्रारोचनासुच॥ फलिन्यामुत्तमानारी साधीयस्यामपि
स्त्रियां॥ ४१॥ मधुसूदनस्तु पुंसि भ्रमरेवनमालिनि॥ महारजन
मुद्दिष्टं शातकुंभकुसुंभयोः॥ ४२॥ स्यान्मृत्युवंचनः शंभौ श्रीफलद्रो
णकाकयोः॥ वनमाली तु गोविंदे वाराह्यांवनमालिनी॥ ४३॥ वि
षयायी पुमान्राज्ञि विषयि कजनेपिच॥ इंद्रियेकामदेवेच विषयासक्त
पूरुषे॥ ४४॥ विश्वकर्मा सहस्रांशौ मुनिभिद्देवशिल्पिनोः॥ विघ्नका-
रीस्मृतो घोरदर्शनेपि विघातिनि॥ ४५॥ वृषपर्वा पुमान्दैत्यभेदेप्यंध
कसूदने॥ व्योमचारी तु निर्दिष्टो देवतायांविहंगमे॥ ४६॥ शाकुला
दनी स्त्रियां कृष्णभेदीकटुकशाकयोः॥ शालंकायन उद्दिष्टो मुनिभे
देचनंदिनि॥ ४७॥ शिवकीर्तनस्तु पुंसि भृंगरीटेसुरद्विषि॥ श्वेत
वाहन इत्येषस्याधाम्निधनंजये॥ ४८॥ श्वेतधामा पुमानिंदौघन
साराब्धिफेनयोः॥ स्यात्षष्टिहायनो धान्यविशेषेकुंजरेपुमान्॥ ४९
॥ संप्रयोगी कलाकेलौ कामुकेसप्रयोजने॥ हरिचंदनमस्त्री स्या-
त्रिदशानांमहीरुहे॥ ५०॥ नपुंसकंतु गोशीर्षे ज्योत्स्नाकुंकुमयोरपि॥
हरिवाहनस्तु पुंसि शचीपतौविवस्वतोः॥ ५१॥ ॥नषट्
अंतावसायी श्वपचे मुनिभेदेचनापिते॥ कलानुनादी रोलंबेक
लविंकेकपिंजले॥ ५२॥ जायानुजीवी पुंसिस्यान्नटेचबकपक्षिणि
॥ सहस्रवेधि क्लीबंस्याद्रामठेनाम्लवेतसे॥ ५३॥ ॥इतिनां
तवर्गः॥ ॥ पैकम्॥ ॥पो नावातांडपूतेषु पापात
स्त्रिकीर्तितः॥ स्त्रियांतु रक्षणेपानेपूनेपूरितकेचसः॥ १॥ ॥

पद्विः॥ ॥कल्पःशास्त्रेविधौन्यायेसंवर्त्तेब्रह्मणोदिने॥ कपि
र्नासिल्हकेशाखामृगेचमधुसूदने॥२॥ कूपःकूपकमृन्मानेगर्त्तेधुगु
णवृक्षके॥कृपोद्रोणशालकेस्याद्रोणपत्न्यांकृपीस्मृता॥३॥कृपा
दयायांक्षेपस्तुनिंदाविक्षेपलेपने॥गर्वप्रेरणयोश्चाथ खष्पःक्रोधे
बलात्कृतौ॥४॥ गोपोगोपालकेगोष्ठाध्यक्षेपृथ्वीपतावपि॥ग्रामस्या
धिकृतेपुंसिशारिवाव्योषधौस्त्रियां॥५॥ छुपःक्षुपस्पर्शनयोस्त्र
पुसीसकरंगयोः॥ तल्पमट्टेकलत्रेचशयनीयेचनह्योः॥६॥ त्रपा
लज्जाकुलटयोस्तापःसंतापकृच्छ्रयोः॥ तापीनद्यंतरेदर्पःकस्तू
र्यामप्यहंकृतौ॥७॥ नीपःकदंबबंधूकनीलाशोकद्रुमेषुच॥ दीपः
प्रदीपोत्तरीयेस्याल्लूतायांचमस्तके॥८॥ पुष्पंविकाशिकुसुमस्त्री
रजःस्कनपुंसकं॥रूपंस्वभावसौंदर्यनालीकपशुवृंदयोः॥९॥ ग्रंथा
वृत्तौनाटकादावाकारश्लोकयोरपि॥रेपःस्यान्निंदितेक्रूरेरोपोरोप
णबाणयोः॥१०॥लेपःप्रलेपनेजग्धौवपाविवरमेदसोः॥ बाष्पउष्म
णिलोहेथशाष्पंबालतृणेस्मृतं॥११॥पुंसिस्याच्छानिभाहानौशाप-
आक्रोशादिव्ययोः॥शिल्पंस्रुवेक्रियायोग्येस्वापःशयननिद्रयोः॥
१२॥स्पर्शाज्ञतायामज्ञानेसूपोव्यंजनसूदयोः॥ ॥पत्रि॥ ॥
अनूपोमहिषेनाऽंबुप्रायदेशेतुवाच्यवत्॥१३॥अस्त्रपातुजलौ
कायांडाकिन्यांराक्षसेतुना॥आवापोभांडवपनेपरिक्षेपालवाल-
योः॥१४॥आक्षेपोभर्त्सनाऽऽकृष्टिकाव्यालंकृतिषुस्मृतः॥ आक
ल्पःकल्पनेवेशेऽप्युडुपंतुप्लवेस्त्रियाम्॥१५॥ चंद्रेपुंस्युलपोनस्त्री
गुल्मिन्यांनातृणांतरे॥ कच्छपीवल्लकीभेदेदुलौक्षुद्रगदांतरे॥१६॥
पुंसिनिध्यंतरेकूर्मेमल्लबंधांतरेपिच॥ कलापःसंहतौबर्हेकांच्यां
भूषणतूणयोः॥ चंद्रेविदग्धेव्याकरणभेदेपिकथ्यतेबुधैः॥१७॥क
शिपुर्भक्ताच्छादनयोरक्लीबस्याद्स्यक्तयोःपुंसि॥ काश्यपउक्तोमु
निमृगभेदेचकाश्यपीक्ष्मायां॥१८॥कुतपोस्त्रियांदौहित्रेवा

घ्रेछागलकंबले॥कुनोदिनस्याष्टमेंशेनास्त्रेकुणपीपुनः॥विट्सा
रिकायांकुणपःपूतिगंधेशवेपिच॥जिह्वापःश्वानिमार्जारेप्रता
पस्तापतेजसोः॥२०॥पादपःपादपीठादौपादुकायांतुपादपा॥र
क्तपास्याज्जलौकायांडाकिन्यांनातुराक्षसे॥२१॥विटपोनस्त्रियां
स्तंबशाखाविस्तारपल्लवे॥विटाधिपेनाविकल्पःपुंसिभ्रांतौचक
ल्पने॥२२॥ ॥पचतुः॥ ॥अभिरूपोबुधेरम्येःपलापः
प्रेम्ययपङ्कवे॥अवलेपस्तुगर्वेस्याल्लेपनेभूषणेपिच॥२३॥उप
तापस्त्वरायांस्यादुत्तापगदयोरपि॥जलकूपीकूपगर्तेपुष्करिण्यां
चयोषिति॥नागपुष्पस्तुपुन्नागनागकेसरचंपके॥परिवाप
स्तुपर्युप्तोजलस्थानेपरिच्छदे॥२५॥परितापस्तुपुंसिस्याद्दुःखेच
नरकांतरे॥परिकल्पोभयेकंपेप्राप्तरूपोज्ञरम्ययोः॥२६॥पिंड
पुष्पमशोकेचजवायांचकुशेशये॥बहुरूपःशिवेविष्णौधूनके-
सरलेस्मरे॥२७॥मेघपुष्पंतुपिंडाभ्रांबुनादेयहरेर्हये॥विप्रला
पोविरोधोक्तावपार्थवचनेपिच॥२८॥बीजपुष्पंमरुबकेनथाम
दनकेपिच॥वृकधूपस्तुसरलद्रवकृत्रिमधूपयोः॥२९॥वृषाक
पिःपुमान्कृष्णेशंकरेजातवेदसि॥हेमपुष्पमशोकेचजवापुष्पेनपुं
सकं॥३०॥ ॥पपंच॥ ॥भवेच्चामरपुष्पंतुपूगेकाशाम्र
केतके॥३१॥ ॥इतिपांतवर्गः॥ ॥१३०२॥ ॥
फेकं॥ ॥फोयक्षसाधनेस्फानेझंझावातेपिपुंस्ययं॥फंरुक्षो
क्तौफूत्कृतौचतथानिःफलभाषणे॥१॥ ॥फद्विः॥ ॥गुंफ
स्तुगुंफनेबाहोरलंकारेचकीर्त्यते॥रेफोरवर्णेपुंसिस्यात्कुत्सितेपुन
रन्यवत्॥२॥शफंमूलेतरूणांस्यात्क्वचादीनांखुरेपिच॥शिफाज
टायांसरितिमांसिकायांचमातरि॥३॥ ॥इतिफांतवर्गः॥ ॥
१३०५॥ ॥बेकं॥ ॥बःपुमान्वरुणेसिंधौभगेनोयेगतेतुवा
गंधनेतंतुसंताने पुंस्येववपनेस्मृतः॥१॥ ॥बद्विः॥ ॥कंबुः

शंखेस्त्रियांपुंसिशंबूकेवलयेगजे॥ कंबिरंशेचवंशस्यखजाका-
यांस्त्रियामपि॥२॥ क्लीबंस्यात्संडकेनस्त्रीवाच्यलिंगस्त्वविक्रमे॥
खर्वंसंख्यांतरेक्लीबंनीचेवामनकेत्रिषु॥३॥ गर्वोऽभिमानेवलेपे
जंबुःस्यात्स्वादपांतरे॥तथास्कमेरुसरितिद्वीपभेदेपिचस्त्रियाम्
॥४॥ डिंबोभयध्वनावंडेफुप्फुसप्लीहवेप्लवे॥ दर्वीस्त्रियांख-
जाकायांफणायामुरगस्यच॥५॥ पूर्वंतुपूर्वजेपि स्यात्पूर्वःप्राग
ग्रयोस्त्रिषु॥ लंबापद्मालयागौर्योस्तिक्ततुंब्यामपिस्त्रियाम्॥६
बिंबंतुप्रतिबिंबेपिमंडलेपुंनपुंसकं॥बिंबिकायाःफलेक्लीबंकक
लासेपुनःपुमान्॥७॥शंबःस्यान्मुसलग्रंथलोहमंडलकेपवौ॥
शुभान्वितेत्रिषुस्तंबोप्रकांडद्रुमगुच्छयोः॥८॥ ॥बत्रिः॥
कदंबंनिकुरंबेस्यान्नीपसिद्धार्थयोःपुमान्॥ कलंबीशाकभेदे
स्यात्कडंबशरयोःपुमान्॥९॥कादंबःस्यात्पुमान्पक्षिविशेषे-
सायकेपिच॥ गजाह्वाकिरिपिप्पल्यांगजाह्वंहस्तिनापुरे॥१०॥
गंधर्वःपशुभेदेस्यात्पुंस्कोकिलतुरंगयोः॥अंतराभवसत्वेचगाय
नेखेचरेपिच॥११॥गोडुंबःशीर्णवृंतेचगवादन्यांतुयोषिति॥ द्वि
जिह्वस्तुखलेसर्पेनितंबःस्कंधरोधसोः॥१२॥स्त्रियाःपश्चात्क
टिनदेकटकेकटिमात्रके॥प्रलंबोदैत्यभेदेस्यात्प्रपुष्पेपिपयोधरे॥
१३॥तालांकुरेपिशालायांहारभेदेप्रलंबने॥भूजंबूरपिगोधूमेविकं
कतफलेस्त्रियाम्॥१४॥ हेरंबोविघ्नराजेस्याँमहिषेशौर्यगर्विते॥
बचतुः॥ ॥राजजंबूस्तुजंबूभित्पिंडखर्जूरयोस्त्रियाम्॥
१५॥ललज्जिह्वोऽन्यवह्निस्त्वेक्रमेलकश्वनोःपुमान्॥ शतप
र्वाचदूर्वायांवचाभार्गवयोषितोः॥१६॥ ॥बपंच॥ ॥
धूलीकदंबोनीपेस्यात्तिनिशेवरुणद्रुमे॥ शृंगालजंबूर्गोडिंबे
तथाघोषाफलेस्त्रियाम्॥१७॥ ॥इतिबांतवर्गः॥
१२२९॥ ॥भैकं॥ ॥भंनक्षत्रेगभ स्तौस्त्रीपुंसिस्याद्भ

वेदंतेजंबीरभक्षणयोः॥जृंभाविकाशजृंभणयोःस्त्रीषुडिंभोपि
बालिशेबाले॥४॥दंभस्तुकैतवेकल्के दृग्भूःस्त्रीसर्पवज्रयोः॥ना
भिर्मुख्यनृपेचक्रमध्यक्षत्रिययोःपुमान्॥५॥द्वयोःप्राणिप्रतीकेस्या
त्स्त्रियांकस्तूरिकामदे॥निभस्तुकथितोव्याजेपुल्लिंगःसदृशोत्रिषु
॥६॥रंभाकदल्यप्सरसोर्नावेणौवारणांतरे॥विष्कंभःप्रभौसर्वग
तेशंकरब्रह्मणोस्तना॥७॥शंभुःपुंसिमहादेवेपरमेष्ठिनिचार्हति
शुभो योगेशुभंक्षेमेवाच्यवत्क्षेमशालिनि॥८॥स्वसंचारि
पुरेस्त्रीतुशोभाकांतीछयोर्मता॥सभासामाजिकेगोष्ठ्यांद्यूत
मंदिरयोरपि॥९॥स्वयंभूर्नाब्रह्मणिहरौस्तंभःस्थूणाजडत्वयोः
॥ ॥भत्रिः॥ ॥आरंभस्तुत्वरायांस्याद्वधेवधदर्पयोः
१०॥आत्मभूर्नाविधौकामेप्युषभस्त्वौषधांतरे॥स्वरभिद्वृष
योःकर्णरंध्रकुंभीरपुच्छयोः॥११॥उत्तरस्थः स्मृतश्रेष्ठस्त्रीनराक
रयोषिति॥स्रूकशिंब्यांशिरालायांविधवायांक्वचिन्मता॥१२॥
ककुप्स्त्रियांप्रवेणीदिक्शोभासुचंपकस्रजि॥ककुभोराग-
भेदेपिवीणांगेऽर्जुनपादपे॥१३ करभीवृक्षभेदेपिज्योतिष्म
त्यामपिस्त्रियाम्॥करभोमणिबंधादिकनिष्ठांतोष्ट्रतत्सुते॥१४
कुसुंभंहेमनिमहारजकेनाकमंडलौ॥गर्दभंश्वेतकुमुदेगर्दभोगं
धभिद्यपि॥१५॥रासभेगर्दभीक्षुद्रजंतुरोगविशेषयोः॥दुर्ल
भस्त्रिषुदुष्प्रापेकच्छुरेदुंदुभिःपुमान्॥१६॥वरुणेदैत्यभेदेर्वा-
क्षन्यक्षविंदुत्रिकद्वये॥निकुंभःकुंभकर्णस्यतनयेदंतिकौष-
धौ॥१७॥वल्लभोदयितेऽध्यक्षेसल्लक्षणतुरंगमे॥वृषभाभूः

स्त्रीनशोथघ्न्यांभूलतापूरयोः पुमान्॥१८॥ विष्कंभो योगभेदे स्याद्वि
स्तारप्रतिबिंबयोः॥ रूपकांगप्रभेदेच बंधभेदेच योगिनां॥१९॥ विश्रंभः
केलिकलहे विश्वासे प्रणयेऽपि च॥ विष्टंभः प्रतिबंधे स्यात्प्रभेदे चाम
यस्य च॥२०॥ वृषभः श्रेष्ठ वृषयो वैदर्भीरीतिभिद्यपि॥ वैदर्भंग
र्य वैकृत्ये शरभस्तु पशोर्भिदि॥२१॥ करभे वानरभिदि सनाभि
र्ज्ञातितुल्ययोः॥ सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति॥२२॥
चंपके च वसंते च तथा जातीफले पुमान्॥ स्वर्णगंधोत्पले क्लीबं स्रग
धिकांतयोस्त्रिषु॥२३॥ विख्याते सन्निवेधीरे चैत्रे पि च पुमानयं॥ ॥
भवतुः॥ ॥अनुष्टुप्स्यात्सरस्वत्यां छंदोभेदे च योषिति॥२४
॥ अवष्टंभः स्वर्णे च स्तंभप्रारंभयोरपि॥ शातकुंभं स्वर्णे स्यान्शा
तकुंभोश्वमारके॥२५॥ ॥इति भांतवर्गः॥ ॥ मैकम्
॥ ॥ मो यमे समयेपि स्याद्विषे च मधुसूदने॥ मा स्त्रीप द्मालयायां
स्यात्पुंल्लिगश्चंद्रशेखरे॥१॥ ॥मद्विः॥ ॥आमो रुक्ङ्विदोः
पुंसि स्यादपक्वेऽन्यलिंगकः॥ उमाऽतसीहैमवती हरिद्राकीर्तिकांति
षु॥२॥ ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभंगयोः॥ वस्त्रसंकोच
रेखायां वेदनापीडयोरपि॥३॥ क्रमश्चानुक्रमे शक्तौ कंपे चाक्रमणे
पि च॥ क्षमा भूमौ तितिक्षायां स्त्रियां युक्ते नपुंसकं॥४॥ वाच्यवच्छक्त
हितयोः कामः स्मरेच्छयोः पुमान्॥ रेतस्यपि निकामे च काम्येपि स्या
न्नपुंसकं॥५॥ कामिर्नाकामुकेरत्यां स्त्री किंक्षेपवितर्कयोः॥ निंदा
यां च परिप्रश्ने वाच्यलिंगमुदाहृतं॥६॥ क्रिमिर्ना कृमिवत् कीटे ला
क्षायां क्रमिलेखरे॥ किर्मीपलाशे शाखायां हेमपुत्र्यां च योषिति॥७
॥ क्षुमाऽतसीनीलिकयोः क्षेमो स्त्री लुब्धरक्षणे॥ चंडायां नाशुभे
न स्त्री कात्यायन्यां तु योषिति॥८॥ क्षौमं मट्टे दुकूले ऽस्त्री क्षोमं वल्क
लजांशके॥ शशाजेऽतसिजे स्वर्मे पौरुषे कोषजांशुके॥९॥ गमोना ऽ
क्षविवर्ते स्यादपर्यालोचनेऽध्वनि॥ ग्रामः स्वरे संवसथे ग्रीष्मऽउष्मर्तु

मंदेक्लीबंनगरपादपे॥१३॥ तोक्मंकर्णमलेपुंसिहरितेचहयेस्वरे
दमस्तुदमथेदंडेकर्दमेदमनेपुमान्॥१४॥ दस्मस्तुयजमानेस्या
दपिचौरेहुताशने॥ द्रुमोमहीरुहेपारिजातेकिंपुरुषेस्वरे॥१५॥
धर्मोस्त्रीपुण्यआचारेस्वभावोपमयोःक्रतौ॥ अहिंसोपनिषन्याये
नाधनुर्यमसोमपे॥१६॥ ध्यामंदमनकेगंधतृणेप्यश्यामलेत्रिषु॥
नेमिर्नातिनिशेकूपत्रिकाचक्रांतयोःस्त्रियां॥१७॥ नेमःकालेव
धौखंडेप्राकारेकैतवेपिच॥ पद्मोस्त्रीपद्मकेव्यूहनिधिसंख्यांतरेषु
जे॥ नागेस्त्रीपंजिकाश्रीचारटीपन्नगेपुच॥ ब्रह्मीतुपंजिकायां
स्याच्छाकमत्स्यप्रभेदयोः॥१९॥ ब्राह्मीतुभारतीसोमवल्लरीब्र
ह्मशक्तिषु॥ भ्रमोंबुनिर्गमेभ्रांतौकुंदभ्रमणयोरपि॥२०॥ भामः
क्रोधेरवौदीप्तौभीष्मोगांगेयभीमयोः॥ भीमोम्लवेतसेरौद्रे
भीमध्यमपांडवे॥२१॥ भूमिर्वसुंधरायांस्यात्स्थानमात्रेपिचस्त्रि
यां॥ भौमःकुजेम्बरकेपुंसिभूमिभवेत्रिषु॥२२॥ यमोन्यलिंगोय
मजेनाकाकेशमनेशनौ॥ शरीरसाधनापेक्षनित्यकर्मणिसंयमे॥२३
यामस्तुपुंसिप्रहरेसंयमेपिप्रकीर्तितः॥ यामिःकुलस्त्रीस्वस्रोःस्त्री
युग्मोधनुषिसंयुगे॥२४॥ रश्मिःपुमान्दीधितौचपक्ष्मप्रग्रहयोर
पि॥ रमालक्ष्म्यांरमःकांतेरक्ताशोकद्रुमेस्मरे॥२५॥ रामायोषा
हिंगुलयोःक्लीबंवास्तुककुष्ठयोः॥ नारायणेचवरुणेरेणुकेयेहलायुधे
॥२६॥ हयेचपशुभेदेचत्रिषुचारौसितेसिते॥ रुमास्त्रीवदरेषु
विशेषलवणाकरे॥२७॥ रुक्मंचकांचनेलोहेलक्ष्मीःसंपत्तिशो-
भयोः॥ रुक्मोऽथपधेचपद्मायांहरिद्रानाम्नोषधेपिच॥२८॥ स्त्रीफलि-

न्योवमिर्वर्तीस्त्रियांपुंसिहुताशने॥ वामंधनेहरेपुंसिकामदेवेपयोध
रे॥२९॥वल्गुप्रतीपसव्येषु त्रिषुनार्यांस्त्रियामथ॥ वामीशृगालीव
डवारासभीकरभीषुच॥३०॥शमीसक्तुफलायांचशिंबिकायांचवा
गुजौ॥ श्यामोवटेप्रयागस्थवारिदेवृद्धदारके॥३१॥पिकेच कृष्णह
रितोःपुंसिस्यात्तद्वतित्रिषु॥मरिचेसिंधुलवणेकृष्णेस्त्रीशारिवौष-
धौ॥३२॥अप्रसूतांगनायांचप्रियंगावपिनागुजौ॥ यमुनायांत्रि
यामायांकृष्णात्रिवृतिकौषधौ॥३३॥ नीलिकायामथश्रामोश्रा
सेमंडपकालयोः॥श्रुष्मंतेजसिसूर्येनासुषमासंवत्सरेस्त्रियाम्॥
३४॥सर्वसाधुसमानेषुसमंस्यादभिधेयवत्॥सीमाघाटस्थिते
क्षेत्रेषंडकोषेपिचस्त्रियाम्॥३५॥सूक्ष्मंस्यात्कैतवेऽध्यात्मेपुंसि
वोत्रिषुचाल्पके॥सूक्ष्मंस्त्रीरेचनफलेसिसोमस्तुहिमदीधितौ॥३६
वानरेचकुबेरेचपितृदेवसमीरणे॥वसुप्रभेदेकर्पूरेनीरेसोमल
तौषधौ॥३७॥हिमंतुषारमलयोद्भवयोःस्यान्नपुंसकं॥शीतले
वाच्यलिंगोथहोमोग्निर्नापावकेघृते ॥३८॥ ॥मत्रिः॥ ॥
अधमःस्याद्गर्हितेहीनेप्यागमःशास्त्रआगमे॥आश्रमोब्र-
ह्मचर्यादौवानप्रस्थेवनेमठे॥३९॥अस्त्रियामुत्तमादुग्धिकायां
त्रिषुचभद्रके॥उद्दामोबंधरहितेस्वतंत्रेचप्रचेतसि॥४०॥कल
मःपुंसिलेखन्यांशालौपाटच्चरेपिच॥कुसुमंस्त्रीरजोनेत्ररोगयोः
फलपुष्पयोः॥४१॥कृत्रिमंलवणभेदेनासिल्हकेरचितेत्रिषु॥
गोलोमीश्वेतदूर्वायांस्याद्वचाभूतकेशयोः॥४२॥गोधूमोना
गरंगेस्यादोषधिव्रीहिभेदयोः॥गौतमोनामुनौबुद्धेरोचनीदुर्ग
योःस्त्रियाम्॥४३॥ तलिमंकुट्टिमेतल्पेचंद्रहासेवितानके॥
दाडिमस्तुत्रिलिंगस्याद्देलायांकरकेत्रिषु॥४४॥ निष्क्रमोबुद्धि
संपन्नौनिर्गमेदुष्कुलेपिच॥ निगमोवाणिजेपुर्यांकटेवेदेवणिक्
पथे॥४५॥ नियमोमंत्रणायांचप्रतिज्ञानिश्चयेव्रते॥नैगमःस्या

प्रक्रमःक्रमेवसरेप्रथमोपक्रमेन्यवत् ॥४९॥ तुलामध्यमध्य
देशेप्यवलग्नेतुनस्त्रियाम् ॥ स्त्रियांहृस्वरजौनार्योकर्णिकांगुलि
भेदयोः ॥५०॥ अपत्यच्छंदसितथाललामंलांछनेध्वजे ॥ शृंगेप्रधा
नेभूषायांरम्येवालधिपुंड्रयोः ॥५१॥ तुरंगेचप्रभावेचव्यायामःपौ
रुषेश्रमे ॥ विषमेदुर्गसंचारेविभ्रमोभ्रांतिहावयोः ॥५२॥ विद्रु
मोरत्नवृक्षेपिप्रवालेपिपुमानयम् ॥ विलोमस्तुप्रतीपेस्या-
द्भुजंगेवरुणेशुनि ॥५३॥ आमलक्यांविलोमीन्तुविलोमंचारघ
ट्टने ॥ विक्रमस्तुपुमान्क्रांतिमात्रेस्याच्छक्तिसंपदि ॥५४॥
संक्रमः क्रमणेपुंसिनस्त्रीस्याद्दुर्गसंचरे ॥ संभ्रमःसाध्वसे
पिस्यात्संवेगादरयोरपि ॥५५॥ सत्तमःस्यात्पूज्यतमेसाधीयस्यु
त्तमेत्रिषु ॥ सरमाकुक्कुरीदेवशुन्योःस्याद्राक्षसीभिदि ॥५६॥ सु
षमानंतशोभायांस्त्रीचारौचसमेत्रिषु ॥ सुषीमःशीतलेचारौत्रिषु
नापन्नगांतरे ॥५७॥ ॥मचतुः॥ ॥भवेदनुपमास्त्रभ
नीकिन्यांस्त्रीत्रिषूत्तमे ॥ अभ्यागमोविरोधाभिघाताभ्युक्रमनां
तिके ॥५८॥ उपक्रमस्तूपधायांज्ञात्वारंभविचक्रमे ॥ चिकित्सा-
यामुपगमःस्वीकारेनिकसर्पणे ॥५९॥ जलगुल्मोजलावर्तेकच्छ
पेजलचत्वरे ॥ दंडायामस्तुकीनाशेदिवसेकुंभसंभवे ॥६०॥ पूर्व
गमस्तुमंडूकेतथाशाखामृगेपिच ॥ पराक्रमोधिक्रमेस्यात्सामर्थ्यो
द्योगयोरपि ॥ महापद्मःपुमान्नागनिधिसंख्यांतरेषुच ॥ याल-
यामोन्यवज्जीर्णपरिभुक्तोज्झितेषुच ॥६१॥ सार्वभौमस्तुदिङ्
नागेसर्वपृथ्वीपतावपि ॥ ॥मपंच॥ ॥अभ्युप

गमस्तुपुंसिस्त्रीकारेंतिकसमागमेच॥८३॥नक्षत्रनेमिरुक्कारेव
स्यांनाक्षवेचंद्रे॥ ॥इतिमांतवर्गः॥ ॥येकम्
योनावायोपमनेयायात्रा स्निधूमितत्यागेषु॥वारणायोगस
मज्ञायानेषुपुमांस्तुगंतरिस्यातः॥१॥ज्यामातरिवसुधायां-
मौर्व्यांपुक्लीबमङ्क्षिगमनेच॥नाज्वालनेद्यौस्त्रिदशालयत्रिदश
वर्त्मनोर्योषिति॥२॥अर्थ्यंशिलाजतुन्यर्थ्योबुधेन्याय्येचवाच्य
वत्॥अंत्यस्तुपुंसिमुस्तायामंतोद्भूतेधमेत्रिषु॥३॥अर्घ्यंमर्घ
स्ययोग्येस्यादर्घार्थेपिचवाच्यवत्॥अन्योसदृशेतरयोरर्य्यःस्व
स्वामिवैश्ययोः॥४।आस्यंमुखेचतन्मध्येतद्वेचस्त्रियांस्थितौ॥
इज्यादानेध्वरेर्चायांसंगमेस्त्रीगुरौत्रिषु॥५॥इभ्याकरेणुश
ल्लक्योःस्त्रियामाढ्येचवाच्यवत्॥कश्यंत्रिषुकशार्हस्यान्क्लीवंम
द्यान्वमद्ययोः॥६॥कन्याकुमारिकानार्योरोषधीराशिभेदयोः॥
क्षयोरोगांतरेवेश्मकल्यंतापचयेषुच॥७॥कल्यंप्रभातेक्लीवं
स्यात्कल्योवाकृश्रुतिवर्जिते॥सज्ज्योनीरोगदक्षेषुकल्याणवचने
पिच॥८॥उपायवचनेपिस्यात्स्त्रियुमधेतुयोषिति॥कक्ष्यारह
निकायांस्यात्कांच्यांमध्येभवंधने॥९॥हर्म्यादीनांप्रकोष्ठेचका-
र्येहृतोषयोजने॥काव्यंग्रंथेपुमान्शुक्रे॥व्यासस्यात्सूतनाधि
योः॥१०॥कांस्यंवाद्यांतरेपानपात्रेस्यात्तैजसांतरे॥कायःक
दैवतेमूर्तौसंघेलक्ष्यस्वभावयोः॥११॥मनुष्यतीर्थेकार्यंस्यात्
क्रियायांपायनेष्ट्ययोः॥आरंभेनिष्कृतौपूजासंप्रधारणकर्मसु॥
१२॥शिक्षाचिकित्साकरणेकुड्यंभित्तौविलेपने॥कुल्यंस्यात्
कीकसेप्युष्ट्रद्रोणीशूर्पामिषेषुच॥कुल्यापयःप्रणाल्यांचनद्यां
वीजंतिकोषयोः॥कुलोद्भवेकुलहितेत्रिषुमान्येपुनःपुमान्॥१४॥
कृत्याक्रियादेवतयोस्त्रिषुविद्विष्टकार्ययोः॥गव्यःस्यात्सरूप
गव्यापेतीर्थेपुनर्गव्या॥१५॥गव्यंनपुंसकंज्यायांरागद्रव्ये

प्यथस्त्रियां॥ गोसमूहे त्रिलिंगं तु गोदुग्धादौ च गोहिते॥१६॥ ग्राम्यं स्त्री-
करणे क्लीबे ऽश्लीलप्राकृतयोस्त्रिषु॥ गुह्यं रहस्युपस्थे च गुह्यः कमठ
दंभयोः॥१७॥ गृह्यं गुदे ग्रंथभेदे क्लीबं शाखापुरे स्त्रियां॥ गृह्यासक्तमृ
गादीनां त्रिषु चास्वैरिपक्षयोः॥१८॥ गेयं तु गीते गेयः स्याद्गातव्ये गाय
ने त्रिषु॥ गोप्यो दासीसुते पुंसि रक्षणीयेऽभिधेयवत्॥१९॥ चव्यं
तु चविके क्लीबं चव्यायामपि योषिति॥ चयः समूहे प्राकारमूलबंधे समा
हृतौ॥२०॥ चित्यं मृतकचैत्ये स्याच्चित्या मृतचितौ स्त्रियां॥ चैत्यमा
यतने बुद्धवंद्ये चोद्देश्यपादपे॥२१॥ चोद्यं स्यादद्भुते प्रश्ने चोदनार्हे तु वा
च्यवत्॥ छाया स्यादातपाभावे प्रतिबिंबार्कयोषितोः॥२२॥ पालनोत्कोच
योः कांतिसच्छोभापंक्तिषु स्त्रियाम्॥ जया जयंती तिथिभित्पथ्योमानल
स्त्रीषु च॥२३॥ अग्निमंथे नाजयंते विजये च युधिष्ठिरे॥ जन्यं हृदे परीवा
दे संग्रामे च नपुंसकं॥२४॥ जन्या मातृवयस्यायां जन्यः स्याज्जनके
पुमान्॥ त्रिषु स्याद्यजनिश्रोऽश्वनवोढाज्ञातिभृत्ययोः॥२५॥ वरस्निग्धेऽ
थ जन्युः स्यात्पुंसि प्राण्यग्निधातृषु॥ त्रयी त्रिवेद्यां त्रितये ना तार्क्ष्यो
ऽश्वसर्पयोः॥२६॥ गरुडाग्रजे स्फवर्णे च पुंसि क्लीबे रसांजने॥ तिष्यो
नक्षत्रभेदे स्यात्कलौ धात्र्यां च योषिति॥२७॥ द्रव्यं स्यात्पित्तले वित्ते पृ
थ्व्यादौ च विलेपने॥ क्लीबं च भेषजे भव्ये द्रुविकारे च वाच्यवत्॥२८॥ द
स्युश्चौरे पुंसि रिपौ दायस्सोल्लुंठभाषणे॥ विभक्तव्यपि तु द्रव्ये तथाह
रणदानयोः॥२९॥ दिव्यं लवंगे धात्र्यां स्त्री वल्गौ दिवि भवे त्रिषु॥ दू-
ष्यं त्रिषु दूषणीये क्लीबं वस्त्रे च तद्गृहे॥३०॥ दूत्यं दूतस्वभावे च भावे क
र्मण्यपि स्मृतं॥ दैत्यो ऽसुरे सुरायां तु दैत्या चंडौषधावपि॥३१॥ धन्या
धात्र्यामलक्योः स्याद्धन्यं पुण्यवति त्रिषु॥ धान्यं व्रीहिषु धन्याके धि
ष्ण्यं स्यानाग्निसद्मसु॥३२॥ शक्तावृक्षेप्यथ नयो नीतिद्यूतविशेषयोः॥
नाट्यं नौर्यत्रिके लास्ये नित्यं स्यात्संतते ऽपि च॥३३॥ शाश्वते त्रिषु प-
थ्या स्त्री हरीतक्यां हिते त्रिषु॥ पद्यं श्लोके पुमान् शूद्रे पद्या वर्त्मनि-

कीर्तिता॥ ३४॥ पाक्यं विडाख्यलवणे यवक्षारे पुनः पुमान्॥ प्रायो-
मरणानशने मृत्यौ बाहुल्ये तुल्ययोः॥ ३५॥ प्रियो हृद्येऽन्यवत्पुंसि वृ
द्धिनामौषधौ धवे॥ पीयुः कालेरवौ घूके ना पुण्यं शोभने त्रिषु॥ ३६
॥ क्लीबं धर्मे च सुकृते पुष्यः कलियुगे स्मृतः॥ नक्षत्रमासयोर्भेदे पू
ज्यः श्वशुरवंद्ययोः॥ ३७॥ पेयं पातव्यपयसोः पेया श्राणाछमंडयोः
॥ वंध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजस्त्रियां॥ ३८॥ वर्योपति
वरायां स्त्री वरेण्ये त्रिषु ना स्मरे॥ बल्यं प्रधाने धातौ स्यात्क्लीबं बलक
रे त्रिषु॥ ३९॥ वीर्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि॥ भयं प्रतिभये
घोरे प्रसूने कुब्जकस्य च॥ ४०॥ भव्यं शुभेऽन्वसत्ये च योग्ये भाविनि-
तु त्रिषु॥ कर्मरंगतरौ पुंसि स्त्रियां करिकणामयोः॥ ४१॥ क्लीबमस्थनि
भाग्यं तु स्याच्छुभाशुभकर्मणोः॥ भृत्यो दासे भृतौ भृत्या मयुर्ना
किन्नरे मृगे॥ ४२॥ मयुः शिल्पिनि दैत्यानां करभेऽश्वतरेऽपि च॥ मध्यं
विलग्ने ना स्त्री स्यान्न्याय्येऽन्तरेऽधमेऽपि च॥ ४३॥ मत्स्यो मीनेऽथ पुंभूम्नि
देशे मन्युः पुमान् क्रुधि॥ दैन्ये शोके च यज्ञे च माल्यं कुसुमतस्रजोः
॥ ४४॥ माया स्याच्छांबरी बुद्ध्योर्मायः पीतांबरे स्मरे॥ मूल्यं स्याद्वेत
ने प्रश्ने मृत्युर्ना मरणे यमे॥ ४५॥ मेध्यं त्रिषु शुचौ रक्तवचारोचनयोः-
स्त्रियां॥ यत्युः पुमानश्वमेधतुरगे च तुरंगमे॥ ४६॥ याप्यस्तु यापनी
ये स्यान्निंदितेऽप्यभिधेयवत्॥ याम्याऽपाच्यां भरण्यां च पुंस्यगस्त्ये च
चंदने॥ ४७॥ योग्यः प्रवीणयोगार्होपायशक्तेषु वाच्यवत्॥ क्लीबमृद्ध्यो
षधौ पुष्ये ना स्त्र्यभ्यासार्कयोषितोः॥ ४८॥ रम्या रात्रौ चंपके ना मनोज्ञे
त्वभिधेयवत्॥ नपुंसकं पटोलस्य मूले सूरिभिरिष्यते॥ ४९॥ रथ्या
रथौघविशिखावर्त्मनोस्तु च योषिति॥ रथवोढरि पुंल्लिंगो रूप्यः स्या
त्सुंदरे त्रिषु॥ ५०॥ आहतस्वर्णरजते रजते च नपुंसकं॥ लयो वि-
नाशे संश्लेषे साम्ये तौर्यत्रिकस्य च॥ ५१॥ लक्ष्यं स्यादपदेशेऽपि शर
व्येऽपि नपुंसकं॥ लभ्यं युक्ते च लब्धव्ये लास्यं तौर्यत्रिके मतम्॥ ५२

षिति॥ ५५॥ शल्यंतुनस्त्रियांशंकौ क्लीबंक्ष्वेडेषुतोमरे॥ मदनद्रु-
म्वाविधोर्ना शयः शय्याहिपाणिषु॥ ५६॥ शय्यास्याच्छयनीयेच
गुंफनेपिचयोषिति॥ शून्यंस्यान्निर्जनेवाच्यलिंगंमत्स्यातुयोषिति
॥५७॥शौर्यमारभटीशक्त्योः सह्यः शैलांतरेपुमान्॥ सोढव्ये वाच्य
लिंगः स्यादारोग्येतुनपुंसकं॥ ५८॥संख्यंसमितिसंख्यास्यादेक-
त्र्यादिविचारयोः॥ संध्यापित्र्प्रसूनद्यंतरयोर्युगसंधिषु॥ ५९॥ सत्यं
कृतेचशपथेतथ्येत्रिषुतुतद्वति॥ सव्यंवामेप्रतीपेचस्मयोनाऽद्भुत
गर्वयोः॥ ६०॥ सायः कांडेदिनांतेच साध्योयोगांतरेस्मरे॥ गणदेव
विशेषेचसाधनीयेतुवाच्यवत्॥ ६१॥ सूर्योर्कपर्णेतपनेस्त्रीतद्भा
र्यौषधीभिदोः॥ स्थेयोविवादपक्षस्यनिर्णेतरिपुरोहिते॥ ६२॥ सै
व्यं क्लीबमुशीरेस्यात्सेवार्हेपुनरन्यवत्॥ सैन्यंक्लीबंबलेसेनासम
वेतेतुवाच्यवत्॥ ६३॥ सौम्योऽज्ञेनात्रिष्वनुग्रेमनोज्ञेसोमदैवते॥
हार्योविभीतकतरौहर्तव्येपुनरन्यवत्॥ ६४॥जरणेऽप्यत्रिषुहृद्यं
त्वज्जरद्दितत्प्रिये॥ वशाकृद्भदमंत्रेनाहृद्गिनामौषधौस्त्रियाम्॥
॥६५ यत्रि॥ ॥अनयस्त्वविपद्देवाशुभयोर्व्यसनेषुच॥अत्य
योऽतिक्रमेदंडेविनाशेदोषकृच्छ्रयोः॥ ६६॥ अश्वीयमश्वसंघाते
क्लीबमश्वहितेन्यवत्॥ अधृष्यातटिनीभेदेप्रगल्भेवाच्यलिंगकं
॥ ६७॥ अवध्यमवधार्हेस्यादनर्थकवचस्यपि॥ अव्ययोऽस्त्री
शब्दभेदेनाविष्णौनिर्व्ययेत्रिषु॥ ६८॥ अहल्यात्वप्सरोभेदेभा
र्यायांगौतमस्यच॥ अहार्यः पर्वतेनास्यादहर्तव्येतुवाच्यवत्॥ ६९
॥अभिख्यात्वभिधानेस्याच्छोभायांचयशस्यपि॥ अभयास्त्री

द्रशीनक्यामुशीरेचनपुंसकं॥७०॥ निर्भयेवाच्यलिंगःस्यादपत्यंपुत्र योर्मतं॥ अगस्त्यः कुंभयोनौस्याद्दुंगसेननरावपि॥७१॥ आशयः स्यादभिप्रायेपनसाधारयोरपि॥ स्यादातिथ्यमतिथ्यर्थेऽभिलिंग मतिथौपुमान्॥७२॥ आत्रेयीपुष्पवत्यांस्यान्नदीभेदेचनामुनौ॥ आदित्योभास्करेदेवेप्याम्नायोनिगमेपिच॥७३॥ उपदेशेपींद्रि यंतुहृषीकेरेतसिस्मृतं॥ उदयस्तुपुमान्पूर्वपर्वतेचसमुन्नतौ॥ ७४॥ उपायः सामभेदादौतथैवोपगतौपुमान्॥ उर्णायुर्नाक्षणभं गेमेषकंबलमेषयोः॥७५॥ औचित्यमुचितत्वेस्यात्सत्येपिचनपुं सकं॥ कषायोरसभेदेचनिर्यासेचविलेपने॥७६॥ अंगरागेचन स्त्रीस्यात्सुरभौलोहितेत्रिषु॥ कालेयोदैत्यभेदेस्यात्कालखंडेन पुंसकम्॥७७॥ क्षिपण्युस्तुपुमान्देहस्फरणेवाच्यलिंगकः॥ कुला यस्तुपुमान्स्थानमात्रेस्यात्पक्षिवासके॥७८॥ क्षेत्रियंक्षेत्रजतृणेप रदेहचिकित्सयोः॥ परदाररतासाध्यरोगयोःक्षेत्रियःपुमान्॥७९॥ कौकृत्यमनुतापेस्यादयुक्तकरणेपिच॥ गांगेयःस्यात्पुमान्भीष्मेक्ली बेस्वर्णकशेरुणोः॥८०॥ चक्षुष्यः केतकेपुंडरीकसंज्ञकपादपे॥ कु लत्थिकासुभगयोःस्त्रियामक्षिहितेन्यवत्॥८१॥ चांपेयश्चंपकेस्व र्णेकिंजल्केनागकेसरे॥ जघन्यंहेमलेक्लीबंचरमेगर्हितेऽन्यवत्॥ ८२॥ जटायुः पुंसिसंपाते: कनीयसिचगुग्गुलौ॥ जरायुरपितस क्षिराजेगर्भाशयेपुमान्॥८३॥ तपस्याव्रतचर्यायांतपस्यःफाल्गु नेपुमान्॥ द्वितीयातिथिभिसत्स्योःपूरणेतुभवेत्त्रिषु॥८४॥ देवयु र्वाच्यलिंगस्तुधार्मिकेलोकयात्रिके॥ नादेयीनागरंगेस्याज्जपाया मंबुवेतसे॥८५॥ भूमिजंब्वांजवायांचव्यंगुष्ठेपिचयोषिति॥ निका यस्तुपुमांल्लक्ष्येसधर्मिप्राणिसंहतौ॥८६॥ समुच्चयेसंहतानांनिल येपरमात्मनि॥ नेपथ्यःस्यादलंकारेरंगभूम्यांनपुंसकं॥८७॥ प्र- णयः प्रसवेप्रेम्णियाञ्ज्ञाविश्रंभयोरपि॥ निर्वाणेप्यथपर्यायःप्रका

रेऽश्वमरे क्रमे॥८८॥प्रलयो मृत्युकल्पान्तमूर्छोपायेषु पुंस्ययम् प्र-
त्ययः प्रथितत्वे च समनाद्विज्ञानयोरपि॥८९॥आचारे शपथे रंध्रे विश्वा
साधीनहेतुषु॥ पर्जन्यो मेघशब्देपि ध्वनदंबुदशक्रयोः॥९०॥ प्रस
व्यं वाच्यलिंगं स्यात्प्रतिकूलानुकूलयोः॥ प्रकीर्यः पूतिकरजेऽपि निका
येनु वाच्यवत्॥९१॥ प्राणाय्यो संमतेपि स्यादभिलाषविवर्जिते॥
पयस्यं तु पयोजातहितयोर्वाच्यलिंगकम्॥ दुग्धिकाक्षीरकाकोल्यो
स्वर्णक्षीर्यामपि स्त्रियाम्॥ पारुष्यं परुषत्वे च दुर्वाक्ये पुंसि गीष्पतौ
॥९३॥ पानीयं तु जले क्लीबं पातव्ये वाच्यलिंगकं॥ पौलस्त्यस्तु कुबे
रे स्याद्भ्रातृग्रीवेपि पुंस्ययं॥९४॥ वलयः कंठरोगे ना कंकणे पुन्नपुंसकं
॥ब्रह्मण्यो ब्रह्मसाधौ स्याद्ब्रह्मदारुशनैश्चरे॥९५॥ बाल्लेयो गर्दभे
पुंसि मृतो बालहिते त्रिषु॥ ब्राह्मण्यं ब्राह्मणत्वे च समूहे च द्विजन्मना
म्॥९६॥ भुवन्युस्तु पुमान्भानौ ज्वलने शशलांछने॥ भुजिष्यस्तु
स्वतंत्रे स्याद्धस्तसूत्रकदासयोः॥९७॥ स्त्रियां दासीगणिकयोर्मलयः
पर्वतांतरे॥ शैलांगे देशआरामोप्य वनायां तु योषिति॥९८॥ मांगल्यः
स्यात्त्रायमाणाश्वत्थबिल्वमसूरके॥ स्त्रियां शम्यामधःपुष्पीमिसि
रुक्कूवचासु च॥९९॥ रोचनायामथो दर्भिक्लीबं शिवकरे त्रिषु॥ मृग
युः पुंसि गोमायौ व्याधे च परमेष्ठिनि॥१००॥ रहस्या स्त्री नदीभेदे
गोपनीयेभिधेयवत्॥ लौहित्यं लौहितत्वे स्यान्न क्लीबं पुंसि नदांतरे
॥१॥ वदान्यो दानशौण्डे स्याच्चारुवादिनि वाच्यवत्॥ व्यवायः
स्त्रीरतेन्तर्धौ पुंसि क्लीबं तु तेजसि॥२॥ वृन्तक्यं कुत्सिते हीने वचनार्हे-
च वाच्यवत्॥ विजयः स्याज्जये पार्थे स्त्रियां तिथ्यंतरेस्थुला॥ ३॥
उमासख्यां विस्मयः स्यादाश्चर्यगर्वयोः पुमान्॥ विनया तु कल्यायां-
स्त्री शिक्षायां प्रणतौ पुमान्॥४॥ विशल्याग्निशिखादंती गुडूची-
त्रिपुटासु च॥ विषयो गोचरे देशे तथा जनपदेपि च॥५॥ प्रबंधाद्य
स्ययोज्ञातत्वन्मरूपादिके पुमान्॥ श्वशुर्यो देवरे श्यालेऽप्यांडिल्यः

पावकांतरे॥६॥मुनिभेदेचमालूरेशाल्येयःस्यान्मिसौपुमान्॥त्रि
षुशाल्युद्भवेक्षेत्रेस्याच्छीर्षण्यंतुशीर्षके॥७॥कफेशोपुंसिशैलेयं
तालपर्ण्यांचसैंधवे॥शैलजेनातुमधुपेशिलातुल्येऽन्यलिंगकम्॥
॥८॥संस्त्यायःसन्निवेशेचसंस्थानेविस्तृतावपि॥सन्नयःस
मवायेपिपृष्ठःस्थायिबलेपुमान्॥९॥शमथःशपथाचारसिद्धांते
ष्वनयाधिये॥क्रियाकारेचनिर्देशसंकेतेकालभाषयोः॥१०॥सरि-
ण्युस्तुपुमान्वारिवाहेस्यान्मातरिश्वनि॥सामर्थ्यंयोग्यतायां
स्याच्छक्तावपिनपुंसकं॥११॥सौरभ्यंतुमनोज्ञत्वेसौगंध्येगुणगौ
रवे॥सौभाग्यंसुभगत्वेस्याद्योगभेदेनपुंसकम्॥१२॥हिरण्यं
रेतसिद्रव्येशातकुंभवराटयोः॥अक्षयेमानभेदेस्यादकुप्येचनपुं
सकं॥१३॥हृदयंमानसेवुक्कोरसोरपिनपुंसकम्॥ ॥यच
तुः॥ ॥भवेदनुशयोद्वेषपश्चात्तापानुबंधयोः॥१४॥अथा
र्यमायःशेषस्यात्समाप्तौनिश्चयेपिच॥अवश्यायस्तुनीहारे
दर्पाभिधानेपिपुंस्ययम्॥१५॥अपसव्यंत्रिलिंगंतुदक्षिणप्रतिकू
लयोः॥अंतशय्याभृतौभूमिशय्यायांपितृकानने॥१६॥उपका
र्यांराजसदनेप्युपकारोचितेन्यवत्॥जलाशयोजलाधारेस्यादुशी
रेनपुंसकं॥तंडुलीयःशाकभेदेविडंगतरुतालयोः॥तृणशून्यं
मल्लिकायांत्रिषुस्यात्केतकीफले॥१७॥दाक्षिणात्योनारिकेरेत्रि
षुदक्षिणादिग्भवे॥धनंजयोऽर्जुनेवह्निनागादिदेहमारुते॥१९॥
निरामयस्तुपुंसिस्यादिडिक्केत्रिषुनीरुजि॥परिधायोजनस्था
नेपरिच्छेदनितंबयोः॥२०॥प्रतिश्रयःसभायांस्यादाश्रयेप्रतिभयं
भयं॥घोरेपिपांचजन्यस्तुकृष्णशंखेहुताशने॥२१॥प्रावृषेण्यः
पुमान्नीपेप्रावृट्कालभवेत्रिषु॥पौरुषेयःकृतेपुंसांविकारेपुरुष-
स्यच॥२२॥त्रिषुनासंगबुधयोःपुरुषस्यपदांतरे॥फलोदयःपु
मांल्लाभेपिदिवेसालयेपिच॥२३॥भागधेयंमतंभाग्येभागधेया

॥२६॥ विलेशयस्तु
पुल्लिंगो मूषिके च भुजंगमे॥ वैनतेयस्तु गरुडे स्यात्प्रभाकरसार-
थौ॥२७॥ संपरायः सपीके स्यादापदुत्तरकालयोः॥ समाह्वयस्तु
पक्षिभिः खगैर्धूर्तैश्च संगरे॥२८॥ भवेत्समुदयः संघे संयुगे च समुद्गमे
॥ समुदायः समूहे स्याद्युद्धे समुच्छ्रयः पुमान्॥२९॥ विरोधोत्से
धयोः स्थूलोच्चयो गंडोपलेपि च॥ गजानां मध्यमगतेप्यसाकल्यवस्तु-
योः॥३०॥ हिरण्मयः स्फुरज्ज्येष्ठे नासवर्णमये त्रिषु॥ ॥यपंच
कालानुसार्यं शैलेये कालीये शिंशपाद्रुमे॥३१॥ दुग्धतालीयं
मित्येन दुग्धाग्रक्षीरफेनयोः॥ अथ प्रवचनीयं च स्यात्प्रवक्तृप्रवा-
च्ययोः॥३२॥ वृषाकपायी श्रीगौरीवरीजीवंतिकासु च॥ ॥
यषट्॥ ॥प्रत्युद्गमनीयमुपस्थेये धौतांशुकद्वये॥३३॥
विष्वक्सेनप्रिया लक्ष्म्यां वाराह्यामपि योषिति॥ ॥
इति यांतवर्गः॥ ॥१५४४॥ ॥रैकं॥ ॥
रः स्मृतः पावके तीक्ष्णे राः पुंसि स्वर्णवित्तयोः॥ श्रीर्वेशरचनाशोभा
भारतीसरलद्रुमे॥१॥ लक्ष्म्यां त्रिवर्गसंपत्तिविधोपकरणेषु च॥ विभू
तौ च मतौ च स्त्री स्नुः स्त्रियां निर्झरे स्रवे॥२॥ ॥रद्विः॥ ॥
अरं शीघ्रे च चक्रांगे शीघ्रगे पुनरन्यवत्॥ अग्रं पुरस्तादुपरि परि-
माणे पलस्य च॥३॥ आलंबने समूहे च प्रांते च स्यान्नपुंसकम्॥ अधि
के च प्रधाने च प्रथमे चाभिधेयवत्॥४॥ अस्रः कोणे कचे पुंसि क्ली
बमश्रुणि शोणिते॥ अस्त्रं प्रहरणे चापे करवालेन पुंसकम्॥५
अभ्रं मेघे च गगने धातुभेदे च कांचने॥ अद्रिः शैलद्रुमार्केष्वं
घ्रिर्ना पादमूलयोः॥६॥ आराचर्मप्रभेदिन्यां पुंसि भौमशनैश्चरे



आर्द्रा नक्षत्रभेदेस्यात्स्त्रियांक्लिन्नेभिधेयवत् ॥७॥ आरुःपुंसिनरोमे
दितथाकर्कटदंष्ट्रिणोः॥ इंद्रःशक्रादित्यभेदयोगभेदांतरात्मसु॥८
इंद्रा फणिज्झकेस्त्रीस्यादिरा भूवाक्सुरांबुषु।उग्रः शूद्रासुतेक्ष
त्राद्रुद्रेपुंसित्रिषूत्कटे॥९॥स्त्रीवचाक्षनयोरुष्ट्रीकर्कर्यांकरभेपुमा
न्॥उस्रोवृषेचकिरणेपुंस्युस्राऽर्जुन्युपचित्रयोः॥१०॥ऐंद्रिःकाके
जयंतेनाथौड्राःपुंभूम्निनीवृति॥ओड्रःस्यानोजवापुष्पेक्षरंनी
रेक्षरोंबुदे॥११॥करोवर्षोपलेरश्मौपाणौप्रत्यायशुण्डयोः॥कद्रु
स्त्रिषुस्वर्णपिंगेनागानांमातरिस्त्रियाम्॥१२॥कारोवधेनिश्चये
चबलौयत्नेयतावपि॥तुषारशैलेपिपुमान्स्त्रियांदूत्यांप्रसेवके॥१३
स्वर्णकारिकायांचबंधनागारबंधयोः॥क्षारोरसांतरेधूर्तेलवणे
काचभस्मनोः॥१४॥कारिस्त्रियांक्रियायांस्याद्वाच्यलिंगस्तुशि-
ल्पिनि॥कारुर्विश्वकर्मणिनात्रिषुकारकशिल्पिनोः॥१५॥क्षीरं
दुग्धेजलेकीरःशुकेपुंभूम्निनीवृति॥कुरुर्नृपांतरेभक्तेपुमान्पुं
भूम्निनीवृति॥१६॥क्षुद्रःस्यादधमेक्रूरेकृपणाल्पेषुवाच्यवत्॥
क्षुद्राव्यंगानटीकंटकारिकासरघासुच॥१७॥चांगेरीवेश्ययो
र्हिंस्रामक्षिकामात्रकेषुच॥क्षुरःस्याच्छेदनद्रव्येकोकिलाक्षेत्रगो
क्षुरे॥१८॥क्रूरस्तुकठिनेघोरेनृशंसेप्यभिधेयवत्॥कृच्छ्रमा
स्यात्तमाभीलेपापसंतापनादिनोः॥१९॥क्षेत्रंशरीरेकेदारेसिद्ध-
स्थानकलत्रयोः॥क्रोष्ट्रीशृगालिकाकृष्णाविदारीलांगलीषुच॥२०
क्षौद्रंमधुनिपानीयेखरःस्यात्तीक्ष्णघर्मयोः॥गर्दभेऽस्त्रीदेवताडे
रक्षरुदर्पेहरेहये॥२१॥दंतेपुंसित्रिषुश्वेतेखुरःकोलदलेशफे॥ग
रीश्वरायांकरणाद्युविन्यापविषेविषे॥२२॥गात्रंगजाग्रजंघादौक्ली
बमंगेकलेवरे॥गीःस्त्रीभाषासरस्वत्योर्गिरिर्नानेत्ररुग्भिदि॥२३
अद्रौगिरिचकेयोषिद्गीर्णपूज्येषुनस्त्रिषु॥गुंद्रस्तेजनकेस्त्रीतुप्रि
यंगौभद्रमुस्तके॥२४॥गुरुस्त्रिलिंग्यांमहतिदुर्जरालघुनोरपि॥

पुमान्निषेकादिकारेऽपवादोऽस्त्रमंत्रिणि ॥२५॥ गृध्रः खगांतरे पुं-
सि वाच्यलिंगोऽभिलुब्धके ॥ गोत्रा भूगव्ययोर्गोत्रः शैले गोत्रं कुलाख्य
योः ॥२६॥ संभावनीयबोधे च कानने क्षेत्रवर्त्मनोः ॥ गौरः पीतेऽरुणे
श्वेते विशुद्धे चाभिधेयवत् ॥२७॥ ना श्वेतसर्षपे चंद्रे नद्योः पद्म
केसरे ॥ गौरी त्वसंजातरजःकन्याशंकरभार्ययोः ॥२८॥ रोचनी
रजनीपिंगाप्रियंगुवसुधासु च ॥ आपगायां विशेषेऽपि यादसांप
तियोषिति ॥२९॥ घस्रस्तु दिवसे हिंस्रे घोरे भीमे हरेऽपि च ॥ चरो
क्षद्यूनभेदे च भौमे चारे त्रसे चले ॥३०॥ चंद्रः कर्पूरकांपिल्लसुधां
शुस्वर्णवारिषु ॥ चक्रः कोके पुमान्क्लीबं व्रजे सैन्यरथांगयोः
॥३१॥ राष्ट्रे दंभांतरे कुंभकारोपकरणास्त्रयोः ॥ जलावर्तेऽप्यथ चरुः
पुमान्हव्यान्नभांडयोः ॥३२॥ चारः पियालवृक्षे स्यादूतौ बंधा
पसर्पयोः ॥ चारुर्बृहस्पतौ पुंसि शोभनेऽप्यभिधेयवत् ॥३३॥
चित्रा सुपर्णी गोडुंबा सुभद्रा दंतिकासु च ॥ मायायां सर्पनक्षत्रे
नदीभेदेषु च स्त्रियां ॥३४॥ तिलकालेख्ययोः क्लीबं कर्बुराद्भुतयोरपि
तद्युक्तयोस्त्वन्यलिंगं चीरी झिल्ल्यां नपुंसकम् ॥३५॥ गोस्तने वस्त्र
भेदे च रेखालेखनभेदयोः ॥ चुक्रं वृक्षाम्लचांगेर्यां स्त्रीपुंस्यम्ले-
म्लवेतसे ॥३६॥ चैत्रं मृतदेवकुले ना स्यान्मासभेदयोः ॥ चोरः
पाटच्चरेऽपि स्याच्चोरपुष्प्योषधावपि ॥३७॥ छत्रा मिसावतिच्छत्रे कु
स्तुंबुरुशिलींध्रयोः ॥ नपुंसकं चातपत्रे छिद्रं दूषणरंध्रयोः ॥३८॥
जारी स्यादोषधीभेदे स्त्रियामुपपतौ पुमान् ॥ जीरस्तु जरणे खड्
गे टारो रंगतुरंगयोः ॥३९॥ तरस्तु तरणे पुंसि दशालोपेटके तरी ॥
तंत्रं कुटुंबकृत्ये स्यात्सिद्धांते चौषधोत्तमे ॥४०॥ प्रधाने तंतुवाये
च शास्त्रभेदे परिच्छदे ॥ श्रुतिशाखांतरे हेतावुभयार्थप्रयोजके ॥४१
इतिकर्तव्यतायां च तंत्री वीणागुणे मता ॥ अमृतादेहशिरयोस्तं
द्रीनिद्राप्रमीलयोः ॥४२॥ तारो वानरभिन्मुक्ताविशुद्ध्योः शुद्ध-

मौक्तिके॥ नानक्षत्रेऽक्षिमध्ये च न नारूप्ये नपुंसकम्॥४३॥ स्त्री तु रु
देवताभेदे वालिनीष्वातिभार्ययोः॥ त्रिलिंगोत्तुच्छशब्दे च ताम्रं शु-
ल्वेऽरुणेऽपि च॥४४॥ तीव्रा तु कटुरोहिण्यां राजिकागंडदूर्वयोः॥
त्रिषूष्णे नितांते च कटौ तीरं तु रोधसि॥४५॥ पुंसि त्रपुणि तोत्रं तु
भजने वेणुकेऽपि च॥ दरोऽस्त्री साध्वसे गर्ते कंदरे तु दरी स्मृता॥४६॥
दराअयमनागर्थे दस्रः खरेऽश्विनीसुते॥ दारु स्यात्स्त्रिनलेकाष्ठे दे
वदारौ नपुंसकम्॥४७॥ द्वारं निर्गमनेऽपि स्याद्दस्युपायेध रोगिरौ॥ का
र्पासतूलके कूर्मराजे वस्वंतरेऽपि च॥४८॥ धरा विश्वंभरायां च स्त्री ग
र्भाशयमेदसोः॥ धात्री जनन्यामलकीवसुमत्युपमातृषु॥४९॥ धा
रा सैन्याग्रिमस्कंधे तुरंगगतिपंचके॥ घटादिच्छिद्रसंतत्योः प्रपाते स्याद्द्र
वस्य च॥५०॥ खड्गादेर्निशितमुखे धारो ग्रामांतरे ऋणे॥ धीरा धैर्या
न्विते स्वैरे धीरः स्यात्त्रिषु पंडिते॥५१॥ स्वच्छंदे धैर्ययुक्ते च कुंकुमे तु नपुं
सकम्॥ स्त्रियां श्रवणतुल्यायां धौम्रं धूम्रलइरितं॥५२॥ नद्यावाल्कस्था
नभेदे नरो जे मनुजेऽर्जुने॥ क्लीबं तु रामकर्पूरे नक्रं स्याद्दूर्वदारुणि॥५३॥
नासायां पुंसि कुंभीरे नारस्तर्णकनीरयोः॥ नीध्रं नेमौ वलीके द्यौ रेवती
भे [illegible] कानने॥५४॥ नेत्रं मंथगुणे वस्त्रभेदे मूले द्रुमस्य च॥ रथे च क्वापि
नद्यां तु नेत्री नेतरि वाच्यवत्॥५५ परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु के
वले॥ पत्रं तु वाहने पर्णे स्यात्सक्षेशरपक्षिणोः॥५६॥ पारं परतटे प्रांते
न स्त्री पारा नदीभिदि॥ पारी पूरे च कर्कर्यां पादरज्जौ च दंतिनः॥५७
पात्रं तु भोजने योग्ये स्नुवादौ राजमंत्रिणि॥ तीरद्वयांतरे चाथ पुरुः प्रा
ज्ञेऽभिधेयवत्॥५८॥ पुंसि स्याद्देवलोके च नृपभेदपरागयोः॥ पुरं न
पुंसकं गेहे देहपाटलिपुत्रयोः॥५९॥ पुष्पादीनां दलावृत्तौ नागुग्गुलौ न
ना पुरः॥ पुंड्रो दैत्यविशेषेक्षुभेदयोरतिमुक्तके॥६०॥ त्रिते कृमौ पुंड
रीके पुंस्यभिनीवृदंतरे॥ पूरो जलसमूहे स्याद्व्रणसंशुद्धिखाद्ययोः॥
६१॥ पोत्रं वस्त्रे मुखाग्रे च शूकरस्य हलस्य च॥ पौरं त्रिषु पुरोद्भवे

रणेतुनपुंसकम्॥६२॥वरोजामातरिवृत्तौदेवतादेरभीप्सिते॥
षिड्गेपुंसित्रिषुश्रेष्ठेकुंकुमेतुनपुंसकम्॥६३॥वरीप्रोक्ताशताव-
र्यांवराचस्यात्फलत्रिके॥मनागिष्टेवरंक्लीबेकेचिदाहुस्तदव्ययम्॥
६४॥वभ्रुर्वैश्वानरेशूलपाणौचगरुडध्वजे॥विशालेनकुलेपुंसिपिं
गलेत्वभिधेयवत्॥६५॥वक्रःशनैश्चरेपुंसिपुटभेदेनपुंसकम्॥त्रि
षुक्रूरेचकुटिलेवारःसूर्यादिवासरे॥६६॥द्वारेहरेकुब्जवृक्षेवृंदावस
रयोःक्षणे॥वारीस्याद्गजबंधन्यांकलश्यामपियोषिति॥६७॥वारि
र्वाग्गजबंधन्योःस्त्रीक्लीबेंतुनिबालके॥वीरोरसविशेषेस्याद्दुत्तरे
क्रमवेत्रिषु॥६८॥स्त्रीमुराक्षीरकाकोलीतामलक्येलवालुके॥प
त्निपुत्रवतीरंभाविदारीदुग्धिकासु च॥६९॥मलपूःक्षीरविदार्योःक्ली
वंशृंग्यांनलेपिच॥भरुःस्वर्णेहरेपुंसि भरोतिशयभारयोः॥७०॥
भद्रःशिवेखंजरीटेवृषभेतुकदंबके॥करिजातिविशेषेनाक्लीबंमंग
लसुस्तयोः॥७१॥कांचनेचस्त्रियांरास्नाकृष्णाव्योमनदीषु च॥ति
थिभेदेप्रसारिण्यांकट्फलानंतयोरपि॥७२॥त्रिषुश्रेष्ठेचसाधौच
नपुंसिकरणांतरे॥भारःस्याद्वीवधेविष्णोपलानांद्विसहस्रके॥
॥७३॥भीरुरार्तेत्रिलिंगःस्याद्धरयोषितियोषिति॥भूरिर्नावा
सुदेवेचहरेचपरमेष्ठिनि॥७४॥नपुंसकंसुवर्णेच प्राज्येस्याद्वा-
च्यलिंगकः॥मंत्रोवेदविशेषेस्याद्देवादीनांचसाधने॥७५॥गुह्य
वादेपिचपुमान्अकर्णौगिरिधन्वनोः॥मात्राकर्णविभूषायांवित्ते-
मानेपरिच्छदे॥७६॥अक्षरावयवेस्वल्पेक्लीबंकात्स्न्येवधारणे॥मारो
मृतौस्मरेविघ्नेमारीतुस्याज्जनक्षये॥७७॥मारिःस्त्रीमारणेव
र्षेमित्रंसुहृदिनद्योः॥सूर्येपुंसिपुरागंधद्रव्येदैत्यांतरेपुमान्॥
७८॥यात्रातुयापनेपिस्याद्गमनोत्सवयोःस्त्रियाम्॥रंध्रंतुदूष
णेछिद्रेराष्ट्रंस्यादुपवर्तने॥७९॥उपद्रवेक्लीबपुंसोःरुरुर्मांसमृग
दैत्ययोः॥वेत्रंवेमनिपीयूषेपदवामेपिसूत्रके॥८०॥शीघ्रोनाग

लेबेक्लीबमपराधेच किल्बिषे॥ रौद्रः धर्मेरसेचं रौद्रांस्त्रीतीव्रेभीषणेत्रिषु
॥८१॥ वज्रं स्याद्धलके धान्यांक्लीबंयोगांतरेपुमान्॥ वज्रास्तु स्यांगु
डूच्यांच वज्रीस्नुह्यांनरेस्मृता॥८२॥ दंभोलौहीरकेप्यस्त्री वर्द्धं मपु
वरत्रयोः॥ वप्रः स्यात्तेपुमानस्त्रीरेणुक्षेत्रेच येतटे॥८३॥ वक्रः पुरेव
स्वभेदेव्यग्रोव्यासक्त आकुले॥ वस्त्रोनादिवसेक्लीबंमांदस्वेचवतुष्प
थे॥८४॥ व्याघ्रः स्यात्पुंसिशार्दूलेरक्तैरंडकरंडयोः॥ श्रेष्ठेनरायुचर
स्थः कंटकार्यांतुयोषिति॥८५॥ वृत्रोरिपौघनेध्वांतेशैलभेदेचदानवे
॥ वेरः कलेवरेक्लीबंवार्ताकौकुंकुमेपिच॥८६॥ वोद्रीस्त्रीपणपादेना
गोनसाहौझषांतरे॥ शरस्तेजनकेबाणेदध्यग्रेनाशरंजले॥८७॥ श
स्त्रंलोहास्त्रयोः क्लीबंछुरिकायांतुयोषिति॥ शक्रः पुमान्देवराजेकुट-
जार्जुनभूरुहोः॥८८॥ शकुर्गर्भोधरेजिष्णौशक्रुर्नाकोपवज्रयोः॥
शारिर्नाक्षोपकरणेस्त्रियांशकुनिकांतरे॥८९॥ युद्धार्थगजपर्याणेव्य
वहारांतरेपिच॥ शारः स्याच्छबलेवाच्यलिंगः पुंसिसमीरणे॥९०॥ अक्षो
पकरणेशारस्त्रिं नद्यौरागमाव्रयोः॥ शिग्रुर्नाशाकमात्रेचशोभांज
नमहीरुहे॥९१॥ शिरोनापिप्पलीमूलेस्याद्गमल्यांचयोषिति॥ शी
घ्रंनलदेचक्रांगेक्लीबंद्रुतगतौत्रिषु॥९२॥ शस्त्रं स्याद्दक्षकेक्लीबंशुद्धे
मधुक्कुयोस्त्रियांत्रिषु॥ शान्तः स्याद्धूर्मवेज्येष्ठमासेवैश्वानरेपुमान्॥
९३॥ रक्तोक्षिरुग्भिदोः क्लीबंशूरः स्याद्यादवेभटे॥ स्वरुः पुमान्यूपखं
डेभिदुरेप्यध्वरेशरे॥९४॥ सत्रं पत्रेसदादानाच्छादनारण्यकैतवे॥
सरोदध्यग्रगत्योर्नास्वरोनासासमीरणे॥९५॥ उदात्तादावकारादौ
षड्जादौचध्वनौपुमान्॥ सारो बलेस्थिरांशेच मज्जिनपुंसिजलेधने
॥९६॥ न्याय्येक्लीबंत्रिषुवरेसांद्रघनेघटेमृदौ॥ स्फारः स्यात्पुंसिविक
टेकनकादेश्चबुद्बुदे॥९७॥ सिध्रोनिदाघसलिलेसिध्रातुसारदंतरे॥
स्थिरा भूशालपर्ण्योर्नाशनौमोक्षेचलेत्रिषु॥९८॥ सीरो र्कहलयोः
पुंसिसरालपकपद्ययोः॥ पुल्लिंगस्त्रिदिवेशेस्यात्सूत्रंतंतुव्यवस्थयोः

॥९९॥शाल्म्यादिसूचनाग्रंथेस्वैरःस्वछंदमंदयोः॥ हरिश्चंद्रार्कवा
ताश्वशुकभेकयमाहिषु॥१००॥कपौसिंहेहरेऽजेंशौशक्रेलोकांत
रेपुमान्॥वाच्यवत्पिंगहरितोर्हारोमुक्ताकलौयुधि॥१॥हारिः पथि
कसंघाताद्यूतादिभंगयोःस्त्रियां॥हिंस्राखेलावलीमांस्योःस्त्रियां-
स्याद्घातुकेऽन्यवत्॥२॥हीरानैलांकुकालक्ष्म्योःपुंसिशंकरवज्रयोः
हारालग्नेपिराश्यर्द्धेरेखाशास्त्रभिदोरपि॥३॥ ॥रत्रिः॥ ॥
अमरस्त्रिदशेप्यस्त्रीसंहारेकुलिशद्रुमे॥स्त्रीगुडूच्यमरावत्योःस्थू
णादूर्वाजरायुषु॥४॥अपरंगजपश्चार्द्धेस्याज्जरायोतुयोषिति॥इत
रस्मिन्नपितथाऽर्वाचीनेऽप्यन्यलिंगकम्॥५॥अधरस्तुपुमानोष्ठेही
नेऽनूर्ध्वेचवाच्यवत्॥अध्वरस्तावधानेस्याद्वसुभेदेक्रतौपुमान्॥६
अंतरमवकाशावधिपरिधानांतर्द्धिभेदतादर्थ्ये॥छिद्रात्मीयविना
बहिरवसरमध्यांतरात्मसदृशेषु॥७॥अवरंगजांत्यजंघादिदेशेपिचरमे
त्रिषु॥अंबरंनहूयोर्व्योम्निस्पृगंध्यंतरवस्त्रयोः॥८॥अंगारमुल्मु
केनस्त्रीपुल्लिंगस्तुमहीसुते॥अंकुरोरुधिरेलोम्निपानीयेभिनवोद्भि
दि॥९॥अजिरंप्रांगणेवातेविषयेदर्दुरेतनौ॥स्त्रीचंड्यामक्षरंब्रह्म
वर्णयोःपुंसिशंकरे॥१०॥अशिरोवीतिहोत्रेस्याद्राक्षसेभास्करेपुमा
न्॥अंडीरःपुरुषेशक्तेऽररंछदकपाटयोः॥११॥अवीराऽपतिपुत्रा
यांस्त्रीसत्वरहितेत्रिषु॥अगुरुःक्लीबंजोंककशिंशपयोर्वाच्यवल्ल
घुनि॥१२॥असुरारजनीराश्योरसुरोदेवारिभास्करयोः॥आक
रोनिवहोत्पत्तिस्थानश्रेष्ठेषुकथ्यते॥१३॥आधारस्त्वाधिकरणेप्या
लवालांबुधारणे॥आसारःस्यात्प्रसरणेवेगवृष्टौसुहृद्बले॥१४॥आ
हारःस्यादाहरणेभोजनेचपुमानयं॥आभारस्तुपुमान्वैश्वानरेचर-
जनीत्वरे॥१५॥आकारइंगिताकृत्योरितरोऽन्यचपामरे॥इत्वरं
सत्यांपथिकेक्रूरकर्मणिचत्रिषु॥१६॥ईश्वरोमन्मथेशंभौनाथेस्वा
मिनिचान्यवत्॥ईश्वरीचेश्वरोमायामुदरंजठरेयुधि॥१७॥ ॥

उदारो दातृमहतोर्दक्षिणेप्यभिधेयवत्॥ उर्वरा सर्वसस्याढ्यभूमौ
स्याद्भूमिमात्रके॥१८॥ उत्तरा दिग्विशेषे च स्नुषायामर्जुनस्य च॥ विरा
टस्य सुतेनास्यादूर्ध्वोदीच्योत्तमे त्रिषु॥१९॥ नपुंसकं प्रतिवाक्ये ऽथो
द्धारश्चोद्धृतावृणे॥ ऋक्षरं वारिधारायामृक्षरश्चर्त्विजि स्मृतः॥
२०॥ एकाग्रमन्यलिंगं स्यादेकताने प्यनाकुले॥ औशीरं शयनास-
ने चामरदंडे प्युशीरजे प्रोक्तं॥२१॥ ककरः करीरवृक्षे दीने क्रकचे च
पक्षिभेदे च॥ कदरः श्वेतखदिरे क्रकचव्याधिभेदयोः॥२२॥ कर्बुरं
सलिले हेम्नि कर्बुरः पापरक्षसोः॥ कर्बुरा कृष्णवृंतायां शबले पु
नरन्यवत्॥२३॥ कर्परः स्यात्कपाले च शस्त्रभेदकटाहयोः॥ कंध
रो वारिवाहे स्याद्ग्रीवायां कंधरा मता॥२४॥ कर्बरः कथितो व्याघ्रे
शिवायामपि कर्बरी॥ कंजारो जठरे सूर्ये विरिंचौ वारणे मुनौ॥२५
॥ करीरो वंशांकुरे स्त्री वृक्षभिद्घटयोः पुमान्॥ करीरी चीरिका
यां च दंतमूले च दंतिनां॥२६॥ कर्टरं रसनायां च वर्मांगे कटिवास-
सि॥ कच्छूरा शूकशिंब्यां च शठीदुःस्पर्शयोरपि॥२७॥ कच्छुरः पुंश्च
ले वाच्यलिंगः स्यात्सामरे पि च॥ कवरं लवणे म्ले स्त्री पृथ्वीतुंगौ कचा
नरे॥२८॥ कलुषु भार्यानारक्षः पापयो र्भेषजांतरे॥ कर्मारो ज्ञाति-
भेदे च तत्त्वविसारे च पुंस्ययम्॥२९॥ करेणुः कर्णिकारे च करिणीभे-
द्वयोः स्त्रियां॥ कच्चरं कुत्सिते वाच्यलिंगं तक्रे नपुंसकं॥३०॥ क-
र्करी भांडभेदे नादर्पणे कठिने त्रिषु॥ कडारः पिंगले दासे कलत्रं
श्रोणिभार्ययोः॥३१॥ दुर्गस्थाने नृपादीनां कटप्रुः पुंसि राक्षसे॥ वि
द्याधरे महादेवे तथा स्याद्वक्षदेवने॥३२॥ कंदरस्त्वंकुशे पुंसि गुहा
यां न नपुंसके॥ कर्चूरः स्यात्पुमांस्तुव्यां स्वर्णे तु नपुंसकं॥३३॥
काश्मीरं कुंकुमे ऽपि स्याट्टंकपुष्करमूलयोः॥ कावेरी स्यात्सरिद्भेदे
पण्यनारीहरिद्रयोः॥३४॥ कांतारो स्त्री महारण्ये बिले दुर्गमवर्त्मनि
॥ पुंसि स्यादिक्षुभेदेऽथ किशोरो ऽश्वस्य शावके॥३५॥ तैलपर्ण्यौ

पयोधेश्चस्यात्तरुणावस्थसूर्ययोः॥ किर्मीरोनागरंगेचकर्बुरेराक्षसांत
रे॥ ३६॥ किंशारुर्नासस्यशूकेविशिखेकंकपक्षिणि॥ कुहरंगह्वरे-
च्छिद्रेक्लीबंनागांतरेपुमान्॥ ३७॥ कुक्कुरःसारमेयेनाग्रंथिपर्णेन-
पुंसकं॥ कूर्परःस्यात्कफोणौचजानुदेशेचपुंस्ययं॥ ३८॥ कुंजरो
ऽनेकपेकेशेस्त्रीधातक्यांचपाटलौ॥ कुमारःस्याच्छुकेस्कंधेयुवरा
जेऽश्ववारके॥ ३९॥ बालकेवरुणद्रौनानद्योर्जात्यकांचने॥ कुमारी
शैलतनयानवमाल्योर्नदीभिदि॥ ४०॥ सहापराजिताकन्याजंबूद्वी
पेषुचास्त्रियां॥ कुठारुर्नाद्रुमेकेशेकुद्दारःकेवलेरने॥ ४१॥ कुबेरः
स्यात्पुंसिनदीवृक्षेपुण्यजनेश्वरे॥ कूबरस्त्रिषुचारौना॥ कुब्जकेऽ
स्त्रीयुगंधरे॥ ४२॥ केसरोहिंगुनिक्लीबंकिंजल्केनस्त्रियांपुमान्॥ सिं
हच्छटायांपुन्नागेबकुलेनागकेसरे॥ ४३॥ केदारोद्रौशिवक्षेत्रेभूमि
भेदालवालयोः॥ केनारःपुंसिनरकेशिरःकपालसंधिषु॥ ४४॥ को
टिरःपुंसिनकुलेशक्रगोपकशाकयोः॥ कैद्वारोनागरेकूपेपुष्करेपद्य
श्चपाटके॥ ४५॥ खपुरःक्रमुकेभद्रमुस्तकेऽलसकेपिच॥ खर्परस्त
स्करेधूर्तेभिक्षाभांडकपालयोः॥ ४६॥ खर्जूरंरूप्यखलयोर्वृश्चिकेना
द्रुमेद्वयोः॥ खदिरःशाकभेदेस्त्रीनाचंद्रेदंतधावने॥ ४७॥ खंडाभ्र
मभ्रलेशेस्यात्तथादंतक्षतांतरे॥ खिंखिरस्तुशिवाभेदेखट्वांगेवा-
सिधानके॥ ४८॥ गणेरुःकर्णिकारद्रौकरिणीवेश्ययोःस्त्रियां॥ ग-
र्गरोमीनभेदेस्त्रीमंथन्यामथगह्वरः॥ गुहागहनदंभेषुनिकुंजेतु
पुमानयं॥ गांधारःपुंसिसिंदूरेरागदेशप्रभेदयोः॥ ५०॥ गायत्रीत्रि
पदादेवीछंदोभित्खदिरेपुना॥ गोपुरंद्वारिपूर्द्वारिकैवर्तीमुस्तकेपि
च॥ ५१॥ घर्घरोनाचलद्वारद्वारेलूकनदांतरे॥ स्त्रीक्षुद्रघंट्यावी
णायाभेदेस्वरांतरेपिच॥ ५२॥ चमरंचामरेस्त्रीतुमंजरीमृगभेद
योः॥ चविरोऽनेकपेचंद्रेचत्वरंस्थंडिलेंगने॥ ५३॥ चंकुरःस्यंद
नेवृक्षेचातुरोनेत्रगोचरे॥ चाटुकारःप्रियंवोऽथचिकुरास्त्र्यनुच्चा

तुरी॥५४॥ चक्रगंडोच पुंसिस्याच्चामरं चामरापिच॥ दंडेचवा
लव्यजने चिकुरस्तरलागयोः॥५५॥ पक्षिवृक्षभिदोः केशेगृहबभ्रौ
सरीसृपे॥ छिद्रिरः पावकेऽस्त्रौ करवालेपरश्वधे॥ ५६॥ छिदुरश्छे
दनद्रव्ये धूर्तेवैरिणिचत्रिषु॥ जठरो नस्त्रियां कुक्षौ वृद्धकर्कटयोस्त्रि
षु॥५७॥ जर्जरं शैवलेशक्रध्वजे त्रिषुजरातुरे॥ जंबीरः प्रस्थवृ
क्षे स्यात्पुंसिदंतशठद्रुमे॥५८॥ जलेंद्रः पुंसिवरुणे जंभलेचमहो
दधौ॥ झर्झरः स्यात्कलियुगेवाद्यभांडनदांतरे॥ ५९॥ झल्लरी
झल्लरी चहुडुक्के बालकुंतले॥ टङ्करीस्यान्मृषावादेलंपापटहवा
द्ययोः॥ ६०॥ टंकारो विस्मयेपुंसि प्रसिद्धौ सिंजिनीध्वनौ॥ टगरष्ट
कणक्षारेहेलाविभ्रमगोचरे॥ ६१॥ तान्यवल्केकरास्येस्यात्, डिंगरो डं
गरेऽपिच॥ क्षेपेतमिस्त्रं तिमिरे कोपेस्त्रीतुलमस्ततौ॥ ६२॥ कृष्णपक्ष
निशायांचस्वक्षपत्रं तुबरांगके॥ स्त्रीकारव्यांच तिमिरं ध्वांते नेत्राम
यांतरे॥ ६३॥ तीवरो नांबुधौ व्याधे तुंबुरीकुक्कुरस्त्रियां॥ धन्याकेपि
तुषारस्तुशीकरे शीतलेहिमे॥ ६४॥ तुवरस्तुकषायेस्यात्काक्ष्या
दक्योस्तुवर्यपि॥ तूवरः श्मश्रुपुरुषे प्रौढाशृंगारकेपिच॥ ६५॥ पुरु
षव्यंजनत्यक्ते स्यात्कषायरसेपिच॥ दहरोमूषिकायांचस्वल्पेभ्रा
तरिबालके॥ ६६॥ दंतुरस्तून्नतरदेतथोन्नतनतेत्रिषु॥ दर्दरः
पर्वतेपुंसि त्रिषुशीर्णद्रुमभाजने॥ ६७॥ दर्दुरस्तोयदेभेकेवाद्यभां
डाद्रिभेदयोः॥ दर्दुराचंडिकायांस्याद्ग्रामजालेनपुंसके॥ ६८॥
दंडारोवहलेमत्तवारणेशरयंत्रके॥ कुंभकारस्यचक्रेचद्वापरः
संशयेयुगे॥ ६९॥ दासेरोदासिकापत्येत्रिषुपुंसिक्रमेलके॥ दु
र्धरः पुंसिनरकांतरेस्यादृषभौषधौ॥७०॥ दैत्यारिः पुंसिसामान्य
देवेचगरुडध्वजे॥ धूसरी किन्नरीभेदेनारवेत्रिषुपांडुरे॥७१॥
नरेंद्रस्तुमहीपालेविषवैद्येचपुंस्ययं॥ नर्मरातुदरीभस्त्रासरला
निष्फलासुच॥७२॥ नागरंतुस्तुके शुंठ्यां विदग्धेनगरोद्भवे॥ नि

करोनिवहेसारेन्यायदेयवनेनिधौ॥७३॥निर्झरस्तुसहस्रांशुतुरंगेतुषपावके॥निर्जरःस्यात्पुमान्देवेजरात्यक्तेचवाच्यवत्॥७४॥निर्जरातुगुडूच्यांचतालपर्ण्यामपिस्त्रियाम्॥निकारःस्यात्परिभवेधान्यस्योत्क्षेपणेपिच॥७५॥निर्दरंनिर्भरेसारेऽन्यवत्तुकठिनेऽत्रपे॥स्यान्नीवरोवणिजकेवास्तव्येचपुमानयं॥७६॥प्रवरःसंततौगोत्रेक्लीबंश्रेष्ठेतुवाच्यवत्॥प्रखरोहयसन्नाहेकुक्कुरेऽश्वतरेऽपिच॥७७॥पुंसित्रिष्वश्यंतस्वरेपवित्रंवर्षणेकुशे॥ताम्रेपयसिचक्लीबंमेध्येस्यादभिधेयवत्॥७८॥प्रदरोरोगभेदेस्याद्विदारेशरभंगयोः॥प्रकरःस्यात्पुमान्संघेविकीर्णकुसुमादिषु॥७९॥नपुंसकंजोंगकेस्त्रीनाट्यांगेचस्वरावलौ॥पंकारःशैवलेसेतौसोपानेजलकुब्जके॥८०॥प्रस्तरोग्रावणिमणौप्रकारस्तुल्यभेदयोः॥पदारःपादधूलौस्यात्पादालिंदेपिपुंस्ययम्॥८१॥प्रसरःप्रणयेवेगेस्यात्सादीरस्तमूलके॥केदारेवेणुसारेचवारिदेतित्तुलापि॥८२॥स्यात्प्रेवासिकेपुंसिपामरःखलनीचयोः॥पांडुरंस्यान्मरुबकेवर्णेनातद्वतित्रिषु॥८३॥पार्परीभक्तसिक्थेस्यात्काशेराजयक्ष्मणि॥जराटेपिकदंबस्यकेसरेचगदांतरे॥८४॥प्रांतरंविपिनेदूरशून्यवर्त्मनिकोटरे॥पिठरःस्थाल्यांनाक्लीबंमुस्तामंथानदंडयोः॥८५॥पिंजरोश्वांतरेक्लीबंस्वर्णेपीतेचवाच्यवत्॥पिंडारःक्षेपणेगोपेमहिषीरक्षकेद्रुमे॥८६॥पीवरःकच्छपेस्थूलेपुष्करंखेबुपद्मयोः॥तूर्यवक्त्रेखड्गफलेहस्तिहस्ताग्रकांडयोः॥८७॥कुष्ठौषधेद्वीपतीर्थभेदयोश्चनपुंसकं॥नारोगनागविहगनृपभेदेषुवारुणे॥८८॥बंठरःस्थगिकारज्जौलांगूलेकुक्कुरस्यच॥करीरकोशेतालस्यपल्लवेचपयोधरे॥८९॥बंधुरंमुकुटेपुंसिस्त्रीचंगतैलकल्कयोः॥बंधूकेबधिरेहंसेत्रिषुस्यादुन्नतनम्रयोः॥९०॥बंधुरापण्ययोषायांस्त्रियांभूम्निचसक्तुषु॥बंधुरःशोभनेनम्रेवरत्रारज्जुकक्ष्ययोः॥९१॥भ्रमरःकामुकेभृंगेभ्रामरंमधुनिस्मृतं॥पुंसिप्रस्तरभेदेऽथभास्करोऽग्नौप्रभाकरे॥

॥ १२ ॥ भार्यारुः शैलभेदे स्यान्मृगभेदे च तन्नच ॥ क्रीडया परभार्यायां पुत्रो येनोपपादितः ॥ ९३ ॥ भृंगारी झिल्लिकायां स्यात्कनकालौ पुनः पुमान् ॥ मत्सरा मक्षिका यां स्यान्मात्सर्यक्रोधयोः पुमान् ॥ ९४ ॥ असह्यपरसंपत्तौ कृपणे चाभिधेयवत् ॥ मधुरा शतपुष्पायां मिश्रेया नगरीभिदोः ॥ ९५ ॥ मधुकर्कटिका मेदा मधूलीयष्टिकास्कच ॥ क्लीबं विषे पुंसि रसे तद्वत्स्वादुप्रिये ऽन्यवत् ॥ ९६ ॥ मंदरस्तु पुमान्मंथशैले मंदारपादपे ॥ वाच्यवद्बहले मंदे मंदारः स्यात्सुरद्रुमे ॥ ९७ ॥ पारिभद्रेर्कपर्णे च मंदारो हस्तिधूर्तयोः ॥ मंदिरं नगरे ऽगारे क्लीबं ना मकरालये ॥ ९८ ॥ मंथरः कोशफलयोर्बाधमंथानयोः पुमान् ॥ कुसुंभ्यां न द्वयोर्मंदे पृथौ वक्रे ऽभिधेयवत् ॥ ९९ ॥ मकरो यादसां भेदे निधिराशिप्रभेदयोः ॥ मयूरो बर्हिचूडायामपामार्गे शिखंडिनि ॥ २०० ॥ महेंद्रः पर्वते शक्रे मधुद्रोः ऽलौ च कामुके ॥ मंदुरा वाजिशालायां शयनीयार्थ वस्तुनि ॥ १ ॥ मसूरा मसुरा वा ना वेश्या व्रीहिप्रभेदयोः ॥ मसूरी पण परोगे स्यादुपधाने पुनः पुमान् ॥ २ ॥ मर्मरो वस्त्रभेदे च शुष्कपर्णध्वनौ तथा ॥ पुंसि स्त्रियां पुनः प्रोक्ता मर्मरी पीतदारुणि ॥ ३ ॥ मंजरी तिलकद्रुमुक्तयोर्वल्लुरीहयोः ॥ मकुरः स्यान्मुकुरवद्दर्पणे बकुलद्रुमे ॥ ४ ॥ कुलालदंडे माठरो व्यासे ऽर्कपारिपार्श्विके ॥ मार्जार ओतौ स्वट्टाशो मिहिरः सूर्यवृद्धयोः ॥ ५ ॥ मुद्गरं मल्लिकाभेदे पुंसि लोष्टादिभेदने ॥ मुदिरः कामुके मेघे मुहिरः काममूर्खयोः ॥ मुर्मुरस्तु पवह्नौ स्यान्मन्मथे रविवाजिनि ॥ मृगारिः स्यात्पुंसि कंठीरवशार्दूलयोरपि ॥ ७ ॥ रुधिरो ऽगारके पुंसि क्लीबं तु कुंकुमास्रजोः ॥ बदरा गृष्टिकार्पास्योरेलापर्ण्यां स्त्रियां पुमान् ॥ ८ ॥ कार्पासस्थ्यि बदरी कोलौ क्लीबं तु तत्फले ॥ बर्बरः कुक्कुटे पुंसि शठे च वशिरः पुमान् ॥ किणिही हस्तिपिप्पल्योः क्लीबे ऽब्धिलवणे स्मृतः ॥ बर्बरः पामरे केशे चक्रले नीवृदंतरे ॥ १० ॥ फंजिकायां पुमान् शाकभेदपुष्पभिदोः स्त्रियां ॥ वर्करः परिहासे स्यान्छागे युवपशावपि

पि॥११॥ वल्लुरं शाद्वलक्षेत्रे गहनौषधयोरपि॥ वल्लूरा त्रिषु संशुष्कमांसशूकरमांसयोः॥१२॥ वार्दरं कृष्णालाबीजदक्षिणावर्तशंखयोः॥ वीरे च काकचिंचायां भारत्यां च नपुंसकं॥१३॥ वागरस्तु गतालंके मुमुक्षौ वातवेष्टके॥ विशारदे पि शाणे पि निर्णये वारके पि च॥१४॥ वासरस्तु पुमान्नागप्रभेदे दिनयोरपि॥ वासुरा वासितायां स्याद्रात्रौ तेयभुवि स्त्रियाम्॥१५॥ विष्टरः कुशमुष्टौ स्यादासने पि महीरुहे॥ विस्तरो वाक्प्रपंचे स्याद्विस्तारे प्रणये पि च॥१६॥ विदुरो नागरे धीरे कौरवाणां च मंत्रिणि॥ विधुरं स्यात्प्रविश्लेषे न द्वयोर्विकले त्रिषु॥१७॥ रसालायां स्त्री विदारो ज्वलोच्छ्वासाजिदारणे॥ विदारी शालपर्ण्यां च रोगभेदे क्षुगंधयोः॥१८॥ विवरं दूषणे गर्ते विसरः प्रसरे व्रजे॥ विस्तारो विस्तृतौ स्तंबे विकारो विकृतौ रुजि॥१९॥ विहारो भ्रमणे स्कंधे लीलायां सुगतालये॥ शबरो म्लेच्छभेदे च पानीये शंकरे पि च॥२०॥ शंवरं सलिले पुंसि मृगदैत्यविशेषयोः॥ शंबरी चाखुपर्ण्यां स्यात्कुंबरी यामिनी स्त्रियोः॥२१॥ शर्करा खंडविकृता वुपलाकर्पुरांशयोः॥ शर्करान्वितदेशे पि रुग्भेदे शकले पि च॥२२॥ शाक्करी छंदसो भेदे नदी मेखलयोरपि॥ शाणीरं शोणमध्यस्थे पुलिने तद्दर्शतटे॥२३॥ श्वशुरः पूज्ये स्त्री भ्राह्म्यां शारीरं देहजे वृषे॥ शार्करः स्याद्दुग्धफेने शर्करान्वितदेशयोः॥२४॥ शाकरस्तु बलीवर्दे छंदोभेदे नपुंसकं॥ शार्वरं त्वंधतमसे घातुके मेघलिंगकम्॥२५॥ शालारं स्याद्धस्तिनखे सोपाने पक्षिपंजरे॥ शारवरी भूकशिंब्यां स्यात्पुंसि पापापराधयोः॥२६॥ शेधेन्वशांकरिः पुंसि कार्तिके मेगणाधिपे॥ शिखरो ऽस्त्री द्रुमाग्राद्रिशृंगे पुलककक्षयोः॥२७॥ पक्वदाडिमबीजाभमाणिक्यशकलाग्रयोः॥ शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिषु॥२८॥ शिलिंध्रं कंदलीपुष्पे कबरे नाझषांतरे॥ द्रुभेदे स्त्री तु विहगीभेदगंडूपदीमृदोः॥२९॥ शीकरं शरलेवातस्तुताबुकणयोः पुमान्॥ शुषिरं वंशादिवाद्ये विवरे पि नपुंसकं॥३०॥ मूषिके ना स्त्रियां गर्ते

वन्द्रोरंआश्रितेत्रिषु॥ शृंगारः सुरतेनाट्यरसेच गजमंडने॥ ३१॥ न
पुंसकंलवंगेपिनागसंभवचूर्णयोः॥ संबरोदैत्यहरिणमत्स्यशैलजि
नांतरे॥ ३२॥ नपुंसकंतुसलिलबौद्धव्रतविशेषयोः॥ संकरोऽग्निचट
त्कारेसंमार्जन्यवपुंजिते॥ ३३॥ नवदूषितकन्यायांसंकरीपुनरुच्यते॥
संस्कारः प्रतियत्नेनुभवेमानसकर्मणि॥ ३४॥ संस्तरः प्रस्तरेयज्ञे
संगरोयुधिचापदि॥ क्रियाकारेविषेचांगीकारेक्लीबंशमीफले॥ ३५
संभारः संभृतौसंघेसामुद्रंदेहलक्षणे॥ समुद्रजेऽन्यलिंगोऽथसा
वित्रः शंकरेवसौ॥ ३६॥ सावित्रीसत्यवसत्यांब्रह्मपत्न्युमयोरपि॥
सिंदूरस्तरुभेदेस्यात्सिंदूरंरक्तचूर्णके॥ ३७॥ सिंदूरीरोचनीरक्त
चेलिकाधातकीषुच॥ स्कनारस्कमुनीस्तन्येसर्पांडकलविंकयोः॥ ३८
संदरीतनुभिन्नारीभिदोः स्त्रीरुचिरेऽन्यवत्॥ सैरंध्रीपरवेश्मस्थ
शिल्पकृत्स्ववशास्त्रियां॥ ३९॥ वर्णसंकरसंभूतस्त्रीमहल्लिकयोरपि
॥ सौवीरंकांजिकेस्रोतोंजनेचबदरीफले॥ ४०॥ नातुनीवृतिहारिद्रं
हरिद्रारंजितेत्रिषु॥ नानीपवृक्षे हिंडीरः फेनवार्ताकुपूरुषे॥ ४१॥ ॥
रचतुः॥ अरुष्करोव्रणकृतित्रिषुभल्लातकेपुमान्॥ भवेदभि
मरोयुद्धेवधेस्वबलसाधने॥ ४२॥ अनुत्तरंत्रिषुश्रेष्ठेप्रतिजल्पवि
वर्जिते॥ अलंकारस्तुहारादावुपमादावलंकृतौ॥ ४३॥ अवहारः पु
मांग्चौरेद्यूतयुद्धादिविश्रमे॥ निमंत्रणोपनेतव्यह्वयेग्राहारव्ययादसि
॥ ४४॥ अवतारोऽवतरणेपुष्करिण्यादितीर्थयोः॥ अवस्करोपिव
र्चस्केगुह्येऽथावसरः पुमान्॥ ४५॥ प्रस्तावेमंत्रभेदेचवर्षणेचापि
कीर्तितः॥ उपलादावकूपारः कूर्मराजेमहोदधौ॥ ४६॥ असिपत्रः
खड्गकोशेपुमानिक्षौचनारके॥ भवेदश्वतरोनागांतरेवेगसरेपिच
॥ ४७॥ अभिहारोऽभियोगेचचौर्येसन्नहनेपिच॥ अग्निहोत्रोऽग्नि
हविषोरर्धचंद्रोनखक्षते॥ ४८॥ गलहस्तेबाणभेदेकृष्णानिर्हातितु
स्त्रियां॥ आडंबरस्तूर्यपक्ष्मसंरंभेगजगर्जिते॥ ४९॥ आम्रवीरः

प्राणवति श्यालके च विदूषके ॥ इंदीवरं कुवलये शतावर्यां तु योषिति ॥ ५०॥ उदुंबरस्तु देहल्यां वृक्षभेदे च पंडके ॥ कुष्ठभेदेपि च पुमांस्ताम्रेतु स्यान्नपुंसकं ॥५१॥ उपह्वरं समीपे स्यादेकांतेपि नपुंसकं ॥ उद्दंतुरस्त्रिषून्तुंगे करालोत्करदंतयोः ॥५२॥ उपकारस्त्वोपकृतौ विकीर्णकुसुमादिषु ॥ औदुंबरः श्वाद्धदेवे रोगभेदे नपुंसकं ॥५३॥ अथकर्मकरो भृत्ये वेतनाजीविनि त्रिषु ॥ कीनाशो पुंसि मूर्च्छायां चिंचिकायामपि स्त्रियाम् ॥ ॥५४॥ कलिकारस्तु धूम्याटे करंजे पीलमस्तके ॥ कर्णिकारः पुमानारग्वधद्रौ च द्रुमोत्पले ॥५५॥ कर्णपूरः शिरीषे स्यान्नीलोत्पलवसंतयोः ॥ करवीरः कृपाणे स्याद्दैत्यभेदाश्वमारयोः ॥५६॥ करवीर्यश्लिन्नेषु गवी पुत्रवतीषु च ॥ कटंभरा प्रसारण्यां रोहिण्यां गजयोषिति ॥५७॥ कलंबिकायां गोलायां वर्षाभूमूर्वयोरपि ॥ कादंबरस्तु दध्यग्रे मद्यभेदे नपुंसकं ॥५८॥ स्त्री वारुणी परभृता भारती शारिकासु च ॥ कालंजरो योगिचक्रमेलके भैरवे गिरौ ॥५९॥ कुंभकारः कुलथ्यां च पुल्लिंगो घटकारके ॥ कृष्णसारा शिंशपायां पुंसि स्यात्तु मृगांतरे ॥६०॥ गिरिसारः पुमाँल्लोहे रंगे मलयपर्वते ॥ घनसारस्तु कर्पूरे दक्षिणावर्तपारदे ॥६१॥ चराचरं वाच्यलिंगमिंगे जगतिन दयोः ॥ चर्मकारः पादुकृन्नि स्त्रियां चर्मकषौषधौ ॥६२॥ अथ चक्रधरो ऽजे ह्रीनात्रिषुग्रामजालिनि ॥ चित्राटीरो विधौ भालमंकितेयनतन्त्र च ॥६३ घंटाकर्णोपहारायहत च्छागास्त्रविंदुषु ॥ तालपत्रं तु नाटंके रंडायां तालपत्र्यपि ॥६४॥ तुंगभद्रा नदीभेदे स्त्रियां पुंसि नदोत्कटे ॥ तुंडिकेरी तुकार्पास्यां विंविकायामपि स्त्रियां ॥६५॥ तुलाधरस्तु लाराशौ पुंसि वाणिजके त्रिषु ॥ अथ तोयधरो मुस्ताक निषण्णौषधी घने ॥६६॥ दंडयात्रा दिग्विजये संपानवरयात्रयोः ॥ अथोदेहापुरं देशपूरेपि स्यान्नपुंसकम् ॥६७॥ दंडधारः पुमान्पृथ्वीनाथे मेनाधिपेपि च ॥ दिगंबरः स्यात्क्षपणे नग्ने तमसि शंकरे ॥६८॥ दुरोदरं द्यूतभेदे द्यूतकृस

णयोःपुमान्॥ देहयात्रायमपुरीगमनेभोजनेपिच॥६९॥ द्वे मानुरो जरासंध वारणाननयोःपुमान्॥ धराधरोहरौशैले धाराधरो सि मेघयोः॥७०॥ धारांकुरस्तुनाशीरेशीकरेपिघनोपले॥ धार्तराष्ट्रो ऽसितास्यांघ्रिहंसेकौरवसर्पयोः॥७१॥ धुंधुमारःशक्रगोपेगृहधूमे पद्मलिके॥ धुरंधरोधवदौनावाच्यलिंगस्तुधूर्वहे॥७२॥ धृतराष्ट्रः स राज्ञिस्यान्नागक्षत्रियभेदयोः॥ धृतराष्ट्रीहंसपत्न्यां नभश्चरोवि हंगमे॥ ७३॥ विद्याधरेघनेवातेनिशाचरस्तुरक्षसि॥ फेरुपेचकस र्पेषुपांशुलायांनिशाचरी॥७४॥ निषद्वरस्तुजंबालेनिशायांतु निषद्वरा॥ नीलांबरःप्रलंबघ्नेकोणपेचशनैश्चरे॥ ७५॥ भवेत्परि करःसंघेपर्यंकपरिवारयोः॥ प्रगाढगात्रिकाबंधेसमारंभविवेकयोः ॥७६॥अ थपसूचरश्चंद्रेरथकवारिगजेपिच॥ भवेत्प्रतिसरोमं त्रभेदेमाल्येचकंकणे॥ व्रणशुद्धौचमूपृष्ठेपुंसिनस्त्रीतुमंडने॥ आरक्षे- करसूत्रेच नियोज्येत्वन्यलिंगकः॥७७॥ भवेत्परिसरोमृत्यौविधाव पिचपुंस्ययम्॥ परंपरोमृगभेदेप्रपौत्रेतनयस्यच॥७९॥ परंपरा परिपाट्यांहिंसासंतानयोरपि॥ पयोधरःकोषकारेनालिकेरेस्त नेपिच॥८०॥ कशेरुमेघयोःपुंसिप्रभाकरोऽग्निसूर्ययोः॥ प्रतीहा रोद्वारिद्वास्थेद्वाःस्थितायांतुयोषिति॥ ८१॥ परिवारःपरिजनेख ड्गकोषेपरिच्छदे॥ पारावारःसमुद्रेनातटद्वयेनपुंसकं॥८२॥पात्रटी रस्तुपुलिंगोमुक्तव्यापारमंत्रिणि॥ लोहकांस्यरजसात्रेसिंघाणेपाव केपिच॥८३॥ पारिभद्रस्तुमंदारेनिंबद्रौदेवदारुणि॥ पीतांबरस्तु शैलूषेपुंसिकैटभसूदने॥८४॥पीतसारोमलयजेगोमेदकमणाव पि॥ पूर्णपात्रंवस्तुपूर्णपात्रेवर्धापकेपिच॥८५॥ बलभद्रात्रायमा णाकुमार्योःपुंसिसीरिणि॥ ब्रह्मपुत्रःक्षेत्रभेदेनदभेदेचपुंस्ययम्॥ ८६॥ बभ्रुनभ्रुस्तुपिशुनेतथैवबभ्रुकपक्षिणि॥ बार्बटीरोरंगआ म्रास्थ्यकुरंगणिकासुते॥८७॥ बारकीरस्तुपुंसिस्याद्वारग्राहि-

णिवाडवे॥यूकायांरोलरोधिन्यांनीराजिनहयेपिच॥८८॥ बिंदुतंत्रः पुमान्शारिफलकंचतुरंगके॥वीरभद्रोऽश्वमेधाश्वेवीरश्रेष्ठेचवीरणे ॥८९॥स्याद्वीरतरंवीरणेवीरश्रेष्ठेत्रावेचना॥महावीरस्तुगरुडेभू रेसिंहेमखानले॥९०॥वज्रोश्वेनतुरंगेच संचानविहगेपिच॥महामा त्रःसमृद्धेचामात्येहस्तिपकाधिपे॥९१॥मणिच्छिद्रातुमेदायामृष भाख्योषधेपिच॥महेश्वरोमहादेवेकथितोधीश्वरेपिच॥९२॥ मृगनेत्रा रात्रिभेदेविशेषेयोषितस्तथा॥रथकारस्तुमाहिष्यात्का रणीजेचतक्षणि॥९३॥रागसूत्रंतुलासूत्रेपट्टसूत्रेनपुंसकं॥लंबोद रःस्याद्धुतानेगणानामधिपेपिहि॥९४॥लक्ष्मीपुत्रःस्तुपुल्लिंगःका मदेवेतुरंगमे॥व्यवहारोद्रुभेदेस्यान्यासेपिचगणास्थितो॥९५॥अ थव्यतिकरःपुंसिव्यसनव्यतिषंगयोः॥वातपुत्रोमहाधूर्तेभीमसेने हनूमति॥९६॥विश्वंभरोऽच्युतेशक्रेपुंसिविश्वंभराभुवि॥विश्व कद्रुस्त्रिषुखलेध्वानाख्येदशकनोःपुमान्॥९७॥विभावरीनिशारा त्र्योःकुट्टन्यांचकयोषिति॥विवादवल्गुरुक्यांचविभाकरोग्निसूर्य- योः॥९८॥वीतिहोत्रोऽनलेऽर्केचशतपत्रःशिखंडिनि॥दार्वाघाटे सारसेचकमलेतुनपुंसकम्॥९९॥शातावरीतुशत्व्यांस्यादिंदीवर्यो मपिस्त्रियां॥शिशुमारोंबुसंभूतजंतोताराप्तकाच्युते॥३००॥भवे त्सहचरोझिंट्यांहयोरनुचरेत्रिषु॥समुद्रारुःपुमान्ग्राहेसेतुबंदेति- मिंगिले॥१॥संप्रहारोगतोयुद्धेस्थिरदंष्ट्रोभुजंगमे॥विराहाकृति विष्णौचस्तुकुमारोमृदौत्रिषु॥२॥पुंसिपुंड्राभिधानेक्षौसूत्रधारः शचीपतौ॥नानांध्रंतरसंचारिपारिपात्रभपोद्यो॥३॥ ॥रपंच तमालपत्रंतापिच्छेतिलकेपत्रकेपिच॥तालीशपत्रंभूम्यामलकी- तालीशयोःस्मृतम्॥स्यात्पांशुचामरःपुंसिदूर्वाचिततटीभुवि॥च ह्लीपकेप्रशंसायांपुरोटोधूलिगुच्छके॥५॥स्यात्पादचतुरश्छागेसै कतेपिप्पलेपिच॥करकेपरदोषैकप्रवक्तृपुरुषेपिच॥६॥पीतकावेर

मित्येतत्कुंकुमेपित्तलेपिच ॥ स्याद्द्राजवदरंरक्तमेलकेलवणेपिच
७॥ वस्त्वोकसारेंद्रपुरेकुबेरनलिनीपुरोः॥ विप्रतीसार उद्दिष्टः
कौकृत्येऽनुशयेरुषि॥८॥ भवेत्समभिहारस्तु पौनःपुन्यभृशार्थयोः॥
सर्वतोभद्रइत्युक्तःकाव्यचित्रेगृहांतरे॥९॥ निंबेनासर्वतोभद्रागं
भारीनटयोषितोः॥ ॥ इतिरांतवर्गः॥ ॥१८५३॥
लैकं॥ ॥ लःशक्रेलातुदानेस्यात्ग्रहणेपिनिगद्यते॥ लीश्ले
षणेचचपलेग्लौर्धरण्यांनिशापतौ॥१॥ ॥ लद्विः॥ ॥
अम्लोरसस्यभेदेस्यादम्लीचांगेरिकौषधौ॥ अलिःसुरापुष्पलिहोः
पुंस्यालिर्विशदाशये॥२॥ विधुस्त्रियांवयस्यायांसेतौपंक्तौचकीर्तिना
॥ आलुर्गलंतिकायांस्त्रीक्लीबंमूलेचभेलके॥३॥ इलाकलत्रेसौम्यस्य
धरित्र्यांगविवाचिच॥ ओलुस्तुशूरणेपुंसिस्यादार्द्रेवाच्यलिंगकः॥
४॥ कलास्यान्मूलरैवृद्धौशिल्पादावंशमात्रके॥ षोडशांशेचचंद्रस्यक
लनाकालमानयोः॥५॥ कलःशुक्रेत्रिषुजीर्णेनात्यव्यक्तमधुरध्वनौ॥ क
लिःस्त्रीकलिकायांनाशूराजिकलहेयुगे॥६॥ कालोमृत्यौमहाका
लेसमयेयमकृष्णयोः॥ कालातुकृष्णात्रिवृतामंजिष्ठानीलिकासुच
॥७॥ कालीगौर्यांक्षारकीटेकालिकामातृभेदयोः॥ कीलोलेशेद्वयोः
शस्त्रज्वालाकफोणिशंकुषु॥८॥ कुलंजनपदेगोत्रेसजातीयगणेष
पि॥ भवनेचतनौक्लीबंकंटकार्यौषधौकुली॥९॥ अथकूलंतटेस्तू
पेसैन्यपृष्ठतडागयोः॥ कोलंकोलिफलेक्लीबंपिप्पलीचव्ययोःस्त्रियां
॥१०॥ नांकपालेशनौचित्रेवराहोत्संगभेलके॥ खलंभूस्थानकल्के
ष्णीचक्रूराधमेत्रिषु॥११॥ खल्लोवस्त्रप्रभेदेस्याद्गर्तेचर्मणिचातके
खल्लीतुहस्तपादावमर्दनाख्यरुजिस्त्रियाम्॥१२॥ खिलमप्रह
तेक्लीबंसारसंक्षिप्तवेधसोः॥ गलःसर्जरसेकंठेगुलःस्यादिक्षवेपुमा
न्॥१३॥ गुलीतुगुटिकारोगभिदोःस्नुह्यांगुलास्मृता॥ गोला गो-
दावरीसख्योःकुनटीदुर्गयोःस्त्रियां॥१४॥ पत्रांजनेमंडलेचालिं-

जरेबालखेलने॥ चलालक्ष्म्यांपुमान्कंपेपंकेनेत्वभिधेयवत्॥१५॥ चि
ल्लः पुमान्क्लिन्ननेत्रेक्लिन्नाक्षेप्यभिधेयवत्॥आततायिनितत्प्रोक्तश्चि
ल्लीस्यात्क्षुद्रवास्तुके॥१६॥ चुल्लीचितायामुद्धाने चोलः कूर्पासकेपुमा
न्॥नपुंसकंतुवसने छलंस्खलितशाठ्ययोः॥१७॥ छल्लीवीरुथसंता
नेवल्कलेकुसुमांतरे॥जलंगोकलनेनीरेक्लीबेरेप्यन्यवज्जडे॥१८॥
जालंगवाक्षआनायेक्षारकेदंभवृंदयोः॥जालोनीपद्रुमेजालीपटो-
लिकोषधौस्त्रियाम्॥१९॥ झल्लास्याद्वातपस्योमौदुहितर्यपिचस्त्रियां
झिल्लीचीर्यातपरुचोर्वर्त्यामुद्धर्तनांशुके॥२०॥ तलंस्वरूपेनूर्ध्वोस्त्रीक्ली
वंज्याघातवारणे॥काननेकार्यबीजेचपुंसितालमहीरुहे॥२१॥ चपेटे-
चत्सरौतंत्रीघातेसव्येनपाणिना॥तल्लीतरुण्यांतल्लस्तुजलाधारांतरे
पुमान्॥२२॥ तालः करतलेंगुष्ठमध्यमाभ्यांचसंमिते॥गीतकालक्रिया
मानेकरास्फालेद्रुमांतरे॥२३॥वाद्यभांडेचकांस्यस्यत्सरौनालीजटो
षधौ॥ क्लीबंतुहरितालेस्यात्तुलासादृश्यमानयोः॥२४॥ गृहाणांदारु
बंधायपीठिकायामपीष्यते॥राशौपलशते भांडेतुलंस्याद्धृद्दारुणि
॥२५॥आकाशेथपिचौनस्त्रीदलमुत्सेधखंडयोः॥शस्त्रीछदेप्यवद्द
अपत्रेप्यथदुलिः स्त्रियाम्॥२६॥ कमठ्यांनापुनौदोलानील्यांयाना-
तरेपिच॥नलः पोटगलेराज्ञिपितृदेवेकपीश्वरे॥२७॥कमलेपिकुनल्यां
चक्रमेणक्लीबयोषितोः॥नालानलापद्मदंडेनालीशाककडंबके॥
२८॥नीलंतुनीलीरक्तेनाविधाइवानरांतरे॥नीलीरुग्भेदनीलिन्योः
पलपुन्मानमांसयोः॥२९॥ पल्लीस्याद्ग्रामकुड्योः पल्लुः स्थूलकुसूलके
॥पालिः कर्णलताग्रेश्रीपंक्तावंकप्रभेदयोः॥३०॥ छाद्यादिदेपेस्त्री-
पालीयूकासश्मश्रुयोषितोः॥पिल्लः पुमान्क्लिन्ननेत्रेक्लिन्नाक्षेप्यन्यव
त्॥३१॥ पीलुः पुमान्प्रसूनेस्यात्सरमाणौमतंगजे॥अस्थिखंडेचताल
स्यकांडपादपभेदयोः॥३२॥ पुलः स्यात्पुलकेपुंसिविपुलेप्यन्यलिंगकः॥
फलंजातीफलेसस्येहेतूत्थेत्युष्टिलाभयोः॥३३॥ त्रिफलायांचकक्कोलेपि

यंगोतुफलीस्मृता॥ फालःपुंसिमहादेवेकालिंदीभेदनेपिच॥३४॥क्लीबंसीरोपकरणेत्रिषुकार्पासवाससि॥ बलिर्दैत्यप्रभेदेचकरचामरदंडयोः॥ ३५॥ उपहारेपुमान्स्त्रीतुजरयाश्लथचर्मणि॥ गृहदारुप्रभेदेचजठरावयवेपिच॥३६॥ बलंगंधरसेरूपेस्थामनिस्थौल्यसैन्ययोः॥ पुमान्हलायुधेदैत्यप्रभेदेवायसेपिच॥३७॥ बलयुक्तेऽन्यलिंगःस्याद्वाल्बालकेतुयोषिति॥ वल्लीस्यादजमोदायांचलत्यामपियोषिति॥३८॥ बालोनाकुंतलेश्वस्यकरिणश्चापिवालधौ॥ नालिकेरेहरिद्रायांमल्लिकाभिधपिस्त्रियां॥३९॥वाच्यलिंगोऽर्भकेमूर्खेक्लीबेरंपुन्नपुंसकं॥अलंकारांतरेमध्येबाली बालात्रुटिस्त्रियोः॥४०॥ वेलाकालेचसीमायामब्धेःकूलविकारयोः॥अक्लिष्टमरणेरागेईश्वरस्यचभोजने॥४१॥ भल्लुःस्यात्पुंसिभल्लूकेशास्त्रभेदेतुनद्वयोः॥ भल्लातक्यांस्त्रियांभल्लीभालंतेजोललाटयोः॥४२॥ भेलःप्लवेमुनौपुंसिभीरावज्ञेचवाच्यवत्॥ मलोऽस्त्रीपापविट्किट्टेकृपणेत्वभिधेयवत्॥४३॥ मल्लःपात्रेकपोलेचमत्स्यभेदेबलीयसि॥ मालःक्षेत्रेस्त्रियांस्रक्स्रगजोर्ल्यंतरेपुमान्॥४४॥ मालुःपत्रलतानार्योःस्त्रियांमूलंशिफाद्ययोः॥मूलविंशेतिकेवानामेलास्यान्मेलकेमसौ॥४५॥ मौलिःकिरीटेधम्मिल्लेचूडायामनपुंसकम्॥नाशोकद्रौस्त्रियांभूमौ लीलाकेलिविलासयोः॥४६॥ शृंगारभावचेष्टायां लोलःस्याद्वाच्यलिंगकः॥सतृष्णेचंचलेलोलाजिह्वाकमलयोस्त्रियां॥४७॥ व्यालोदुष्टगजेसर्पेश्वापदेनाऽन्यवत्खले॥ बिलंछिद्रेगुहायांचपुमानुच्चैःश्रवोहये॥॥४८॥शालस्तुशालपुंसिमुंगिक्षेत्रभिदोर्विधौ॥ शालुःकषायद्रव्येस्याच्चोरकाख्यौषधौपुमान्॥४९॥ शालिस्तुकलमादौचगंधमार्जारकेपुमान्॥शालाद्रुस्कंधशाखायांगृहगेहैकदेशयोः॥५०॥नाक्षेशिलमुंछेस्याद्द्वारपयांशिल्पीमता॥स्तंभशीर्षेशिलाशिल्पोशिलातुप्रस्तरेमता॥५१॥तथामनःशिलायांचद्वाराधस्थितदा

रुणि ॥ शीलं स्वभावे सद्वृत्ते शुक्लो योगांतरे सिते ॥ ५२ ॥ नपुंसकं तु रज
ते शूलो ऽस्त्री रोग आयुधे ॥ मृत्यकेतन योगेषु शूला स्यात्पण्ययोषि
ति ॥ ५३ ॥ शूलो भूभृति शैलं तु शैलेये तार्क्ष्यशैलके ॥ सालः पाद
पमात्रे स्यात्प्राकारे सर्जपादपे ॥ ५४ ॥ स्थालं भाजनभेदे ऽपि स्था-
ली स्यात्पाटले रवयोः ॥ ५५ ॥ स्थूलं कूटे ऽथ निष्प्रज्ञे पीवरे ऽप्यन्यलिंग
कः ॥ ५५ ॥ हालो हले पुमान्हाला मदिरायां च योषिति ॥ हेला स्त्रि
यामवज्ञायां विलासे वरयोषिताम् ॥ ५६ ॥ ॥ लत्रिः ॥ ॥
अनलो वसुभेदे ऽग्नौ वनिलो वसुवातयोः ॥ अर्गला त्रिषु कल्लोले
दंडे ऽनरकपाटयोः ॥ ५७ ॥ अरालः कुटिले सर्जरसे समददंतिनि ॥ अं
गुली करशाखायां कर्णिकायां गजस्य च ॥ ५८ ॥ अचला वसुधा
यां स्यादचलः शैलकीलयोः ॥ अमलं त्वभ्रके क्लीबं लक्ष्म्यां स्त्री निर्म
ले त्रिषु ॥ ५९ ॥ अंजलिस्तु पुमान्हस्तसंपुटे कुडवे ऽपि च ॥ अवेलस्त्वप
लापे स्यादवेला पूगचर्विते ॥ ६० ॥ आभीलं न द्वयोः कृच्छ्रे वाच्यलिंगं
भयानके ॥ इल्वला तारकाभेदे नाभेदे दैत्यमत्स्ययोः ॥ ६१ ॥ उत्पली
तु षचर्पे स्यात्क्लीबं कुष्ठप्रसूनयोः ॥ उपलः प्रस्तरे रत्ने शर्करायां तु यो-
षिति ॥ ६२ ॥ उज्वलो दीप्तशृंगारविशदेषु विकाशिनि ॥ उत्फुल्लं क
रणे स्त्रीणामुत्ताले ऽपि विकस्वरे ॥ ६३ ॥ उत्तालउत्कटे श्रेष्ठे विकरा
ले प्लवंगमे ॥ कमलं सलिले ताम्रे जलजे क्लोम्नि भेषजे ॥ ६४ ॥ मृगभे
दे तु कमलः कमला श्रीवरस्त्रियोः ॥ कपिला रेणुकायां च शिंशपागो
विशेषयोः ॥ ६५ ॥ पुंडरीककरिण्यां स्त्री वर्णभेदे त्रिलिंगकं ॥ नानले वा
सुदेवे च मुनिभेदे च कुक्कुरे ॥ ६६ ॥ कंबलो नागराजे स्यात्सास्नाप्राचा
रयोरपि ॥ कृमावप्युत्तरासंगे सलिले तु नपुंसकम् ॥ ६७ ॥ करालो दं
तुरे तुंगे भीषणे चाभिधेयवत् ॥ स सर्जरसे तैले ना क्लीबं कृष्णकुठेरके ॥
६८ ॥ कदलं त्रिषु कपाले ऽप्युपरागे नवांकुरे ॥ कलध्वनौ कंदली तु मृग
गुल्मभेदयोः ॥ ६९ ॥ कदला कदली रम्भा कदली कदली पुनः ॥ रम्भा

वृक्षे ऽथ कदली पताकामृगभेदयोः ॥ ७० ॥ कदला डिंबिकायां च शाल्मली भूरुहेपि च ॥ कपालो ऽस्त्री शिरोस्थ्नि स्याद् घटादेः शकलेव्रजे ॥ ७१ ॥ कंतीला तु द्वयोर्द्रोणीप्रभेदेनाकमेलके ॥ कल्लोलः पुंसि हर्षे स्यादुल्लोलवैरिणोरपि ॥ ७२ ॥ कामला रोगभेदे वा नानामरुवसंतयोः ॥ कामुके वाच्यलिंगोथ कालोलं नरकांतरे ॥ ७३ ॥ नाकुलाले द्रोणकाके विषभेदे तु न स्त्रियाम् ॥ काहला वाद्यभांडस्य भेदे चाप्सरसां भिदि ॥ ७४ ॥ काहली तु तरुण्यां स्यात्काहलश्चरणायुधे ॥ शब्दमात्रेपि पुल्लिंगस्त्रिषु शुष्के भृशे खले ॥ ७५ ॥ किट्टालः पुंसि ताम्रस्य कलशे लोहगूथके ॥ कीलालं रुधिरे तोये कुशलः शिक्षिते त्रिषु ॥ ७६ ॥ क्षेमे च सुकृते चापि पर्यासो च नपुंसकम् ॥ कुवलं चोत्पले मुक्ताफलेपि बदरीफले ॥ ७७ ॥ कुड्मलो मुकुले पुंसि नर्द्वयो नरकांतरे ॥ कुटिला नगरपाद्यां स्त्री भुग्ने वाच्यलिंगकः ॥ ७८ ॥ कुंतलश्चषके बाले जवे पुंभूम्नि नीवृति ॥ कुलालः कुक्कुभे कुंभकारे स्त्री त्वंजनांतरे ॥ ७९ ॥ कुंभिलः शालमीने च चौरे श्लोकार्थचौरयोः ॥ कुद्दालः स्यात्पुमान्भूमिदारणे युगपत्रके ॥ ८० ॥ कुचेला विद्धपर्ण्यां स्त्री वाच्यवत्तु कुवाससि ॥ कुल्मलं शंकुसंकीर्णश्वभ्रे ना तु तुषानले ॥ ८१ ॥ कुंडलं कर्णभूषायां पाशेपि वलयेपि च ॥ कांचनद्रुगुडूच्योः स्त्री केवलः कुहने पुमान् ॥ ८२ ॥ नपुंसकं तु निर्णीते वाच्यवच्चैककृत्स्नयोः ॥ केवलो ज्ञानभेदेथ कोमलं मृदुले जले ॥ ८३ ॥ कोहलो वाद्यभेदे स्यान्नाट्यशास्त्रप्रवक्तरि ॥ ग्रंथिलस्तु करीरद्रौ विकंकतनरो पुमान् ॥ ८४ ॥ सग्रंथो त्रिषु गंधोली भद्रशाल्योश्च योषिति ॥ गरलं तृणपूले च विषे मासे नपुंसकं ॥ ८५ ॥ गोपालो नृपगोपेशगो कुले मुसले हले ॥ गोरिलस्तु पुमान् लोहचूर्णे स्याद्गौरसर्षपे ॥ चपलः पारदे मीने चोरके प्रस्तरांतरे ॥ चपला कमला विद्युत्पुंश्चली पिप्पलीषु च ॥ ८७ ॥ नपुंसकं तु शीघ्रे स्याद्वाच्यवत्तरले चले ॥ चत्वालो होमकुंडे स्यात्पुंसि दर्भेपि दृश्यते ॥

॥८८॥ चंडिलः पुंसिवास्तूकशाकेभर्गेचनापिते॥ चंचलातुतडिल्लक्ष्म्यो श्चंचलः कामुकेनिले॥ ८९॥ चूडालातूच्चटायांस्त्रीचूडावतिचवाच्य वत्॥ छगलंनीलवस्त्रेनाछागेस्त्रीवृद्धदारके॥९०॥ जंबालः शैवलेपं केजगलोमदनद्रुमे॥ भेदकेपिष्टमद्येच पुंसिधूर्तेऽभिधेयवत्॥९१॥ ज टिलापिप्पलीमांस्योर्जटायुक्तेतुवाच्यवत्॥ जंगलंनिर्जनस्थानेत्रिलि गंपिशितेस्त्रियां॥९२॥ जंभलः पुंसिजंबीरेबुद्धदेवांतरेपिच॥ जंबूल स्तुपुमाञ्जंबूविटपेकेतकच्छदे॥९३॥ जांगलीविषविद्यायांजांगलं जालिनीफले॥ जांगलीशूकशिंब्यांस्त्री जांगलोनाकपिंजले॥९४॥ तरलंचंचलेषिड्गेभास्वरेपित्रिलिंगकम्॥ हारमध्यमणौपुंसियवागू स्तरयोःस्त्रियाम्॥९५॥ तंडुलः स्याद्विडंगेचधान्यादिनिकरेपुमान्॥ तमालस्तिलकेखड्गेतापिच्छेवरुणद्रुमे॥९६॥ तांबूलीनागवल्ल्यांस्त्री क्रमुकेतुनपुंसकं॥ तालतलोरुजिपाकेचलोहकूटेमनोजवे॥९७॥ तुमु लः कलिवृक्षेनाक्लीबंतुरणसंकुले॥ तैतिलोगंडकेपुंसिक्लीबंतुकरणां तरे॥९८॥ दुकूलंश्लक्ष्णवस्त्रेस्यात्क्षौमेनधवलागवि॥ वृषस्त्रेष्ठेपुमा न्वाच्यलिंगः शुक्लेचसुंदरे॥९९॥ नकुलौकुक्कुटीमांस्योः पशौपांडवयोः पुमान्॥ नाकुलीकुक्कुटार्कंदेरास्नायांचविकेस्त्रियां॥१००॥ नाभीलं वंक्षणेनार्याः कृच्छ्रगर्भांडयोरपि॥ निचूलस्तुनिचोलेस्यादिज्जलाख्य महीरुहे॥१०१॥ निर्मलंस्यात्तुनिर्माल्येचाभ्रकेचनपुंसकं॥ मलहीने ऽन्यलिंगंच निस्तलंवर्तुलेचले॥१०२॥ निष्कलंतुकलाशून्येनष्ट वीर्येचवाच्यवत्॥ नेपालीतुनवमालीकुनटीस्तुवहास्तुच॥३॥ पल लंतिलचूर्णेच पंकेमांसेनपुंसकं॥ नाराक्षसेऽथपटलंपिटकेचपरिच्छ दे॥४॥ छदिर्दृग्रोगतिलकेक्लीबंप्रजेपुनर्नवा॥ प्रतलंपातालभेदेततां गुलिकरेपुमान्॥५॥ पटोलंवस्त्रभेदेनौ पयोज्योत्स्न्यांतुयोषिति॥ प्र वालोऽस्त्रीकिसलयेवीणादंडेचविद्रुमे॥६॥ पंचालीपुत्रिकागी- त्योःस्त्रियांपुंभूम्निनीवृति॥ पांसुलः पुंश्चलेशंभोः खट्वांगेऽन्यसती

भुवोः॥७॥ पाकलंकुष्ठभैषज्येपुंसिस्यात्कुंजरज्वरे॥ पाञ्चालेपाञ्चनेना
ःश्रीवाधनद्रव्यवातयोः॥८॥ पाटलापाटलीस्त्रीस्यादस्यपुष्पेपुनर्नना
॥आशुधान्येपुमान्श्वेतरक्तवर्णेपिवाच्यवत्॥९॥ पातालंनागलोके-
स्यादिवरेवडवानले॥ पातिलीवागुरायांस्यान्नारीपात्रप्रभेदयोः॥१०॥
पिप्पलंसलिलेवस्त्रच्छेदभेदेचनातरौ॥ निरंशुकेपक्षिभेदेकणायांपि
प्पलीस्मृता॥११॥ पिचुलोऽम्बुकेपिस्याद्विज्जलेजलवायसे॥ पिंगलो
नागभिद्रुद्रचंडांशुपार्श्विपार्श्विके॥१२॥ निधिभेदेकपावह्नौपुंसिस्यात्कपि
लेऽन्यवत्॥ स्त्रियांवेश्याविशेषेचकरिण्यांकुमुदस्यच॥१३॥ पित्तला
तोयपिप्पल्यांस्त्र्यन्यवत्पित्तसंयुते॥ क्लीबंतुतैजसद्रव्ये पिच्छलोवि-
ज्जिनेऽन्यवत्॥१४॥ स्त्रीपोतिकाशिंशपयोःशाल्मलीसिंधुभेदयोः॥ पु-
द्गलःसुंदराकारेत्रिषुपुंस्यात्मभेदयोः॥१५॥ पेशलोरुचिरेदक्षेफेनि
लोऽरिष्टपादपे॥ नासफेनेत्रिषुक्लीबंकोलीमदनयोःफले॥१६॥ बहुला
नीलिकायांस्यादेलायांगवियोषिति॥ कृत्तिकासुस्त्रियांभूम्निविहाय
सिनपुंसकं॥१७॥ पुंस्यग्नौकृष्णपक्षेचवाच्यवत्प्राज्यकृष्णयोः॥ बर
ला बारला चापिगंधोलीहंसकांतयोः॥१८॥ बार्दलंदुर्दिनेमेलानं
दायांबार्दलःस्मृतः॥ मंगलासितदूर्वायामुमायांपुंसिभूमिजे॥१९॥ न
पुंसकंतुकल्याणेसर्वार्थरक्षणेपिच॥ मंडलंपरिधौकोठेदेशेद्वादशरा
जके॥२०॥ क्लीबेऽथनिवहेबिंबेत्रिषुपुंसितुकुक्कुरे॥ मंजुलंत्रिषुमंजौ
ना जलरंकौनपुंसके॥२१॥ जलांचलेनिकुंजेच महिलाफलिनीस्त्रि
योः॥ मातुलोव्रीहिभिन्मातुर्भ्रातोन्मदनद्रुमे॥२२॥ धुस्तूरेमान्व-
लोवंदिचौरेचग्राहरोगयोः॥ मुसलंस्यादयोग्रेतुपुन्नपुंसकयोःस्त्रि
याम्॥२३॥ तालमूल्यामाखुपर्णीगृहगोधिकयोरपि॥ मृणालंनलदे-
क्लीबेस्त्रीनपुंसकयोर्बिसे॥२४॥ मेखलाखड्गबंधेस्यात्कांचीशैलनि
तंबयोः॥ यमलंयुगलेक्लीबेयमलीचोटिकाद्वये॥२५॥ रसाला
रसनादूर्वाविदारीमार्जितासुच॥ रसालंसिल्हकेबोलेरसालश्चेक्षु

चूतयोः॥२६॥ रामिल्लोरमणेकामेलांगुलंपुच्छशेफसोः॥ लांगली तो
यपिप्पल्यां क्लीबंतुकुसुमांतरे॥२७॥ गोदारणे तृणराजगृहदारुविशेषयोः
॥ लोहलः शृंखलाचार्ये ऽव्यक्तवाजिनिचत्रिषु॥२८॥ वंजुलः पुंसितिनि
निशेवेतसाशोकयोरपि॥ वंठालो युद्धभेदेस्त्रनोकायांचखनित्रके॥
२९॥ वातूलः पुंसिवात्यायांवान्यवन्मारुतासहे॥ वामिलो दांभिकेवा
मोन्त्रिषुस्याद्वि मलास्त्रियां॥३०॥ शातलायांभुवोभेदे निर्मलेत्वभि-
धेयवत्॥ विपुलः पृथुलेगाधेमेरुपश्चिमभूधरे॥३१॥ विदुलस्तुमु
मानंबुवेतसेवेतसेपिच॥ विडालो नेत्रपिंडेस्याद्वृषदंशककेपुमान्
॥३२॥ विशाला लिंद्रवारुण्यामुज्जयिन्यांतुयोषिति॥ मृगपक्षिभि-
दोःपुंसिपृथुलेत्वभिधेयवत्॥३३॥ वृषलो गृंजनेशूद्रेचंद्रगुप्तेनरा
जनि॥ शाकलंत्वचिखंडेस्याद्रागवस्तुनिवल्कले॥३४॥ शंबलो ऽस्त्री
संबलवत्कूलपाथेयमत्सरे॥ शयालुः स्यादजगरेनिद्राशीलेचकुक्कुरे
॥३५॥ श्रद्धालुर्दोहदिन्यांस्त्रीश्रद्धायुक्तेतुवाच्यवत्॥ श्यामलः पि
प्पलेकृष्णेशार्दूलो राक्षसांतरे॥३६॥ व्याघ्रेचपशुभेदेचसत्तमेनू
त्तरस्थितः॥ शाल्मलिस्तरुभेदेस्याद्द्वीपभेदेपिचद्वयोः॥३७॥ श्रीफ
लः पुंसिमालूरेधात्रीनीलिकयोःस्त्रियाम्॥ शीवलंस्याच्चशैवालेशी
लेयेचनपुंसकं॥३८॥ शीलंपुष्पकाशीशेशैलजेमलयोद्भवे॥ पु-
मानासनपर्णास्याच्छिशिरेवाच्यलिंगकम्॥३९॥ शृगालो वंचकेदै
त्यभेदेनाडमरेस्त्रियाम्॥ शृंखला पुंस्कटीवस्त्रबंधेचनिगडेत्रिषु॥
४०॥ शैवलंपद्मकाष्ठेस्याच्छैवालेपिपुमानयं॥ शोष्कलः शष्क
मांसस्यपणाकेपिशिताशिनि॥४१॥ षंडाली तैलमानेच सरसीका
मुकस्त्रियोः॥ सरलः पद्मकाष्ठेनाऽथोदारावक्रयोस्त्रिषु॥४२॥ सं
कुलंत्रिषुविस्पष्टवाचिव्यासेऽथसमला॥ नवमालीचर्मकषागुंजा
सुपाटलो स्त्रियां॥४३॥ संधिला तु सुरंगायांनदीमंदिरयोःस्त्रियां
॥ सिध्मला मत्स्यविकृतौवाच्यवत्तुकिलासिनि॥४४॥ सुवेलः

प्रणतेशांतेत्रिषुनापर्वतांतरे॥ सुतलोऽट्टालिकाबंधनागलोकप्रभे
दयोः॥ ४५॥ हिंगुलोवर्णकद्रव्येनाभेदात्स्यात्तुहिंगुली॥ हेमलः
स्वर्णकारेस्यात्कृकलासेशिलांतरे॥ ४६॥ ॥ लचतुः॥ ॥
अक्षमालाऽक्षसूत्रेस्यादरुंधत्यामपिस्त्रियाम्॥ अंकपालीपरी
रंभेधात्रीवेदिकयोःस्त्रियां॥ ४७॥ अथातिबलःप्रबलेत्रिषुस्त्रीतौ
षधीभिदि॥ उदूखलंगुग्गुलौस्यादुलूखलेऽपिनद्वयोः॥ ४८॥ ए-
काष्ठीलावनतिक्तिकौषधौपुंसिबकपुष्पे॥ कलकलउक्तःकोला
हलेतथासर्जनिर्यासे॥ ४९॥ अथकर्मफलंकर्मरंगकर्मविपाकयोः
कंदरालःपुमानार्द्रभांडेप्लक्षतरावपि॥ कमंडलुःस्यात्करकेन-
स्त्रीनाप्लक्षपादपे॥ कुतूहलंकौतुकेस्यात्प्रशस्तेपिचदृश्यते॥ ५१॥
खतमालस्तुपुंल्लिंगोधूमेपिचबलाहके॥ गंडशैलोललाटेस्याच्च्युत
स्थूलोपलेगिरेः॥ ५२॥ गंधफल्यपिगुंद्रायांचंपकस्यचकोरके॥ चक्र
वालोऽद्रिभेदेस्याच्चक्रवालंतुमंडले॥ ५३॥ जलांचलंस्वतोवारि
निर्गमेशैवलेपिच॥ दलामलंमरुबकेदमनेऽपिनपुंसकं॥ ५४॥ ध्व
निनालातुवीणायांवेणुकाहलयोरपि॥ स्यात्परिमलोऽतिमर्दोत्थि-
मनोहरगंधयोश्चापि॥ ५५॥ स्मरतोषमर्दविकसच्छरीररागादिसौर
भेपुंसि॥ अथपोटगलःपुंसिनलेचकाशमत्स्ययोः॥ ५६॥ भवे-
द्बहुफलोनीपेनाऽम्लकस्यांतुयोषिति॥ भस्मतूलंग्रामकूटेपांसु
वर्षेहिमेपिच॥ ५७॥ भद्रकालीतुगंधोल्यांकात्यायन्यामपिस्त्रियां
॥ महाकालोमहादेवेकिंपाकेप्रथमांतरे॥ ५८॥ भवेन्मदकलोम
त्तेभेमदाव्यक्तवाचिनोः॥ महाबलंसीसकेतिबलायांस्त्रीबलोत्क
टे॥ ५९॥ त्रिलिंगंमणिमालातुहारेदंतक्षतांतरे॥ महानीलोभृंग
राजेमणिनागविशेषयोः॥ ६०॥ मुक्ताफलंतुकर्पूरेमौक्तिकेलवलीफ
ले॥ स्यान्मृत्युफलाकदल्यांमहाकालफलेपुमान्॥ ६१॥ भवेद्धव
फलोवेणौमासीकुटजयोरपि॥ रजस्वलापुष्पवत्यांस्त्रियांस्यात्

सौरभेपुमान् ॥६२॥ बालकेलिः कल्लालापषड्गदंतक्षतेपुमान् ॥ अथवायुफलंशक्रकार्मुकेकरकेपिच ॥६३॥ भवेद्धिचकिल्लो मल्लीप्रभेदेमदनेपुमान् ॥ बृहन्नलागुडाकेशेमहापोटगलेपुमान् ६४॥ सदाफलःस्कंधफलेनारिकेलेप्युदुंबरे ॥ सिनीवालीतुदृष्टेंदुकलामादुर्गयोःस्त्रियां ॥६५॥ अथसौवर्चलंसर्जक्षारेन्वलवणांतरे ॥ हस्तिमल्लःश्वमातंगेशंखनागेविनायके ॥६६॥ हरितालंधातुभेदेस्त्रीदूर्वाकाशरेखयोः ॥ हलाहलोब्रह्मसर्पेअंजनायां विषेस्त्रियाम् ॥६७॥ ॥लपंच॥ ॥आस्कनीचलआख्यातःकन्यापालकयज्वनोः ॥ उदंडपालःपुंसिस्यात्सर्वमत्स्यप्रभेदयोः ॥६८॥ एककुंडलआख्यातोबलभद्रेधनाधिपे ॥ कूपीटपालउद्दिष्टःकेलितानसमुद्रयोः ॥६९॥ स्यात्सांडुकंबलःश्वेतप्रावारग्रावभेदयोः ॥ भवेत्करतालीतुदूतिकायांशिरःस्त्रजि ॥७०॥ ॥ ॥ ॥इतिलांतवर्गः॥ ॥२०२३॥ ॥वैकम्॥ ॥

वः सांत्वनेचवातेचवरुणेचनिगद्यते ॥ वंप्रचेतसिजानीयादिवार्थेचतदव्ययं ॥१॥ स्वःस्यात्पुंस्यात्मनिज्ञातौत्रिष्वात्मीयेधनेस्त्रियां ॥ ॥ ॥ ॥लद्विः॥ ॥अविर्नार्थिरवौमेषेशैलेमूषिककंबले ॥२॥ अश्वःपुंजातिभेदेचतुरगेचपुमानयं ॥ ऊर्ध्वंस्यादुच्छ्रितेतुंगेचोपरिष्टादपिस्मृतं ॥३॥ क्षवःक्षुतेराजिकायांकविर्वाल्मीकिशक्रयोः सूरौकाव्यकरेपुंसिखलीनेस्यात्तुयोषिति ॥४॥ कृण्वंपापेमुनौपुंसिक्लिपव्वंबीजेन्वशीधुनः ॥ पापेक्लीवंनपुंसकेशंडेन्यवदविक्रमे ॥ ॥५॥ स्यात्तुग्रीवाकंधरायांतच्छिरायांचयोषिति ॥ चार्वीतुशोभनाबुद्ध्योर्ज्योत्स्नाधनदभार्ययोः ॥६॥ छविःशोभारुचोर्योपिजुवोवेभवतित्रिषु ॥ पुल्लिंगस्तुभवेद्वेगेचोडुपुष्पेजवास्मृता ॥७॥ जीवःप्राणिनिवृत्तौचवृक्षभेदेबृहस्पतौ ॥ जीवाजीवंतिकामौर्वीवचाशिंजितभूमिषु ॥८॥ नस्त्रीतुजीवितेतत्त्वंस्वरूपेपरमात्मनि ॥ स्याद्विल

बितनृत्येचद्रवःप्राद्रवनर्मणोः॥९॥रसेपिदवदावौतुवनवन्हौव
नेप्युभौ॥द्वंद्वंरहस्यकलहेतथामिथुनयुग्मयोः॥१०॥ दार्वीदारु
हरिद्रायांतथागोजिह्विकौषधौ॥द्यौःस्त्रीस्वर्गेचगगनेदिवं-
क्लीबंनयोःस्मृतं॥११॥देवोमेघेसुरेराज्ञिस्यान्नपुंसकमिंद्रिये॥दे
वीकृताभिषेकायांतेजनीस्पृक्कयोरपि॥१२॥धवःपुमान्धवेधूर्ते
पत्यौवृक्षांतरेपिच॥ध्रुवःशंकौहरेविष्णौवटेचोत्तानपादजे॥१३
वस्रुयोगभिदोःपुंसिक्लीबंनिश्चितनर्कयोः॥स्त्रीमूर्वाद्योःशालप
र्ण्यांगीतिस्रुक्भेदयोस्त्रिषु॥१४॥संततेशाश्वतेचाथनवनव्ये
पुमान्स्तुतौ॥नीवीपरिपणेस्त्रीणांकटीवसनबंधने॥१५॥प
क्वंपरिणतेपिस्याद्विनाशाऽभिमुखेत्रिषु॥प्लवःस्यात्प्लवनेभेलेप्ल
वोश्वपचेपपौ॥१६॥जलकाकेचकुलकेप्रवणेपर्कटीद्रुमे॥कारं
डवाख्यविहगेशब्देप्रतिगतौपुमान्॥१७॥कैवर्तीमुस्तकेगंधतृणे
पिस्यान्नपुंसकम्॥पार्श्वंकक्षांतरेचक्रोपांतेपर्शुगणेपिच॥१८॥
प्राध्वंतुप्रणतेचातिदूरवर्त्मनिबंधने॥पृथ्वीभूमौमहत्यांच ल
क्ष्म्यांकृष्णाजीरके॥१९॥भवःक्षेमेशसंसारेसत्तायांप्राप्तिजन्मनोः
भावःसत्तास्वभावाभिप्रायचेष्टात्मजन्मसु॥२०॥क्रियालीला-
पदार्थेषुविभूतिबुधजंतुषु॥रत्नादौचाथरेवास्यान्नील्यांरत्यां
नदीभिदि॥२१॥लवोलेशेविनाशेचछेदनेरामनंदने॥लट्वा
करंजभेदेस्यात्फलेवाद्येखगांतरे॥२२॥ लघ्वीलाघवयुक्ता-
यांप्रभेदेस्यंदनस्यच॥विश्वावतिविषायांस्त्रीजगतिस्यान्न
पुंसकं॥२३॥ननाशकत्यांपुंसिदेवप्रभेदेषुखिलेत्रिषु॥बिल्वं
फलेश्रीफलेनाशवःस्यात्कुणपेपुमान्॥२४॥नपुंसकंतुपानी
येशिवभूर्जेनृपेपुमान्॥शिवोमोक्षेमहादेवेकीलकग्रहयोग
योः॥२५॥ बालकेगुग्गुलौवेदेपुंडरीकद्रुमेपुमान्॥सुखक्षेम
जलेक्लीबंशिवाझाटामलौषधौ॥२६॥अभयामलकीगौरीफे

रुसरुरुस्लास्रुच॥शिवस्तुभूर्जपत्रेस्यात्तथोदारमहीपतौ॥२७॥शु
ल्वंताम्रेयज्ञकर्मण्याचारेजलसन्निधौ॥सत्वंगुणेपिशाचादौबलेद्र
व्यस्वभावयोः॥२८॥आत्मत्वेव्यवसायासुचित्तेष्वस्त्रीतुजंतुषु॥स
त्वोयज्ञेन्चसंधानेसांत्वंदाक्षिण्यसामनोः॥२९॥स्नुवाद्वयोर्होमपात्रे
शल्लकीमूर्वयोःस्त्रियाम्॥ह्रवआज्ञाध्वराह्वानेह्रस्वोन्यकुरववयो
स्त्रिषु॥३०॥ ॥वत्रि॥ अस्त्रीवंबशिरेशिग्रौनामत्वेपुनरन्य
वत्॥अभावोमरणेसत्वेआहवोयुद्धयज्ञयोः॥३१॥आर्तवंस्त्रीर
जेपुष्पेक्लीबंस्यादृतुजेत्रिषु॥आभ्रवोंगीकृतौक्लेशेनान्यवद्वचनस्थिते
॥३२॥उद्भवोयादवभिदिमहेन्चक्रतुपावके॥उत्सवोमहउत्सेकेइच्छा
प्रसवकोपयोः॥३३॥कारवीमधुरादीप्यत्वक्पत्रीकृष्णजीरके॥कित
वस्तुपुमान्मत्तेवंचकेकनकाह्वये॥३४॥केशवोःजेचपुन्नागेपुंसिके
शवतित्रिषु॥कैतवंतुछलेद्यूतेकैरवःकितवेरिपौ॥३५॥नपुंसकंच
कुमुदेचंद्रिकायांतुकैरवी॥गांडीवोगांडिवश्चाःस्त्रीकार्मुकेःर्जु
नकार्मुके॥३६॥गालवस्तुमुनौलोध्रेतांडवोःस्त्रीतृणांतरे॥ग्रवे
दुद्धनृत्येच्त्रिदिवासरिदंतरे॥३७॥पुंसिस्वर्गेदीदिविर्नाधिषणे
ःन्नेतदस्त्रियाम्॥निष्पावःशूर्पपवनेराजमेषेकडंगके॥३८॥पव
नेशिंबिकायांनानिर्विकल्पेःन्यलिंगकः॥निन्हवःपुंसिनिकृता व
विश्वासापलापयोः॥३९॥पल्लवोःस्त्रीकिसलयेविटपेविस्तरेवने॥शृं
गारेःलक्तरागेस्त्री प्रभावःशांतितेजसोः॥४०॥पंचत्वंपंचानांभावेप्रा
णानामत्ययेपिच॥प्रभवोजन्ममूलेस्याज्जन्महेतौपराक्रमे॥४१॥ज्ञा
नस्यचादिमस्थानेप्रसवोगर्भमोचने॥उत्पादेस्यादपत्येपिफलेच
कुसुमेपिच॥४२॥प्रसेवःपुंसिवीणांगेस्यूतेचपार्थिवोनृपे॥पार्थि
वीतुसीतायांस्त्रीपृथिव्याविकृतौत्रिषु॥४३॥पुंगवःस्याद्बलीवर्दे
प्रभेदेप्यौषधस्यच॥उत्तरस्थःपुनःश्रेष्ठेफरवोजंबुकेस्तपे॥४४॥
बल्लवःसूपकारेस्यात्भीमसेनेचगोदुहि॥बांधवोबंधुरुन्द्रहोभ्रा

गर्वो गजधन्विनोः॥ ४५॥ शुक्रे परशुरामे च भार्गवी पार्वतीश्रियोः॥ दू
र्वायां भैरवः पुंसि शंकरे भीषणे त्रिषु॥ ४६॥ माधवोऽजे मधौ राधेया
दवे नास्त्रियां मिसौ॥ मधुशर्करावासंतिकुट्टनीमदिरासु च॥ ४७॥ गोम
हिष्यादिसंपत्तौ यादवः पुंसि केशवे॥ राजीवं नलिने ना तु भेदे हरिण
मीनयोः॥ ४८॥ राघवोऽब्धेर्महामीनभेदे च रघुवंशजे॥ रौरवो नरके
घोरे खड्वा द्विजयोषिति॥ ४९॥ अम्बायां कुंभदास्यां च नारीजात्यंतरे
पि च॥ वाडवं करणे स्त्रीणां घोटकौघे नपुंसकं॥ ५०॥ पातालेन स्त्रियां पुं
सि ब्राह्मणे वडवानले॥ विभवो रैमोक्षैश्वर्ये विद्रवो विद्रुतौ धियि॥ ५१॥
विभावः स्यात्सखिचये रसस्योद्दीपनादिषु॥ शात्रवं भावसंहत्योः शत्रू
णां शात्रवो द्विषि॥ ५२॥ षाडवो गानरसयोः सचिवो मंत्रिचेटयोः॥ स
हाये संभवो हेतावुत्पत्तौ मेलके पि च॥ ५३॥ आधारानतिरिक्ते स्यादाधे
यस्य निगद्यते॥ सुग्रीवो वासुदेवस्य हये शाखामृगेश्वरे॥ ५४॥ सुष
वी कारवेल्ले स्यात्कृष्णाजीरकजीरयोः॥ सैंधवः स्त्री मणिमंथे नाश्वे
सिंधुभवे त्रिषु॥ ५५॥

॥ वचतुः॥

॥ अनुभावः प्रभावे स्यान्नि
श्चये भावबोधके॥ भवेदभिषवः स्नाने मद्यसंधानयज्ञयोः॥ ५६॥
अपह्नवस्तु पुल्लिंगः स्मृतः स्नेहापलापयोः॥ आदीनवः पुमान्दोषे परि
क्लिष्टदुरंतयोः॥ ५७॥ उपप्लवः सैंहिकेये विप्लवोत्पातयोरपि॥ कुशी
लवस्तु वाल्मीकौ नटयाचकयोरपि॥ ५८॥ जलबिल्वः कर्कटे स्यात्सं
धांगे जलचत्वरे॥ जीवंजीवश्चकोरे स्यात् द्रुमभेदे पि पुंस्ययं॥ ५९॥ धा
मार्गवस्तु पुंसि स्यादपामार्गे च घोषके॥ पारिप्लवश्चाकुले स्यात्त्रिषु चंचले व
पशामवः॥ ६०॥ तिरस्कारे विनाशे च पुंसि पारशवः पुमान्॥ परस्त्री
तनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च॥ ६१॥ पुटग्रीवस्तु पुल्लिंगो गर्गरीता
म्रकुंभयोः॥ बलदेवो बलवाते त्रायमाणौषधौ स्त्रियाम्॥ ६२॥ रंतिदे
वस्तु नृपतिभेदे च गरुडध्वजे॥ रोहिताश्वोऽग्नौ च भानौ हरिश्चंद्रनृपात्म
जे॥ ६३॥ अथ शीतशिवं क्लीबं शैलेयमणिमंथयोः॥ पुंसि सक्तुफलाद्द

क्षेतयामधुरिकौषधौ॥ ६४॥ सहदेवाबलादंडोत्पलयोः शारिवौषधौ॥ सहदेवी तु सर्पाक्ष्यां पुंसि स्यात्पांडवे पुनः॥ ६५॥ ॥ वपंच ॥ आशितंभवमन्नाद्येऽन्नप्राचुर्ये आशितंभवा॥ ॥ इति वांतवर्गः ॥ ॥ शद्विः॥ ॥ अंशुः प्रभाकिरणयोर्नाशांत्तृष्णादिशोः स्त्रियाम्॥ आशुर्धान्यांतरे शीघ्रे पीशालांगलदंडके॥ १॥ ईशः प्रभौ महादेवे काशी वाराणसीपुरे॥ नस्त्रियां तृणभेदे स्यात्कीशो दिगंबरे कपौ॥ २॥ कुशी फाले कुशा रज्ज्वां त्रिषु पापिष्ठमत्तयोः॥ योक्त्ररामसुतद्वीपेन दर्भे स्त्री कुशं जले॥ ३॥ केशाः स्यात्पुंसि वरुणे न्हीबेरे कुंतलेपि च॥ क्लेशो दुःखेपि कोपेपि व्यवसायेपि दृश्यते॥ ४॥ कोशो स्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके॥ जातिकोशोर्थसंघाते पेश्यां शब्दादिसंग्रहे॥ ५॥ दर्शस्तु स्यादमावास्यायागभेदावलोकने॥ दंशः कीटविशेषे च वर्मदंशनयोः पुमान्॥ ६॥ दशावस्थादीपवर्त्योर्वस्त्रांते भूम्नि योषिति॥ दृक् स्त्रियां दर्शने नेत्रे बुध्यौ च त्रिषु वीक्षके॥ ७॥ नाशः पलायनेपि स्यान्निधनानुपलंभयोः॥ निशा दारुहरिद्रायां स्यात्त्रियामाहरिद्रयोः॥ ८ पशुर्मृगादिदेवाजेनाऽव्ययं पश्युदर्शने॥ पाशः केशादिपूर्वः स्यात्तत्संघे-कर्णपूर्वकः॥ ९॥ सुकर्णे च स्वसामर्थ्यान्मृगपश्यादिबंधने॥ पांशुर्धूलौ च सस्यार्थचिरसंचितगोमये॥ १०॥ पेशी सुपक्वकलिके मांस्यां खड्गपिधानके॥ मांसपिंड्यामंडभेदे राशिर्मेषादिपुंजयोः॥ ११॥ पुंसि वंशः कुले वेणौ पृष्ठावयववर्गयोः॥ वशा वंध्यासुतायोषास्त्रीगवीकरणीषु च॥ १२॥ त्रिष्वायत्ते क्लीबमायत्तत्त्वे नेच्छाप्रभुत्वयोः॥ विट् पुंसि मनुजे वैश्ये वेशो वेश्यागृहे गृहे॥ १३॥ नेपथ्ये च शशो बोले लोध्रे नृपशुभेदयोः॥ स्पशो रुजायां दाने च स्पर्शने स्पर्शकेपि च॥ १४॥ स्पशः स्यात्संपराये च प्रणिधावपि पुंस्ययं॥ ॥ शत्रिः॥ ॥ आदर्शो दर्पणे टीकाप्रतिपुस्तकयोरपि॥ १५॥ उड्डीशो ग्रंथभेदे स्यात्दुड्डीशश्चंड्रिकापतौ॥ उपांशुर्जपभेदे स्यादुपांशु विजनेऽव्ययं॥ १६॥ कपिश

स्त्रिषु श्यावे स्त्रीमाधव्यां सिल्हके पुमान्॥ कर्कशः काशमर्देक्षु कां-
पिल्येष्वथ सो पुमान्॥ १७॥ त्रिषु साहसिके क्रूरे दृढामसृणनिर्दये॥ की-
नाशः कर्षकक्षुद्रोपांशुघातिषु वाच्यवत्॥ १८॥ यमे ना कुलिशो न-
स्त्री दंभोलौ नाऽऽझषांतरे॥ गिरीशो गिरिपतौ वाचस्पतौ शंकरयोः पुमान्
१९॥ तुंगीशास्तु पुमान् गौरीवल्लभे हिमदीधितौ॥ दुःस्पर्शो धन्वयासे
ना कंटकार्यां स्त्रियां त्रिषु॥ २०॥ खरस्पर्शेऽथ निस्त्रिंशः खड्गे ना निर्दये
त्रिषु॥ निर्वेशस्तु पुमान् भोगे वेतने मूर्छनेऽपि च॥ २१॥ निवेशः पुंसि विन्या
से शिबिरोद्वाहयोरपि॥ निर्देशः शासनेऽपि स्यात्कथनोपांतयोरपि॥ २२॥
नीकाशो निश्चये तुल्ये पलाशं छदने मतं॥ शटी किंशुकरक्षः सु पुंसि
स्याद्धरिते त्रिषु॥ २३॥ प्रकाशस्तु स्फुटे ख्यातः प्रहासातपयोरपि॥ प्रदे
शो देशमाने स्यात्तर्जन्यं कुष्ठसम्मिते॥ २४॥ भित्तावप्यथ पिंगाशी नीलि
कायां न पुंसकं॥ जात्यस्वर्णे पुमान् पल्लीपतौ मत्स्यांतरेऽपि च॥ २५॥ बा
लिशश्च शिशौ मूर्खे भूकेशः शैवले वटे॥ भूकेश्यथ वल्गुजेऽपि स्याल्लोम
शो मुनिमेषयोः॥ २६॥ लोमान्विते स्त्रियां काकजंघामांसीवचासु च॥ शू
कशिंबि महामेदा काशीशो शाकिनीभिदि॥ २७॥ विवशास्त्रिष्ववश्या
त्मारिष्टदुष्टधियोरपि॥ विकाशः पुंसि विजने प्रकाशे सदृशं समे॥ २८
॥ उचिते चाऽथ संवेशः स्वापस्त्रीरतबंधयोः॥ सुरवाशो वरुणे राजनि-
निशे सुखभोजने॥ २९॥ हृताशो निर्दये चाशारहितेऽपि शुनेऽपि च॥ ॥
शाचतुः॥ ॥ अपदेशः पुमान् लक्ष्ये निमित्तव्याजयोरपि॥ ३०॥ अ
पभ्रंशस्तु पतने भाषाभेदापशब्दयोः॥ आश्रयाशः पुमान् वन्हौ त्रि-
षु चाश्रयनाशके॥ ३१॥ उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि॥ उ
पदंशो निदंशे च लिंगरोगांतरेऽपि च॥ ३२॥ क्रूरदृक् पिशुने वाच्यलिंगः
पुंसि शनैश्चरे॥ खंडपर्शुः पर्शुरामे शंकरे चूर्णलेपिनि॥ ३३॥ खंडामल
कभैषज्ये सिंहिकातनयेऽपि ना॥ जीवितेशो यमे पुंसि त्रिषु स्यात्जीविते
श्वरे॥ ३४॥ नागपाशः पुमान् स्त्रीणां करणे वरुणायुधे॥ पंचदशीं-

त्वमावास्यापौर्णमास्योश्चयोषिति॥ ३५॥ प्रनिष्कशः सहायेस्याद्वार्त्ता हरपुरोगयोः॥ परिवेशोवेष्टनेस्यात्सन्निधानेपिपुंस्ययं॥ ३६॥ पादपाशीखट्टिकायांशृंखलायामपिस्त्रियां॥ पुरोडाशो हविर्भेदे चमस्यांपिष्टकस्यच॥ ३७॥ हुतशेषेचभूमिस्पृक्पुंसिमानववैश्ययोः॥ ॥ इतिशांतवर्गः॥ ॥षैकम्॥ ॥षः कचेपुंसिविज्ञेचश्रेष्ठेस्यादभिधेयवत्॥ क्षः संवर्तेराक्षसेचनरसिंहेचविद्युति॥ १॥ क्षेत्रेनाशेक्षेत्रपालेक्षिर्निवासेगतौक्षये॥ ॥ षद्वि॥ ॥ अक्षोज्ञातार्थशकटव्यवहारेषुपाशके॥ २॥ रुद्राक्षेंद्राक्षयोः सर्पेबिभीतकतरावपि॥ चक्रेकर्षेपुमान्क्लीबंतुत्थेसौवर्चलेंद्रिये॥ ३॥ उषाबाणसुताराम्योरूषः कामिनिगुग्गुलौ॥ रात्रिशेषेउषायांतुकेचिदाहुस्तद्व्ययं॥ ४॥ ऊषः क्षारमृदिप्रोक्तं प्रभातेपिपुमानयम्॥ तत्संध्यायांचरंध्रेचचंदनाद्रौश्रवोबिले॥ ५॥ ऋषिर्वेदेवसिष्ठादौदीधितौचपुमानयं॥ ऋक्षः पर्वतभेदेस्याद्भल्लूकेशोणकेपुमान्॥ ६॥ कृतवेधनेऽन्यलिंगंनक्षत्रेपुन्नपुंसकं॥ कक्षास्याद्दंतरीयस्यपश्चादंचलपल्लवे॥ ७॥ स्पर्धापदेनादोर्मूलेकच्छवीरुत्तृणेषुच॥ कर्षोनाकर्षणेमानप्रभेदेपुन्नपुंसकं॥ ८॥ कर्षूः पुमान्करीषाग्नौस्त्रियांकुल्येष्टिखातयोः॥ काक्षीतुवरिकायांचसौराष्ट्रमृद्यपिस्त्रियां॥ ९॥ कोषोऽस्त्रीकुड्मलेपात्रेदिव्येखड्गपिधानके॥ जातिकोशेऽर्थसंघातेपेश्यांशब्दादिसंग्रहे॥ १०॥ घोषआभीरपल्ल्यांस्याद्गोपालध्वनिघोषके॥ कांस्येचांबुदनादेनाघोषामधुरिकौषधौ॥ ११॥ चोक्षोगीतेशुचौदक्षेतथाऽभीष्टमनोज्ञयोः॥ झषानागबलायांस्त्रीतापमत्स्याटवीषुना॥ १२॥ तर्षोलिप्सोदन्ययोस्त्विट्कांतोवाचिरुचौस्त्रियां॥ तुषोधान्यत्वगक्षद्रोस्तृषालिप्सातृषोःस्त्रियां॥ १३॥ तृट्लिप्सायामुदन्यायांस्मरपुत्र्यामपिस्त्रियां॥ दक्षस्त्रिषुपटौपुंसिताम्रचूडेप्रजापतौ॥ १४॥ मुनिभेदेहरवृषेद्रुमभेदेस्त्रियांभुवि॥ दोषः स्याद्दूषणेपापेदोषाराच्चौभुजेपिच

॥१५॥ ध्वांक्षोमत्स्याशखगेकाकेतर्कोटभिक्षुकेपिच॥ ध्वांक्षीकक्को-
लिकायांस्यात्पुंसंकात्स्न्येतृणेपिच॥ १६॥ क्लीबेऽथपुंसिमहिषेनिकृष्टे
पुनरन्यवत्॥ प्लक्षोजटीगर्दभांडद्वीपभित्कुंजराशने॥१७॥ पक्षोमा
सार्द्धकेपार्श्वगृहेसाध्यविरोधयोः॥ केशादेःपरतोवृंदेबलेसखिसहाय
योः॥१८॥ चुल्लीरंध्रेपतत्रेचराजकुंजरपार्श्वयोः॥ प्रेक्षानृत्येक्षणेबुद्धौ
प्रेषःक्लेशेचमर्दने॥१९॥उन्मानेप्रेषणेपौषोमासेतत्पूर्णिमातिथौ॥ स्त्रि
यांभिक्षाभृतौयाञ्चासेवाभिक्षितवस्तुषु॥ २०॥ माषोव्रीह्यंतरेमूर्खेमा
नत्वग्दोषभेदयोः॥ मिषंव्याजेस्पर्धनेनामेषोराश्यंतरेस्तभे॥२१॥ मेषज्य
भिदिमोक्षस्तुमुक्तिपाटलिमोचने॥ यक्षोगुह्यकमात्रेचगुह्यकाधीश्वरे-
पिच॥ २२॥ रक्षाजतुरक्षणयोरूक्षस्त्वप्रेम्ण्यचिक्कणे॥ लक्षानपुंसिसं-
ख्यायांक्लीबंव्याजशरव्ययोः॥ २३॥ वर्षोऽस्त्रीभारतादौचजंबूद्वीपाब्द
वृष्टिषु॥ प्रावृट्कालेस्त्रियांभूम्निविट्स्त्रीव्यापनविष्ठयोः॥२४॥ विषंतुग
रलेतोयेऽनिविषायांचयोषिति॥ वृषोधर्मेबलीवर्देशृंग्यांपुंराशिभेदयोः॥२५
॥ श्रेष्ठेस्यादुत्तरस्थश्चव्यासमूषिकशुक्रले॥ तथावास्तुस्थानभेदेपुमाने
घप्रकीर्तितः॥ २६॥ वृषामूषिकपर्ण्यांचयतीनामासनेवृषी॥ व्योषंस्या
त्त्रिकटुद्रव्येकरिभेदेपुमानयं॥२७॥ शुषिःशोषेबिलेस्त्रीस्याच्छ्लेषःसं
कर्षणेवधे॥ अनंतेनाप्रसादेनस्वनिर्माल्यार्पणेस्त्रियाम्॥२८॥उपयुक्ते
तरेनस्त्रीशोषोयक्ष्मणिशोषणे॥ ॥षत्रिः॥ अध्य
क्षोऽधिकृतेपुंसिस्यात्प्रत्यक्षेऽभिधेयवत्॥२९॥ अभीषुःप्रग्रहेरश्मौ
नाकर्षोद्यूतइंद्रिये॥ पाशकेशारिफलकेकोदंडाभ्यासवस्तुनि॥ ३०॥
आकर्षणेपिपुंसिस्यादामिषंपुन्नपुंसकं॥ भोग्यवस्तुनिसंभोगेप्युत्
कोचेपललेपिच॥ ३१॥ उष्णीषंतुशिरोवेष्टेकिरीटेलक्षणांतरे॥ उत्प्रे
क्षानवधानेपिकाव्यालंकरणांतरे॥ ३२॥ कल्मषंकिल्बिषेक्लीबंपुंसि-
स्यान्नरकांतरे॥ कल्माषोयातुधानेचकृष्णपांडवकृष्णयोः॥ ३३॥ कलु
षंत्वाविलेपापे किल्बिषंपापरोगयोः॥ अपराधेपि कुल्माषंकांजिके-

यावकेपुमान्॥ ३४॥ गंडूषो मुखपूर्तौमपुष्करप्रसृतोन्मिते॥ गवाशीश
क्रवारुण्यांगवाक्षोजालकेकपौ॥ ३५॥ गोरक्षोनागरंगेस्याद्गवांचपरिरक्ष
के॥ जिगीषा जेतुमिच्छायांव्यवसायप्रकर्षयोः॥ ३६॥ तवीषीशक्रकन्या
यांपुंसिस्वर्गेमहोदधौ॥ ताविषीचंद्रकन्यायांनास्वर्गाबुधिकांचने॥ ३७॥
नहुषोनागभेदेस्यात्सोमवंशनृपेपिच॥ निकषः शाणफलके निकषा
यातुमातरि॥ ३८॥ निमेष निमिषौ कालप्रभेदेऽक्षिनिमीलने॥ पुरुषंक
बुरेरूक्षे निष्ठुरे क्रौंचवाच्यवत्॥ ३९॥ प्रदोषः समयेदोषे प्रत्यूषो हर्मु-
खेवसौ॥ पीयूषंसप्तदिवसावधिक्षीरे तथाऽमृते॥ ४०॥ पुरुषः पूरुषे
सांख्यज्ञेचपुन्नागपादपे॥ पौरुषंपुरुषस्यस्याद्भावेकर्मणितेजसि॥ ४१॥
ऊर्ध्वविस्तृतदोःपाणिनृमानेत्वभिधेयवत्॥ महिषीकृताभिषेकासैरि
भ्योरोषधीभिदि॥ ४२॥ मारीषः शाकभिद्यार्येनाद्यौत्स्त्यापुंसियोषिति॥
दक्षांबायां मृगाक्षीतुविशालामृगनेत्रयोः॥ ४३॥ रक्ताक्षः कासरे क्रूरे
पारावतचकोरयोः॥ रौहिषंकत्तृणे क्लीबंपुंसिस्याद्धरिणांतरे॥ ४४॥ वि
श्लेषोविधुरेयोगे शुश्रूषास्यादुपासने॥ कथनेश्रोतुमिच्छायांशैलूषो
नटबिल्वयोः॥ ४५॥ संघर्षस्तुपुमान्घर्षेस्पर्धायांचप्रभंजने॥ समी
क्षातुस्त्रियांतत्त्वेबुद्धावपिनिभालने॥ ४६॥ ॥ षचतुः
अनुकर्षोरथाधःस्थदारुण्यप्यवकर्षणे॥ अंबरीषंरणेभ्राष्ट्रे क्ली
बंपुंसिनृपांतरे॥ ४७॥ नरकस्यप्रभेदेचकिशोरेभास्करेपिच॥ आम्रा
तकेऽनुतापेचानिमिषोमत्स्यदेवयोः॥ ४८॥ अनुतर्षः सुरापान
पात्रेतृष्णाऽभिलाषयोः॥ आहिद्विड्गरुडेशक्रेमयूरेनकुलेपुमान्॥ ४९॥
अलंबुषः प्रहस्तेचछर्दनेराक्षसांतरे॥ अलंबुषातुमुंडीर्यांस्वर्गवा
रांगनांतरे॥ ५०॥ अथकिंपुरुषोलोकभेदकिन्नरयोःपुमान्॥ देववृ-
क्षः सप्तपर्णेमंदारेऽपिगुग्गुलौ॥ ५१॥ नंदिघोषोऽर्जुनरथेघोषेबंदिज
नस्यच॥ परिवेषस्तुपुल्लिंगः परिधौपरिवेषणे॥ ५२॥ परिघोषोनिना
देस्यादवाच्येजलदध्वनौ॥ पलंकषागोक्षुरकेरास्नागुग्गुलुकिंशुके

॥५३॥ सुंदरीलाक्षयोश्चस्त्रीराक्षसेतुपलंकषः॥ वीरवृक्षस्तुभल्लातककुभद्रुमयोःपुमान्॥५४॥ भूतवृक्षस्तुशाखोटद्रुमेश्योनाकपादपे॥ महाघोषातुकर्कटशृंग्यांपुंस्यतिघोषणे॥५५॥ क्लीबंहट्टेराजवृक्षःसुवर्णालिपियालयोः॥ वातरूषस्तुवातूलोत्कटयोःशक्रकार्मुके॥५६॥ विशालाक्षोहरेतार्क्ष्येनासुनेत्रेऽभिधेयवत्॥ सकटाक्षोवराक्षेनाकटाक्षसहितेत्रिषु॥५७॥ ॥इतिषांतवर्गः॥ ॥

सद्विः॥ ॥कंसोऽस्त्रीतैजसद्रव्येकांस्येमानेस्फुरेतुना॥ कासूर्विकलवाचिस्यात्तथाशक्त्यायुधेस्त्रियाम्॥१॥ गुच्छःस्यात्स्तबकेस्तंबेहारभिद्ग्रथिपर्णयोः॥ गोसोबोलोषसोश्चासइस्कपक्षिभिदोःपुमान्॥२॥ त्रासोभयेमणेर्दोषेदासीबाणाभुजिष्ययोः॥ दासोभृत्येचशूद्रेचज्ञातात्मनिचधीवरे॥३॥ नासातुनासिकायांचद्वारोर्ध्वदारुणिस्त्रियाम्॥ प्रसूरश्वाजनन्योश्चकंदलीवीरुधोःस्त्रियां॥४॥ वसुर्नादेवभेदाग्निभायोक्त्रबकराजसु॥ क्लीबेवृद्ध्यौषधेःश्वेचरैरत्नमधुरेत्रिषु॥५॥ भासःपुंसिप्रभायांस्याद्विशेषेविहगस्यच॥ भाःप्रभावेमयूखेवस्त्रीमाश्चंद्रमासयोःपुमान्॥६॥ मांसंस्यादामिषेक्लीबंकक्कोलीजटयोःस्त्रियाम्॥ मिसिःस्त्रीमधुरामांस्योःशतपुष्पाजमोदयोः॥७॥ मृत्सकाश्यांप्रशस्तमृदिरसोगंधरसेजले॥ शृंगारादौविषेवीर्येतिक्तादौद्रवरागयोः॥८॥ देहधातुप्रभेदेचपारदस्वादयोःपुमान्॥ स्त्रियांतुरसनापाठाशल्लकीकंगुभूमिषु॥९॥ रासःकोलाहलेध्वानेभाषाशृंखलकेपिच॥ क्रीडाभेदेचगोपानांवत्सःपुत्रादिवर्षयोः॥१०॥ नर्पकेनोरसिक्लीबं व्यासोनाविस्तृतेमुनौ॥ शंसावचसिवाञ्छायांहंसःस्यान्मानसौकसि॥११॥ निर्लोभनृपविष्ण्वर्केपरमात्मनिमत्सरे॥ योगिभेदेमंत्रभेदेशरीरमरुदंतरे॥१२॥ तुरंगमप्रभेदेपि हिंसाचौर्यादिघातयोः॥ ॥सत्रिः॥ ॥ अलसाहंसपद्यांनापादरोगद्रुमेदयोः॥१३॥ क्रियामंदेत्रिषुवथाऽर्चिर्मयूखशिखयोर्न्ना॥

अदः परस्मिन्नत्रस्याद्दभ्यासो ऽभ्यसनेऽन्तिके॥ १४॥ आगोऽपरा
धेपापेस्यादाश्वासः पुंसि निर्वृतौ॥ आख्यायिकापरिच्छेदे चाशीर्द
तेमरुद्भुजां॥१५॥ हिनस्याच्छंसने स्त्रीस्यादिष्वासः कार्मुकेपुमान्
॥ त्रिषुस्यात्क्षेपके चेषोरुच्छ्वासः प्राणनेपिच॥ १६॥ आख्यायि
कापरिच्छेदेप्याश्वासेपिपुमानयम्॥ उत्तंसः कर्णपूरेपिशिखरेपिच
नस्त्रियां॥ १७॥ उषः प्रत्यूषसिक्लीबंपित्तप्रस्वान्वयोषिति॥ उरो वक्ष
सिच श्रेष्ठेप्येनःपापापराधयोः॥ १८॥ ओजो दीप्ताववष्टंभे प्रकाश
बलयोरपि॥ ओकआश्रयमात्रेच मंदिरेचनपुंसकम्॥ १९॥ कीकसः
कृमिजातौस्यात्पुंसिकुल्येनपुंसकं॥ चमसोयज्ञपात्रस्यभेदेस्त्री
पिष्टकेस्त्रियाम्॥२०॥ छंदः पद्येचवेदेचस्वैराचाराभिलाषयोः॥
ज्यायो वृद्धेऽतिप्रशस्ते ज्योतिरग्नौदिवाकरे॥ २१॥ पुमान्नपुंसकं दृ
ष्टौस्यान्नक्षत्रप्रकाशयोः॥ तरो बलेचवेगेच तपो लोकांतरेऽपिच॥२२
चांद्रायणादौ धर्मेचपुमान्शिशिरमाघयोः॥ तमोध्वांतेगुणेशोके क्ली
बंबालाविधुंतुदे॥२३॥ तामसी निशिदुर्गायां तामसो भुजगेखले॥
तेजो दीप्तौप्रभावेच स्यात्पराक्रमरेतसोः॥ २४॥ धनुःपियालेनानस्त्री
राशिभेदेशरासने॥ धनुर्धरेत्रिषुनभः क्लीबंव्योम्निपुमान्घने॥ २५॥
घ्राणश्रावणवर्षासुबिसतंतौपतद्ग्रहे॥ पनसः कंटकिफले कंटकेवा
नरांतरे॥ २६॥ स्त्रियांरोगप्रभेदेस्यात्पयः स्यात्क्षीरनीरयोः॥ पाय
सस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः॥ २७॥ पुक्कसी कलिकानील्योः
पुक्कसः श्वपचेऽधमे॥ बीभत्सोनार्जुनेक्रूरघृणात्मविकृतौत्रिषु॥२८
भूयांस्त्रिषुबहुतरेपुनरर्थेत्वदोऽव्ययं॥ मनश्चित्तेमनीषायां मह
उत्सवतेजसोः॥ २९॥ मानसं सरसिस्वांतेरभसो हर्षवेगयोः॥ रहस्त
त्त्वरतेगुह्येरजः क्लीबंगुणांतरे॥ ३०॥ आर्तवेचपरागेच रेणुमात्रेच दृश्य
ते॥ राक्षसो यातुधानेस्याच्चंडायांराक्षसी स्मृता॥ ३१॥ रेपाः स्याद
धमेक्रूरेकृपणेप्यभिधेयवत्॥ रेतः शुक्रेपारदेच रोदश्च रोदसी ति

च॥ ३२॥ दिवि भूमौ पृथक्कस्यात्सहोक्त्या प्येनयोस्तथा॥ लालसोत्सु
क्यतृष्णातिरेकयांञ्चासुच द्वयोः॥ ३३॥ वयः पक्षिणि बाल्यादौ योव
नेचनपुंसकम्॥ वर्चो नपुंसकं रूपेविष्ठायामपितेजसि॥ ३४॥ पुंसि
चंद्रस्य तनये बर्हिः पुंसि हुताशने॥ नस्त्री कुशे वपुः क्लीबंन नौशस्ता
कृतावपि॥ वतंसस्तु पुमान्कर्णपूरशेखरयोरपि॥ वाहसो जलनि
र्याणे शयालौस्त्र निषण्णके॥ ३६॥ वायसो गुरुवृक्षेच श्रीवासध्वां
क्षयोः पुमान्॥ काकोदुंबरिकायांच काकमाच्यांच वायसी॥ ३७॥
विद्वानात्मविदि प्राज्ञे पंडितेचाभिधेयवत्॥ विलासो हावभेदस्या
ल्लीलायामपि पुंस्ययं॥ ३८॥ वितंसो बंधनोपाये मृगाणां पक्षिणामपि
॥ नेषामपिच विश्वासहेतोः प्रावरणेपिच॥ ३९॥ वेधाः पुंसित्त्हषीकेशे
बुधेच परमेष्ठिनि॥ शिरः प्रधाने सेनाग्रे शिखरे मस्तकेपिच॥ ४०॥ श्री
वासो वृकधूपेपि पंकजे मधुसूदने॥ श्रेयो मुक्तौ शुभे धर्मे ऽतिप्रशस्तेच
वाच्यवत्॥ ४१॥ श्रेयसी करिपिप्पल्यामभया पाठयोरपि॥ सहो बले
ज्योतिषिच पुंसि हेमंतमार्गयोः॥ ४२॥ सरसी विश्वकासारे सरो नीरत
डागयोः॥ स्यात्समासस्तु पुंल्लिंगः संक्षेपेच समर्थने॥ ४३॥ सारसः
पक्षिभेदेंद्वोः क्लीबंतु सरसीरुहे॥ साहसंतु बलात्कारकृतकार्ये दमेपि
च॥ ४४॥ सुरसस्तु त्रिषु स्वादो पर्णाशेतु नपुंसकं॥ स्त्रीरास्नानागमा
त्रोश्च स्त्रोतो ऽबुवेगइंद्रिये॥ ४५॥ हविर्होतव्यमात्रेच सर्पिष्यपि नपुं
सकम्॥ ॥सचतुः॥ ॥अधिवासो निवासेस्यात्संस्का
रे धूपनादिभिः॥ ४६॥ अवध्वंसः परित्यागे निंदनेप्यवचूर्णने॥ अ
वतंसो नस्त्रियं स्यात्कर्णपूरे च शेखरे॥ ४७॥ अशोकाः पुंसिशरभेप
क्षि पंचास्ययोरपि॥ उदर्चिरुज्ज्वले वाच्यलिंगः पुंसि हुताशने॥ ४८॥ क
लहंसस्तु कादंबे राजहंसे नृपोत्तमे॥ कनीयानतियूनि स्यादत्यल्पा
नुजयोस्त्रिषु॥ ४९॥ कुंभीनसः क्रूरसर्पे स्त्रियां लवणमातरि॥ भवे
द्घनरसः सांद्रे निर्यासे मोरटेंबुनि॥ ५०॥ कर्पूरे पीलुपर्ण्यांच सम्यक्

सिंदूरसेपिच॥ चंद्रहासो दशग्रीवकरवाले ऽसिमात्रके॥५१॥ जटा युः पुंसिसंपातेः कनीयसिच गुग्गुलौ॥ अथतामरसंपद्मेताम्रकांचनयोरपि॥५२॥ त्रिस्रोताजन्हुकन्यायांस्त्रोतस्वत्यंतरेस्त्रियां॥ दिवौकाश्च दिवौकाश्चपुंसिदेवेचचातके॥५३॥ दीर्घायुःशाल्मलीवृक्षवायसे जीवकद्रुमे॥ मार्कंडेयेचपुंसिस्याच्चिर जीविनि वाच्यवत्॥५४॥ नगौकाः पुंसिशरभेपक्षिपंचास्ययोरपि॥ निश्रेयसंतु कल्याणमोक्षयोः शंकरेपुमान्॥५५॥ नीलांजसाप्सरोभेदेसरिद्भेदेचवि द्युति॥ प्रचेताःपाशिनिमुनौनाप्रकृष्टहृदित्रिषु॥५६॥ पुनर्वसुर्नामुनिभिद्यजेहि्लवेतुभांतरे॥ पौर्णमासःपुमान्यज्ञभेदेस्त्रीपूर्णिमातिथौ॥५७॥ महारसः स्यात्खर्जूरेकोशकारकशेरुणोः॥ मलीमसस्तुमलिनेपुष्पकाशीसलोहयोः॥५८॥ भवेन्मधुरसाद्राक्षामूर्विकादुग्धिकासुच॥ यमस्वसातुदुर्गायांयमुनायामपिस्त्रियां॥५९॥ यवीयाननुजेपिस्यादतियूनिचवाच्यवत्॥ रासेरसस्तुगोष्ठ्यांस्याद्रासशृंगारयोरपि॥६०॥ रससिद्धिरसावासषष्ठीजागरकेपिच॥ राजहंसस्तुकादंबेकलहंसेनृपोत्तमे॥६१॥ वरीयान्योगभित्श्रेष्ठवरिष्ठेष्वतियूनिच॥ विहायाःशकुनेपुंसिगगनेपुंन्नपुंसकं॥६२॥ विश्वावसुः पुमान्सूर्येहारभेदेचपावके॥ श्वःश्रेयसंचकल्याणेपरमात्मनिशर्मणि॥६३॥ अथसर्जरसोवाद्यभांडभेदेचधूणके॥ सप्तार्चिःपावकेपुंसिक्रूरचक्षुषितुत्रिषु॥६४॥ साधीयानतिबाढेस्यादतिसाधौचवाच्यवत्॥ सिद्धरसोरसेपुंसिधातुप्रभृतिषुत्रिषु॥६५॥ सुमनाःपुष्पमालत्योःस्त्रियांनाधीरदेवयोः॥ सुमेधास्तुस्त्रियांज्योतिष्मत्यांत्रिषुसुबुद्धिनि॥६६॥ ॥सपंच॥ ॥दिव्यचक्षुःसुगंधस्यभेदेनांधेसुलोचने॥ स्यान्नभश्चमसश्चंद्रेचिभ्रूपेंद्रजालयोः॥६७॥ हिंगुनिर्यासइत्येषनिंबेहिंगुरसेपिच॥ ॥

॥ ॥सषट्॥ ॥हिरण्यरेताः पुंसिस्याद्दिवाकरहवि

भुंजो:॥ ६८॥ ॥ इतिसांतवर्गः॥ ॥हैकं॥ ॥
हः शिवेसलिलेशून्येधारणेमंगलेपिच॥ गगनेनकुलीशेचरक्तेनाके
चवर्ण्यते॥ १॥ ॥ हद्वि:॥ ॥अहिर्वृत्रासुरेसर्पेपुं-
सीहोद्यमवांच्छयोः॥ कुहूः स्त्रीकोकिलालापेनष्टेंदुकलदर्शयोः॥
२॥ ग्रहोनुग्रहनिर्बंधग्रहणेषुरणोद्यमे॥ सूर्यादौपूतनादौचसैंहि-
केयोपरागयोः॥ ३॥ ग्राहोग्रहे वहारेचगुहः षाण्मातुरेगुहा॥ सिं
हपुच्छ्यांचगर्तेचपर्वतादेश्चगह्वरे॥ ४॥ गृहंगृहाश्चपुंभूम्निक
लत्रेपिचसद्मनि॥ नाहस्तुबंधनेकूटेप्रोहोगजांघ्रिपर्वणोः॥ ५॥ वा
च्यवन्निपुणेतर्केबर्हंपिच्छेदलेस्त्रियां॥ बहुस्यात्र्यादिसंख्यासु
विपुलेप्यभिधेयवत्॥ ६॥ महीनद्यंतरेभूमौमहउत्सवतेजसोः॥
अथमोहोन्यलिंगःस्यादविद्यायांचमूर्छने॥ ७॥ लोहः स्त्रीशस्त्र
केलोहेजोंगकेसर्वतैजसे॥ वहःस्याद्वृषभस्कंधेवाहेगंधवहेपिच॥
८॥ वाहोभुजेपुमान्मानभेदाश्ववृषवायुषु॥ व्रीहिः सामान्यधा-
न्येस्यादाशुधान्येतुपुंस्ययं॥ ९॥ व्यूहःस्याद्बलविन्यासेनिर्माणेवृंद
तर्कयोः॥ सहोबलेनस्त्रियांस्यात्स्त्रियांतुनरवभेषजे॥ १०॥ दंडोत्प-
लामुद्गपर्णीकुमारीपृथिवीषुच॥ सिंहः कंठीरवेराशौसत्तमेचोत्तर-
स्थितः॥ ११॥ सिंहीतुकंटकार्यांस्याद्वार्ताकीवासकेपिच॥ स्नेहःस्या
त्सुंस्नितैलादिरसद्रव्येचसौहृदे॥ १२॥ ॥ हत्रिः॥ ॥
अत्यूहोनीलिकायांस्त्रीकालकंठरवगेपुमान्॥ आग्रहोनुग्रहास
क्त्योराक्रमेग्रहणेपिच॥ १३॥ आरोहस्त्ववरोहेचवरारोहाकटावपि
॥ आरोहणेगजारोहेदीर्घत्वेचसमुच्छ्रये॥ १४॥ उत्साहस्तूद्यमेसू
त्रेकटाहः कूर्मकर्परे॥ द्वीपस्यचप्रभेदेस्यात्तैलादेःपाकभाजने॥ १५
॥ जायमानविषाणाग्रमहिषीशावकेपिच॥ कलहंयुद्धकालेनारवड्
कोशेचमंडने॥ १६॥ दात्यूहेस्तुपुमान्कालकंठचातकपक्षिणोः॥ नि
ग्रहोभर्त्सनेसीमस्यान्मर्यादायांचबंधने॥ १७॥ निर्व्यूहः शिखरेद्वारेनि

र्यासेनागदंतके॥ निरूहो बस्तिभेदेस्याद्रहशून्येचनिश्चिते॥१८॥प्र
ग्राहस्तुतुलासूत्रेवृषादिप्रग्रहेपिच॥ पटहोनासमारंभेआनकेपु
न्नपुंसकं॥१९॥ प्रवहस्तुबहिर्यात्रामातरिश्वप्रभेदयोः॥ प्रग्रहस्तु
लासूत्रेबंद्यांनियमनेभुजे॥२०॥ हयादिरश्मौरश्मौचस्कवर्णालुमहीरुहे
॥प्रवाहस्तुप्रवृत्तौस्यादपिस्त्रोतसिवारिणः॥२१॥ वराहःसूकरेवि-
ष्णौमानभेदेऽद्रिमुस्तयोः॥ वाराहीमातृभेदेस्याद्विष्वक्सेनप्रियौष
धौ॥२२॥ राजार्हंजोंगकेक्लीबंराजयोग्येऽभिधेयवत्॥ विग्रहःका
यविस्तारेविभागेतारणेस्त्रियां॥२३॥ विदेहःकायशून्येस्याज्जनका
न्वयभूमिपे॥ वैदेहीरोचनासीतावणिक्स्त्रीपिप्पलीषुच॥२४॥ सं
ग्रहोबृहदुद्गेग्रहसंक्षेपयोरपि॥ सुवहाशल्लक्यैलापर्णीगोधाप
दीषुवीणायाम्॥२५॥ रास्नाशेफालिकयोःस्त्रीसुखवाह्येऽन्यलिंगः
स्यात्॥ ॥हन्वतुः॥ ॥अवग्रहोवृष्टिरोधेप्रतिबंधे
गजालिके॥२६॥ अभिग्रहोऽभिग्रहणेऽभियोगेपिचगौरवे॥ अ
वरोहोवतरणेप्यारोहेवल्लतोद्गमे॥२७॥ अश्वारोहाऽश्वगंधा-
यांस्त्रियांत्रिष्वश्ववाहके॥ उपनाहोव्रणालेपपिंडेवीणानिबंधने॥२८
॥उपग्रहः पुमान्बंद्यामुपयोगेनुकूलने॥ स्याद्गंधवाहानासायांपु
ल्लिंगोमातरिश्वनि॥२९॥ तनूरुहंतुलोम्निस्यात्पतत्रेचनपुंसकं॥
तमोपहःसहस्रांशुमृगांकाजिनवह्निषु॥ ३०॥ प्रतिग्रहः स्वीकर
णेसैन्यपृष्ठेपतद्ग्रहे॥ द्विजेभ्योविधिवद्देयेतद्ग्रहेचग्रहांतरे॥ ३१॥प
रिग्रहः परिजनेपत्न्यांस्वीकारमूलयोः॥ शापेपरिबर्होराजयोग्यद्र
व्यपरिच्छदे॥३२॥ परीवाहोजलोच्छ्वासेमहीभृद्योग्यवस्तुनि॥पि
तामहोविरिंचौस्यात्तातस्यजनकेपिच॥ ३३॥ महासहामाषपर्ण्या
मम्लानेऽपिचयोषिति॥ ॥हपंच॥ ॥प्रपितामहइत्ये
वंविधोपितृपितामहे॥३४॥ ॥ इतिहांतवर्गः॥ ॥
अथाऽव्ययानिवक्ष्यंतेव्यक्तंपूर्वादितेःक्रमैः॥ अकाराद्यंततावास्मिं

स्तस्मादप्यतिरिच्यते॥१॥ अशब्दः स्यादभावेपिस्वल्पार्थप्रतिषेधयोः॥ अनुकंपायांचतथावासुदेवेत्वनव्ययः॥२॥ आःप्रगृह्यंस्मृतौवाक्येऽनुकंपायांसमुच्चये॥ इभेदेचरुषोक्तौचापाकरण्यानुकंपयोः॥३॥ ईविषादेनुकंपायांलक्ष्म्यांपुनरनव्ययं॥ उसंबोधनरोषोक्त्योरनुकंपानियोगयोः॥४॥ पदपूरणेचपादपूरणेऽपिचदृश्यते॥ ऊवाक्यारंभरक्षाऽनुकंपास्वपिचदृश्यते॥५॥ ऋशब्दोगर्हणेवाक्येदेवमातायां त्वनव्ययं॥ ॠवाक्यारंभरक्षायांवक्षःस्मृत्योरनव्ययं॥६॥ देवमातायांदनौचापिभैरवेदनुजेगतौ॥ ऌकारोदेवतौ मायांफविकुभ्रेचकीर्तितः॥७॥ ॡकारोदेवनार्यांस्यान्नार्यात्मन्यपिमातरि॥ एस्मृतावप्यसूयानुकंपामंत्रणहूतिषु॥८॥ ऐशब्दोदृश्यतेहूतौस्मृत्यामंत्रणयोरपि॥ ओसंबोधनआव्हानेस्मरणेचानुकंपने॥९॥ औशब्दःकथितोहूतौतथासंबोधनेपिच॥ स्त्रीतुविश्वंभरायांस्यात्पुमांस्तुनिस्वनेस्मृतः॥१०॥ ॥कैकं॥ ॥कुपापेचेषदर्थेचकुत्सायांचनिवारणे॥ ॥कद्विः॥ ॥धिग्भर्त्सनेचनिंदायां॥ ॥कत्रिः॥ ॥मनागप्यल्पमंदयोः॥११॥ हिरुक्शब्दोविनार्थेचमध्यार्थेपिचदृश्यते॥ ॥गद्विः॥ ॥अंगसंबोधनेहर्षेसंगमासूययोरपि॥१२॥ ॥ङद्विः॥ ॥आङ्सीमायामभिव्याप्तौक्रियायोगेषदर्थयोः॥ ॥चैकं॥ ॥चान्वाचयेसमाहारेष्वन्योन्यार्थेसमुच्चये॥१३॥ पक्षांतरेतथापादपूरणेप्यवधारणे॥ ॥चद्विः॥ ॥किंचारंभेचसाकल्येप्राक्पूर्वस्मिन्नवांतरे॥१४॥ अग्रेप्रभातेतीतेचदेशेदिक्कालयोरपि॥ ॥चत्रिः॥ ॥तिर्यक्तिरोर्थेवक्रेचविहंगादौत्वनव्ययं॥१५॥ ननुचप्रश्नदुष्टोक्त्योःसम्यक्दृढप्रशंसयोः॥ ॥जद्विः॥ ॥नञभावेनिषेधेचस्वरूपार्थेप्यतिक्रमे॥१६॥ ईषदर्थेचसादृश्येनहिरुद्दतदन्ययोः॥ ॥ठद्विः॥ ॥स्फुष्टुप्रशंसनेपिस्यां

इत्यर्थेन्वनिगद्यते॥१७॥ ॥ठत्रिः॥ ॥अपष्ठुनिरव द्येचशोभनार्थेचदृश्यते॥ ॥णान्तुः॥ ॥अंतरेणपदंवि नाहिनामध्यार्थयोरपि॥१८॥ ॥तैकम्॥ ॥तुपादपूरणेभे देसमुच्चयेवधारणे॥ पक्षांतरेनियोगेच प्रशंसायांविनिग्रहे॥१९॥ ॥तद्विः॥ ॥अतिशब्दःप्रशंसायांप्रकर्षेलंघनेपिच॥ नितांतासं-प्रतिक्षेपवाचकोप्येषदर्शितः॥२०॥ अस्तुस्यादभ्यनुज्ञानेऽप्यसूयापीडयोरपि॥ प्रतिक्षेपे प्रशंसायांप्रकर्षेलक्षणेपिच॥२१॥ अस्तं-प्रत्यर्थउद्दिष्टमितिहेतौप्रकाशने॥ निदर्शनेप्रकारेस्यात्सरक्त्यनुकर्षयोः॥२२॥ समासोनप्रकरणेऽप्युतात्यर्थविकल्पयोः॥ समुच्चयेवितर्केच प्रश्नेचपदपूरणे॥२३॥ उत्स्यात्प्रश्नेवितर्केच चेत्कुत्सितप्रशंसयोः॥ पक्षांतरेप्यसंकल्प्ये जातुशब्देविगर्हणे॥२४॥ कदाचिदर्थेपितथान्येऽविकल्पनिषेधयोः॥ प्रतिप्रतिनिधावित्थंभूताख्यानाभिमुख्ययोः॥२५॥ मात्रार्थभागवीप्सासुलक्षणप्रतिदानयोः॥ बतामंत्रणासंतोषखेदानुक्रोशविस्मये॥२६॥ स्वस्तिस्यान्मंगले पुण्येप्याशंसायामपिक्वचित्॥ स्वित्प्रश्नेच वितर्केच तथैवपदपूरणे॥२७॥ हंतवाक्यारंभखेदविषादहर्षसंभ्रमे॥ ॥तत्रिः॥ ॥आराद्दूरेसमीपेच कच्चित्कामप्रवेदने॥२८॥ प्रश्नेहर्षे मंगलेच किमुप्रश्नवितर्कयोः॥ विकल्पेनिश्चयेपिस्यात्तावन्मानेव-धारणे॥२९॥ संभ्रमेचपरिच्छेदे तथाकार्त्स्न्याधिकारयोः॥ पश्यत-स्यात्प्रशंसायां विस्मयेचनिगद्यते॥३०॥ पश्चात्प्रतीच्यां परमेप्यधिकारेपिदृश्यते॥ यद्वत्प्रश्नेवितर्केच यावत्कार्त्स्न्येवधारणे॥३१॥ प्रशंसायांपरिच्छेदे मानाधिकारसंभ्रमे॥ पक्षांतरेच शश्वत्स्यादात्मप्रश्नेचमंगले॥३२॥ पुराकल्पेसदार्थेच पुनरर्थेचदृश्यते॥ सकृत्सहैकवारेस्यात्साक्षात्प्रत्यक्षतुल्ययोः॥३३॥ ॥तन्चतुः॥ ॥अहोबतानुकंपायांखेदे संबोधनेपिच॥ पुर-

स्तान् प्रथमे प्राच्यां भग्रतोर्थ पुरार्थयोः॥३४॥ ॥थद्विः॥
अथाथो संशये स्यातामधिकारे च मंगले॥ विकल्पानंतरप्रश्नका-
र्त्स्यारंभसमुच्चये॥ ३५॥ तथाभ्युपगमे पृष्ठप्रतिवाक्ये समुच्चये
॥ सदृशे निश्चये पि स्याद्यथा तुल्यार्थमानयोः॥ ३६॥ प्रशंसायां
वृथा वंध्ये निष्कारणे॥ थत्रिः॥ ऽन्यथा पुनः॥ वितथे चाप
रार्थे च सर्वथा हेतुवादयोः॥३७॥ ॥दद्विः॥ ॥उत् प्र-
काशे विभागे च प्राबल्याऽस्वास्थ्यशक्तिषु॥ प्राधान्ये बंधने भावे मो
क्षे लाभोर्द्ध्वकर्मणोः॥३८॥ यत्तु गर्हार्हत्ववद्ध्त्योर्यदि गर्हाविक
ल्पयोः॥ ॥धद्विः॥ ॥अधि स्यादधिकारे चापीश्वरे च-
निगद्यते॥ ३९॥ ॥नैकम्॥ ॥न स्यान्निषेधोपमयो
र्निर्निवेशाभृशार्थयोः॥ नित्यार्थे संशयक्षेपकौशलोपरमेषु च॥ ४०
॥ सामीप्याश्रयदानेषु मोक्षांतर्भावबंधने॥ शश्यधोभावविन्यासे
नु वितर्क्कोपमानयोः॥४१॥ विकल्पानुनयातीते प्रश्नहेत्वपदेशयोः
॥ ॥नद्विः॥ ॥अनु हीने सहार्थे च पश्चात्सादृश्य
योरपि॥४२॥ लक्षणेत्थंभूताख्यानभागवीप्सास्वनुक्रमे॥ आया
मे च समीपे च किन्नु प्रश्नवितर्कयोः॥४३॥ च न विस्मये साकल्ये
ननु शब्दो विनिग्रहे॥ अनु प्रश्ने परकृतावधिकारे च संक्रमे॥४४
आमंत्रणेप्यनुनये प्रश्नानुज्ञावधारणे॥ नाना शब्दो विनार्थेपि त-
थानेकोभयार्थयोः॥४५॥ स्थाने तु करणार्थे स्याद्युक्तसादृश्ययोर
पि॥ ॥पद्विः॥ ॥अप स्यादपकृष्टार्थे वर्जनार्थवि
योगयोः॥ ४६॥ विपर्यये च विकृतौ चौर्ये निर्देशहर्षयोः॥ अपि संभा
वनाप्रश्नशंकागर्हासमुच्चये॥४७॥ तथा युक्तपदार्थेपि कामकार
क्रियासु च॥ उप स्यादधिकार्थे च हीनार्थासन्नयोरपि॥४८॥ ॥
भद्विः॥ ॥अभीत्थंभूतकथने चाभिमुख्याभिलाषयोः॥
॥ ॥मैकं॥ मा वारणे विकल्पे च स्मातीते पादपू

रणे॥४९॥ स्यान्मंगलेपरकृता ॥मद्विः यमांतिकसहार्थयोः ॥आम् ज्ञाननिश्चयस्मृत्यो रुम् रोषेंगीकृतावपि॥५०॥ प्रश्नेपि स्याद्धूम् रुषोक्तोपृच्छायामोमुपक्रमे॥ प्रणवेचाप्युपगमेचापाकृतौ चमंगले॥५१॥ कम् पादपूरणेतोयेमस्तकेचसुखेऽपिच॥ किम् कुत्सा यांवितर्केचनिषेधप्रश्नयोरपि॥५२॥ किमु संभावनायांस्याद्विमर्शे चापिदृश्यते॥ नाम कोपेभ्युपगमेविस्मयेस्मरणेपिच॥५३॥ संभाव्य कुत्साप्राकाश्यविकल्पेष्विचदृश्यते॥ शम् कल्याणेसुखेसम् तु- शोभनार्थसमर्थयोः॥५४॥ संगार्थेचप्रहृष्टार्थेसामिनिंदार्धयोर्म- तं॥ हम् रुषोक्तावनुनये हुम् स्मृतावप्यपाकृतौ॥५५॥अर्थप्रश्नेऽभ्य नुज्ञायां हूम् स्यात्प्रश्नवितर्कयोः॥ ॥मत्रिः॥ ॥ अलम् भूषणपर्याप्तिवारणेष्वनिरर्थके॥५६॥ शक्तावेवम् प्रकारे स्यादंगीकारेवधारणे॥ अर्थप्रश्नेपरकृतावुपमापृच्छयोरपि॥५७॥ कथम् हर्षेचगर्हायांप्रकारार्थेचसंभ्रमे॥ प्रश्नेसंभावनायांच कामम् चानुमतौस्मृतं॥५८॥ प्रकाशेचाप्यसूयायांतथानुगमनेपिच॥ जोषम् सुखेप्रशंसायांतूष्णींलंघनयोरपि॥५९॥ नूनम् तुनिश्चितेतर्के स्मरणेवाक्यपूरणे॥ परम् नियोगेक्षेपेच प्राध्वम् नर्मानुकूल्ययोः॥६० ॥सत्यम् प्रश्नेऽभ्युपगमे॥ मचतुः॥ ऽवश्यम् नित्य प्रयत्नयोः॥ अभीक्ष्णम् मुहुरत्यंतेशीघ्रप्रकर्षयोरपि॥६१॥ इदा नीम् वाक्यभूषायांसंप्रत्यर्थेचदृश्यते॥ तद्दिनम् दिनमध्येस्या- त्तथैवप्रतिवासरे॥६२॥ सांप्रतंचाधुनार्थेस्यादुचितार्थेचदृश्यते ॥ ॥यद्विः ॥अयि प्रश्नानुनययोस्तथासंबोधने पिच॥६३॥ अये क्रोधविषादेचसंभ्रमेस्मरणेपिच॥ दिष्ट्या हर्षे मंगलेचपश्यशब्दस्तुविस्मये॥६४॥ प्रशंसायामपितथा॥ ॥ यत्रिः ॥समया तिकमध्ययोः॥ ॥रेकम्॥ ॥ अप्रकर्षेगताद्यर्थे॥ ॥गद्विः ॥प्यरे प्राकृतसूययो॥६५

उर्यूरीचाप्युभौशब्दौविस्तारेंगीकृतावपि॥ दुर्निषेधेनदुष्टेचनिर्नि
र्णयनिषेधयोः॥ ६६॥ परिस्यात्सर्वतोभावेवर्जनेव्याधिशोषयेः॥ इ
ऽथंभूताख्यानभागवीप्सालिंगनलक्षणे॥ ६७॥ दोषाख्यानेनिर-
सनेपूजाव्याप्त्योश्चभूषणे॥ पराविमोक्षप्राधान्यप्रातिलोम्येषुधर्ष
णे॥ ६८॥ आभिमुख्येभृशार्थेचाविक्रमेचगतौवधे॥ पुरापुराणेनि
कटेप्रबंधातीनभाविषु॥ ६९॥ स्वःप्रेत्यव्योम्निनाकेचा ॥ रत्रिः
॥ ॥ ध्रुवंतःस्वीकारमध्ययोः॥ अंतरापिविनार्थेस्यान्मध्या
र्थनिकटार्थयोः॥ ७०॥ उररूरु रुरूरू ररीचविस्तारेंगीकृतौत्रयं॥
नकिनिर्षेधोपमयोः प्रादुःप्राकाश्यइष्यते॥ ७१॥ संभाव्येचप्रवृत्तौच
पुनरप्रथमेमतम्॥ अधिकारेचभेदेचतथापक्षांतरेपिच॥ ७२॥ ॥
लद्विः ॥ किलशब्दस्तुवार्तायांसंभाव्यानुशयार्थयोः॥ खलु-
स्याद्वाक्यभूषायांजिज्ञासायांचसांत्वने॥ ७३॥ वीप्सामाननिषेधेषु
पूरणेपदवाक्ययोः॥ ॥ वैकम्॥ ॥ वास्याद्विकल्पोपम
योर्विनर्के पादपूरणे॥ ७४॥ समुच्चयेचविश्रंभेनानार्थातीतयोरपि
॥ विनिग्रहेनियोगेचतथैवपदपूरणे॥ ७५॥ निश्चयेसहनेहेतावव्याप्ति
विनियोगयोः॥ इषदर्थेपरिभवेशुद्धावलंबनेपिच॥ ७६॥ विज्ञाने॥ ॥
॥ वद्विः॥ ऽथैवचौपम्येनियोगेवाक्यपूरणे॥ अवधारणे
चचारंनियोगेचविनिग्रहे॥ ७७॥ ॥ षद्विः॥ ॥ उषाश
ब्दोनदंतेचदोषारात्रौचतन्मुखे॥ मंक्षुशीघ्रभृशार्थेच॥ ॥
षत्रिः॥ निकषांतिकमध्ययोः॥ ७८॥ ॥ सैकं
॥ ॥ स्तु पूजायांभृशार्थानुमतिकृच्छ्रसमृद्धिषु॥ ॥ सद्विः
आस्स्मरणेऽपाकरणेकोपसंतापयोरपि॥ ७९॥ ईदुःखभा
वनेकोपे निर्निर्बंधेचनिश्चये॥ साकल्यातीतयोर्भोस्तुसंबोधनविषा
दयोः॥ ८०॥ ॥ सत्रिः अंजसाशब्दआख्यानस्त
त्वतूर्णार्थयोरपि॥ तिरोऽन्तर्द्धौतिर्यगर्थेनीचैस्वैराल्पयोर्मतं॥ पुरोऽ

ग्रेप्रथमेभूयोऽधिकारेचपुनःपुनः॥ मिथोऽन्योन्येरहोर्थेचशनैःस्वे
रेशनैश्वरे॥८२॥ ॥ सचतुः॥ ॥ अभितःशीघ्रसाक-
ल्यसंमुखोभयतोंऽतिके अग्रतःप्रथमेचाग्रेपुरतःप्रथमा-
ग्रयोः॥८३॥ पूर्वेद्युःप्रातःकालेस्यात्तथैवगतवासरे॥ ॥
हैकम्॥ ॥ ह स्यात्संबोधनेपादपूरणेचविनिग्रहे॥८४॥
नियोगेचक्षिपायांस्यात्कुत्सायामपिदृश्यते॥ हाविषादेचशोके
चकुत्सादुःखार्थयोरपि॥८५॥ हि पादपूरणेहेतौविशेषेत्वव
धारणे॥प्रश्नहेत्वपदेशेचसंभ्रमासूययोरपि ॥८६॥ ही दुःख
हेतावाख्यातातविषादेविस्मयेपिच॥ हे संबोधनआह्वानेप्यसू
यादौचदृश्यते॥८७॥ है संबोधनआह्वाने हो हौ शब्दौतथैत-
योः॥ ॥ हद्विः॥ ॥ अह प्रशंसाक्षिपयोर्नियोगेचवि
निग्रहे॥८८॥ अहोधिगर्थेशोकेचकरुणार्थविषादयोः॥ संबो
धनेप्रशंसायांविस्मयेपदपूरणे॥८९॥ असूयायांवितर्केस्यादा
ह क्षेपनियोगयोः॥ आहोप्रश्नेविचारेचसहसाकल्यइष्यते॥
९०॥ विद्यमानेचसादृश्ययौगपद्यसमृद्धिषु॥संबंधेचनस्याहीही
शब्दोविस्मयहास्ययोः॥९१॥ हेहै संबोधनेहूतौहो हौशब्दस्तथै
तयोः॥ ॥ हत्रिः॥ ॥ अहहेत्यद्भुतेखेदेपरिक्लेशप्रक
र्षयोः॥९२॥ संबोधनेऽपिचोत्ताहोपरिप्रश्नविचारयोः॥ ॥
॥ ॥इत्यव्ययानेकार्थवर्गः॥ ॥२३७८॥ ॥
उत्पलिनीशब्दार्णवसंसारावर्तनाममालाख्यान्॥ भागुरिवररु
चिशाश्वतबोपालितरंतिदेवहरकोषान्॥१॥ अमरशुभांकह
लायुधगोवर्धनरभसपालकृतकोषान्॥ रुद्रामरदत्ताजयगंगाध
रधरणिकोषांश्च॥२॥ हारावल्यभिधानंत्रिकांडशेषंचरत्नमालां
च॥ अपिबहुदोषंविश्वप्रकाशकोषंचसुविचार्य॥३॥ वाग्भटमा

धववाचस्पतिधर्मव्याडितारपालाख्यान् ॥ अपिविश्वरूपवि क्रमादित्यनामलिंगानिस्कविचार्य ॥ ४॥ कात्यायनवामनचंद्रगो मिरचितानिलिंगशास्त्राणि ॥ पाणिनिपदानुशासनपुराणका-व्यादिकंचस्कनिरूप्य ॥ ५॥ षट्शतगाथाकोषप्रणयनविख्यात कौशलेनायं ॥ मेदिनिकरेणकोषः प्राणकरसूनुनारचितः ॥ ६॥ इतिमेदिनिकृतानेकार्थकोषः समाप्तः ॥ ॥ शुभंभव तु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ छ

॥ इतिमेदिनीकोशः समाप्तः ॥

---

## ॥ अथएकाक्षरीकोशःप्रारभ्यते ॥

श्रीगणेशायनमः ॥ ॥ अकारोवासुदेवस्स्या दाकारस्तुपि तामहः ॥ पूजायामपिमांगल्ये आकारः परिकीर्तितः ॥ १॥ इकारउच्य तेकामोलक्ष्मीरीकारउच्यते॥ उकारः शंकरः प्रोक्तऊकारश्चापिल क्षणे ॥ २॥ रक्षणेचापि ऊकार ऊकारोब्रह्मणिस्मृतः ॥ ऋकारो देवमातास्यात् ॠकारोदनुजप्रसूः ॥ ३॥ ऌकारोदेवजातीनांमाता सद्भिः प्रकीर्तिता ॥ ॡकारः स्मर्यतेपूर्वैर्जननीशब्दकोविदैः ॥ ४॥ एका रउच्यतेविष्णुरैकारः स्यान्महेश्वरः ॥ ओकारस्तुभवेत्ब्रह्मा औं कारोऽनंतउच्यते ॥ ५॥ अंस्याच्चपरमंब्रह्म अः स्याच्चैवमहेश्वरः ॥ कः प्रजापतिरुद्दिष्टो कोर्कवायुनलेषुच ॥ ६॥ कश्चात्मनिमयू रेच कः प्रकाशउदाहृतः ॥ कं शिरोजलमाख्यातं कंसुखंचप्रकी-र्तितं ॥ ७॥ पृथिव्यां कुः समाख्यातः कुः शब्देपिप्रकीर्तितः ॥ खमिं द्रिये खमाकाशे खः स्वर्गेपिप्रकीर्तितः ॥ ८॥ सामान्येचतथाशून्ये

रव शब्दः परिकीर्तितः॥ गो गणेशः समुद्दिष्टो गंधर्वो गः प्रकीर्तितः॥९
गं गीतं गा च गाथा स्यात् गौश्च धेनुः सरस्वती॥ घा घंटाथ समाख्या
ता घो घनश्च प्रकीर्तितः॥१०॥ घंटीशो हनने घर्मे घु घोणा घूर्ध्वना
वपि॥ ङकारो भैरवः ख्यातो ङकारो विषयस्पृहा॥११ चश्चंद्रमाः
समाख्यातो भास्करे तस्करे मतः॥ निर्मलं छं समाख्यातं तरले छः प्र
कीर्तितः॥१२॥ छेदके छः समाख्यातो विद्वद्भिः शब्दकोविदैः॥ ज-
कारो गायने प्रोक्तो जयने जः प्रकीर्तितः॥१३॥ जेता जश्च प्रकथितः
सूरिभिः शब्दशासने॥ रवो झकारः कथितो नष्टे झश्चोच्यते बुधैः॥
१४॥ झकारश्च तथा वायो नेपथ्ये समुदाहृतः॥ ञकारो गायने प्रोक्तो
ञकारो झर्झरध्वनौ॥१५॥ टो धरित्र्यां च करके टो ध्वनौ च प्रकीर्तितः
॥ ठकारो जनतायां स्यात् ठो ध्वनौ च शठे पि च॥१६॥ ठो महेशः समा
ख्यातो ठश्च शून्ये प्रकीर्तितः॥ बृहद्ध्वनौ च ठः प्रोक्तस्तथा चंद्रस्य मंड-
ले॥१७॥ डकारः शंकरे त्रासे ध्वनौ भीमे निरुच्यते॥ ढकारः कीर्ति-
ता ढक्का निर्गुणे निर्धने मतः॥१८॥ णकारः सूकरे ज्ञाने निश्चये नि
र्णये पि च॥ तकारः कीर्तितश्चौरे क्रोडपुच्छे प्रकीर्तितः॥१९॥ शिलो
च्चये थकारः स्यात् थकारो भयरक्षणे॥ दकारो च कलत्रे च छेदे दा
ने च दातरि॥२०॥ धं धने स धने धः स्यात् द्विधा तरि मनावपि॥ धि
षधा धीः समाख्याता धूश्चैवं भारवित्तयोः॥२१॥ नेता नश्च समा-
ख्यातस्तरणौ नः प्रकीर्तितः॥ नकारः सौगते बुद्धो स्कतौ च क्षेप्रकी
र्तितः॥२२॥ नशब्दः स्वागते बंधौ हस्ते सूर्ये च कीर्तितः॥ पः कुबेरः
समाख्यातः पश्चिमे च प्रकीर्तितः॥२३॥ पवने पः समाख्यातः पः स्था
स्थाने च पातरि॥ कफे वाते फकारः स्यात्तथा ह्वाने प्रकीर्तितः॥२४॥
फूत्कारे पि च फः प्रोक्तस्तथा निष्फलभाषणे॥ बकारो वरुणः प्रोक्तः
कलशे बः फले पि च॥२५॥ वक्षस्थले च बः प्रोक्तो गदायां समुदाहृ
तः॥ नक्षत्रे भं बुधाः प्राहुर्भवने भः प्रकीर्तितः॥२६॥ दीप्ति भास्या

च भूर्भूमिर्भीर्भयंकथितंबुधैः॥ मः शिवश्चंद्रमावेधा मालक्ष्मीच
प्रकीर्तिता॥ २७॥ माचमातरिमानेच बंधने मः प्रकीर्तितः॥ यशोयुः
कथितः प्राज्ञैर्यौ वायुरितिशब्दितः॥ २८॥ यानेयातरि युस्त्यागे
कथितः शब्दवेदिभिः॥ रश्चरामे ऽनिलेवन्हौभूमावपिधनेपिच॥
२९॥ इंद्रियेधनरोधेच रूपर्णयेच प्रकीर्तितः॥ लोदीप्तौ द्यांलश्चभूमौ
भयेचाल्हादनेपिच॥ ३०॥ लौवातेलवणेचस्या ल्लो दानेच प्रकीर्ति
तः॥ लः श्लेषेचाशयेचैवप्रलयेसाधनेपिलः॥ ३१॥ मानसेवरुणे
चैव लकारः सांत्वनेपिच॥ विश्वपक्षीनिगदितोगगनं प्रतिकीर्तितं
॥ ३२॥ शं सुखंशंकरः श्रेयः शश्चसीम्निनिगद्यते॥ शयनेशः स
माख्यातोहिंसायां शोनिगद्यते॥ ३३॥ षः कीर्तितोबुधैः श्रेष्ठे षश्च
गंभीरलोचने॥ उपसर्गेपरोक्षेच षकारः परिकीर्तितः॥ ३४॥ सः
कोपेवरणेसः स्यात्तथाशूलिनिकीर्तितः॥ साचलक्ष्मी बुधैः प्रोक्ता
गौरी साचसईश्वरः॥ ३५॥ हः कोपेवारणेहश्च तथा शूलीप्रकीर्ति
तः॥ हिः पद्मावरणेप्रोक्तो हिः स्याद्देवावधारणे॥ ३६॥ क्षः क्षेत्रेच
क्षसिप्रोक्तो बुधैः क्षः शब्दशासने॥ क्षिः क्षेत्रेक्षत्ररक्षेच नृसिंहेच
प्रकीर्तितः॥ ३७॥ आगमेभ्योभिधानेभ्योधातुभ्यः शब्दशासनात्॥
एवमेकाक्षरंनामाभिधानंक्रियतेमया॥ ३८॥ ॥ ७॥ ॥

---

इत्येकाक्षरकोशः समाप्तः

---

श्रीगणेशायनमः॥ ॥श्रीवज्रयोगिन्यैनमः॥ भुजगपतिविमुक्त
स्वच्छनिर्मोकवल्लीविलसितमनुकुर्वन्यस्यगंगाप्रवाहः॥ शिरसिस
रसभास्वन्मालतीदामलक्ष्मींलयतिहिमगौरःसोस्तुवःसाध्यसि
द्ध्यै ॥१॥ कल्पावसानसमयेस्थितपेकवीनांदेहांतरंकिमपियास्तृ-
जतिप्रसन्ना॥यस्याःप्रसादपरमाणुरपिप्रतिष्ठामभ्येतिकामपिन
मामिसरस्वतींताम्॥ २॥ निर्मत्सराःसुकृतिनःखलुयेविविच्यक
र्णेगुणस्यकणमप्यवतंसयंति॥ येषांमनोनरमतेपरदोषवादेतेके
चिदेवविरलाभुविसंचरंति॥ ३॥ मुक्तामयातिमधुरामसृणावदा
तच्छायाधिरागतरलामलसद्गुणश्रीः॥साध्वीसतांभजतुकंठम-
सौप्रियेवहारावलीविरचितापुरुषोत्तमेन॥४॥किन्नैवसंतिसुधि-
यामभिधानकोशाःकिंतुप्रसिद्धविषयव्यवहारभाजः॥ गोष्ठीषुवा
दपरमोहफलास्तुकेषांहारावलीनविदधातिविदग्धिमानं॥५॥एकं
तमेवगणयंतिपरंविदग्धावाचांविदग्धिमनिमज्जतियस्यलोकः॥
गोष्ठीषुयःपरमशाब्दिकदुर्गमास्तुदुर्बोधशब्दगतसंशयमुच्छिनत्ति
॥६॥आद्याधशब्दतःश्लोकैरर्धैरातलिनान्ततः॥शब्दाःपादैर्विबोद्ध-
व्याःप्रागनेकार्थतस्ततः॥७॥ ॥ ॥विषमनयनशंभूचंद्रमौ
लिर्भगाली वृषभगतिगणेशौरेरिहाणोवृषांकः॥त्रिपुरदहनशूलि
स्थाणुखट्वांगिहिंडिप्रियतमशितिकंठाश्च त्र्यंबकल्माषकंठौ॥१६॥
८॥शतधामाच्युतुष्णाणिःपृश्निगर्भोगदाग्रजः॥गदीकौस्तुभव
क्षाश्चपांचजन्यधरोच्युतः८॥९॥वैनतेयःपक्षिसिंहःशाल्मली
हरिवाहनः॥अमृताहरणस्तार्क्ष्योनागाशनखगेश्वरो ८॥१०॥ख
गपतंगवियन्मणिभानवोहरिभगोननिदाघकराद्रमः॥किरणमालि
विरोचनहेलयोदिनमणिस्तरणिश्चदिनप्रणीः १५॥ ११॥ श्रुतश्रवो
नुजः क्रोडोमंदश्छायासुतःशनिः॥सप्तार्चिर्नीलवसनःपातंगिःकृ

शिवस्य १६(८) विष्णोः ८(९) गरुडस्य ८(१०) सूर्यस्य १५(११) शनैश्चरस्य ९ १२

रलोचनः १॥१२॥ दाक्षायणीपतिवलक्षगुपक्षजन्मतुंगीशरात्रिम
णिदर्शविपक्षधांगः॥राजासमुद्रनवनीततमोनुदोमाग्लौरिंदुरे
णतिलकोहरिरोहिणीशौ १६॥१३॥महामृगःपुष्करदीर्घमारुतौ
विलोमजिह्वोजलकांक्षिसिंधुरौ॥द्विपायिस्तूर्पश्रुतिकुंभिसामजा
महामदःपेचकिपद्मिपीलवः १४॥१४॥दर्वीकरोविषधरः श्वसना-
शनोहिश्चक्रीफणाभरविषायुधदीर्घपृष्ठाः॥कुंभीनसद्विरसनोस
मकोलदंष्ट्रिगोकर्णकुंडलिलतारसनाविषास्यः १६॥१५॥मया
स्योपकृतंपूर्वमयंचोपकरिष्यति॥इतियःक्रियतेसंधिःप्रतीहारः
समुच्यते १॥१६॥शेषमक्षरमादायप्रतिश्लोकंक्रमेणयत्॥अ-
न्योन्यंपठ्यतेश्लोकःप्रतिमालेतिसामता १॥१७॥नभश्चरोवायु
दारुर्वनदोगगनध्वजः॥व्योमधूमोजलमसिःखतमालःपयोधरः
८॥१८॥हर्षादुत्सवकालेयदलंकारांबरादिकम्॥आकृष्यगृह्य
तेपूर्णपात्रंपूर्णानकंचतत् २॥१९॥स्मरतेकर्णदेशेषुयत्त्वदेशी
यभाषया॥दंपत्योर्जल्पितंमंदंमन्मनंतद्विदुर्बुधाः १॥२०॥प्रदी
यतेतुदेवेभ्योमनोराज्यस्यसिद्धये॥उपयाचितकंदिव्यदोह
दंतद्विदुर्बुधाः २॥२१॥नक्तंनिर्गत्ययत्किंचिच्छुभाशुभकरंवचः
श्रूयतेतद्विदुर्धीरादेवप्रश्नमुपश्रुतिं २॥२२॥वृद्धसूत्रकमित्या
हुरिंद्रतूलंमनीषिणः॥ग्रीष्महासंवंशकफंवाततूलंमरुध्वजं ६
२३॥दशांधनोगृहमणिःस्नेहाशःकज्जलध्वजः॥जटाज्वालोदशा
कर्षीकथितोबहुदृश्वभिः ६॥२४॥गोमयछत्रिकामाहुर्दिलीरंच
शिलींध्रकं॥उच्छिलींध्रंगवशारोहंगोलासमपरेविदुः ६॥२५॥हिमवान्
१हेमकूटश्च१निषधो१मेरु१रेवच॥चैत्रः१कर्णीच१शृंगी१च

चंद्रमसः १६(१३) गजस्य १४(१४) सर्पस्य १६(१५) प्रत्युपकारार्थकृतसमंजस० १(१६)
अंत्याक्षरक्रमेणश्लोकपाठस्य १(१७) मेघस्य ८(१८) हर्षेवस्त्राद्याकर्षणस्य २(१९)
दंपत्योःशनैःकथनस्य १(२०) इष्टार्थदेवेभ्योदीयमानद्रव्यस्य २(२१) आकाशवाण्याः
२(२२) आकाशउड्डीयमानसूत्रस्य ६(२३) प्रदीपस्य ६(२४) गोमयछत्रिकायाः ६(२५)

सप्तैतेवर्षपर्वताः।२६।।इतिश्लोकावधिः।। ।।व्याधोमृगवधाजी वोनिषादःपुल्कसःप्लवः५।।बालवायजमिछंतिवैडूर्यमणिमुत्त माः।।२७।।कालग्रंथिःसमाःसंवन्मासमानोयुगांसकः५।।मासोव र्षांशकःश्रामोवर्षांगःस्यादहर्गणः५।।२८।।मदयोगविधानंतुब्र स्तारं१करिणांविदुः।।पृष्ठवंशस्यचन्मांसंतल्लानं१तल्लक्षने।।२९। कर्णवेधनिकाप्रोक्तानालिके१तिविषाणिनां।।प्रवेस१मंतःस्वे- दानांदंतमांसंविदुर्बुधाः।।३०।।कुमारभृत्या१गर्भिण्याःपरिचर्या भिधीयते।।नवोढावस्त्रमानंदपट२मिछंतिसूरयः।।३१।।कर्णी स्रुतोमूलदेवोमूलभद्रःकुलांकुरः।।४।।ज्येष्ठामूलीयमिछंतिमास माषाढपूर्वजं१।।३२।।नित्यकर्मसमाचारनिष्ठुरस्त्वेकदुंकला१।।वी णानुबंधोधीमद्भिरुपनाहो२१भिधीयते३३।।स्यात्सालिकाकुंत लिका२दध्यादिछेदनीतुया।।वैशाखोदधिचारःस्यात्तक्राटःकर घर्षणः४।।३४।।स्यादाषाढभवोभौमोनवार्चिर्गगनोल्मुकः४।।पं चार्चिश्चश्रविष्ठाजोज्ञएकांगःप्रहर्षणः५।।३५।।द्वीदिविर्द्वादशा र्चिःस्याज्जीवःप्राक्फल्गुनीभवः४।।काव्योदैत्यपुरोधाःस्यात्षोड शार्चिर्मघाभवः४।।३६।।उपप्लवोकचःकेतुराश्लेषाभवआहिकः५ ।।ज्योतीरथोग्रहाधारोध्रुवउत्तानपादजः४।।३७।।स्वर्भानुंग्रहकल्लो लंविदुरभ्रपिशाचकं३।।वनीयकोयाचनकोवस्रकीटोमुखंपचः ४।।३८।।जायमानविषाणाग्रेकटाह्नो१महिषीशिशौ।।छेदोहस्ते नसस्यानांकटभंग१उदाहृतः।।३९।।जल आजंगमकुटीकावा रीमूर्द्धकर्परी ४।।उष्णावारणमुत्कूटश्चक्रांगंचपुटोटजं ४।।४०मुनी

सप्तवर्षपर्वतानांप्रत्येकमेकैकं१(२६) आधस्य ५(वैडूर्यस्य २(२७) संवत्सरस्य ५मासस्य ५(२८) करिणांमदयोगविधानस्य१गजपृष्ठमांसस्य१(२९) गजकर्णवेधिन्याः१गजदंतमांसस्य१(३०) गर्भिणीपरिचर्यायाः १नवोढावस्त्रस्य २(३१) ग्रामप्रधानदेवतायाः४) ज्येष्ठमासस्य१(३२) नित्यकर्माशक्तता याः१वैरानुबंधस्य २(३३) दध्यादिछेदिन्याः२दधिमंथनदंडस्य ४(३४) मंगलस्य४बुधस्य ५(३५) बृहस्पतेः४शुक्रस्य ४(३६) केतोः५ ध्रुवस्य ४(३७) राहोः३याचकस्य४(३८) जातशृंगस्यमहिषीशिशोः१हस्तेनसस्यछेदस्य१(३९) जलक्रीयाः४ छत्रस्य ४(४०)

नींचचिताकुत्यापर्णाद्रजसहोरजो २॥ कारोत्तरश्चवीनाहीप्रहिरंधू
र्जलांचिका ४॥४१॥ जलकुपीजलाष्ठीलीतलकंपुष्करिण्यपि ४॥अ
सन्नास्तमयःकश्चिदुपधूपित१इष्यते॥४२॥तक्षणादित्यमुक्तांतुव
दंत्यंगारिणीं१दिशं॥अगारितं१पलाशानांकलिकानिर्गमोभवेत्॥
४३॥गांधारंरक्तचूर्णंतुसिंदूरंरक्तवालुकं४॥कुसृत्याविभवान्वेषीपा
र्श्विकःसंधिजीवकः२॥४४॥अथश्वरोमवेद्योरःकुसुमालःकुजंभलः४
प्रोक्तःकरिकुसंभस्तनागकेसरचूर्णके२॥४५॥वर्बरंवर्बरीकंचव
र्बरीत्यपिचेष्यते३॥अभावात्स्त्रीपरित्यागस्तुरगब्रह्मचर्यकं१॥४६
यभिनांयद्वतंगोप्यंतत्खंजनतरंविदुः१॥स्यादाचामनकःप्रोक्तःकट
कोलपतद्ग्रहः४॥४७॥मेलामंदामसिमणिर्मसिधानीमसिप्रसूः५
बालोपरीतंतुविदुःपंचावटमुरस्कटं३॥४८॥नारीणांमंडलीनृत्यंबुधा
हल्लीषकंविदुः॥मारीचोयाजकगजोराजहस्तीमदोत्कटः४॥४९॥अ
लंकारसुवर्णंयत्तच्छृंगीकनकं१मतं॥रतिलक्षंनिधुवनंसंयोजनं३
मितिस्मृतं॥५०॥जीमूतकुटकुट्टीरकुट्टाराःकंदराकरः४॥उद्देशोगंड
कूपस्तुपर्वतस्याभिधीयते॥५१॥वासिताधेनुकाचैववशाचकरिणी४
मता॥अश्वाग्रभूःक्रतुपशुःसिंहविक्रांतवाजिनौ४॥५२॥समुद्रगा
निर्झरिणीतलोदाजंबालिनीशैवलिनीतरंगिणी६॥विपाठकादंबकपत्र
वाहाःपत्रीखगोवीरतरोस्त्रकंटकः७॥५३॥वर्णदूतःस्वस्तिमुखोले

---

मुनिचिताकुट्याः २ कूपस्य ४ (४१) पुष्करिण्याः ४ आसन्नास्तमयस्य १ (४२) तक्षणा
दित्यमुक्तदिशः १ पलाशकलिकायाः १ (४३) सिंदूरस्य ४ पिशुनस्य २ (४४) दिवाची
रस्य २ नागकेसरचूर्णस्य २ (४५) वर्बरस्य ३ अभावात्स्त्रीपरित्यागस्य १ (४६)
यतीनां गोप्यमैथुनस्य १ पतद्ग्रहस्य ४ (४७) मसिधान्याः ५ बालकपरिधान-
वस्त्रस्य ३ (४८ स्त्रीनृत्यस्य १ राजहस्तिनः ४ (४९) अलंकारसुवर्णस्य १ मैथुन
स्य ३ (५०) पर्वतस्य ४ पर्वतोच्चस्थलस्य १ (५१) हस्तिन्याः ४ अश्वस्य ४ (५२
नद्याः ६ शरस्य ७ (५३)

खोवाचिकहारकः ४॥लेखोनिबध्यतेयेनतत्रकाचनकाभिधा॥५४
क्षाराछंमाणिमंथंचविदुःसिंधूपलंबुधाः ३॥पिशितंपललंमांसंक्र
व्यमामिषमुद्दसं ६॥५५॥पारावारमहाकच्छौमहीप्राचीरदारदौ॥४
जिह्वादरःकीकशास्यश्चंचुमत्तरुशायिनौ ४॥५६॥ इंद्रक्रीडास
रःप्राज्ञैर्नंदीसर १इतिस्मृतं॥५७॥धूमोर्णापतिरुद्दिष्टोयमोम
हिषवाहनः ३॥५७॥पयोधनोमेघकफोघनोपलोमेघास्थिबीजो
दकतोयडिंभाः ६॥शंपाचिराभाचपलाछटाभाक्षादिन्यधीरा-
घनवल्लिकाच ॥७॥५८॥ पादालिंदीतरंडा नौस्तरणिस्तारणि
स्तरिः ६॥किलाटः शोषितक्षीरपिंडःसूरिभिरिष्यते॥५९॥का
लायसमयस्तीक्ष्णंगिरिसारंचशल्लकं ५॥ह्यस्यंगवीनंसरजंमंथजं
चकलंबुटं ४॥६०॥एकशफांघ्रिकंबंधमाहुर्दामांचलंबुधाः॥धे
तास्त्रीपुंसयोश्चिह्नंसामुद्रिक१उदाहृतः॥६१॥ तिंतिलीकाऽस्थि
भिर्द्यूतक्रीडायांचुंचुलि२॥र्भवेत्॥चक्राललाटगास्तिस्रोभस्मरे
खास्त्रिपुंड्रकं३॥६२॥हालाकामालिकामंडाधीरास्यात्मदनी
चमाध्वीच ६॥आहुश्चषकंतुपानपात्रंपारीमप्यनुतर्षणंकवीं
द्राः॥६३॥कुशुंभःकरकश्चैवत्यसुखःकमंडलुः ४स्मृतः॥असहा
योनर्तकश्चतालावचर१इष्यते॥६४॥कथितःकौमुदीवृक्षोदीप
वृक्षःशिखातरुः३॥कोजागरेतथासद्भिःकौमुदीचार२इष्यते॥६५

---

लिखनपत्रस्य ४ पत्रीबंधनस्य १ (५४) सैंधवलवणस्य ३ मांसस्य ६ (५५) समुद्र
स्य ४ पक्षिणः ४ (५६) इंद्रक्रीडासरसः १ यमस्य ३ (५७) मेघप्रस्तरस्य ६ विद्युतः
७ (५८) नौकायाः ६ शोधितक्षीरपिंडस्य २ (५९) लोहस्य ५ नवनीत स्य ४ (६०)
एकखुरयुक्तचरणबंधनस्य ३ स्त्रीपुरुषचिन्हवेत्तुः १ (६१) अस्थिभिर्द्यूतक्रीडा
याः २ ललाटस्थभस्मरेखायाः ३ (६२) सुरायाः ६ पानपात्रस्य ४ (६३) कमंडलोः ४ अ
सहायनर्तकस्य १ (६४) दीपवृक्षस्य ३ कोजागरायाः २ (६५)

समुद्रगृहमित्याहुर्जलयंत्रनिकेतनं २॥ प्रेतादिभिर्गृहीतोयः सआविष्टो १ऽन्नमन्वहिः॥६६॥ हिममिंद्राग्निधूमश्चखबाष्पोरजनीजलं ४॥ ये-शिवायतनोत्सृष्टास्तेसंध्याबलयो३वृषाः॥६७॥ विषाक्तास्त्रहतस्याहुः पशोर्मांसंतुगृंजनं १॥ धूमिकाधूममहिषीहिमझूंटिः कुहेलिका४॥६८॥ पोताच्छादनमाहुस्तवरकमथवस्त्रकुट्टिमंकवयः॥ तंत्रविमुक्तंवासोनिष्प्रवणिंनिष्प्रवाणि१ च॥६९॥ महाघोषं क्रयारोहंहट्टंपण्याजिरं४विदुः॥ बहुमानुषसंकीर्णंनिर्घंटंचकरांगणं२॥७०॥ शालभंजीदारुगर्भाकुरुंदीदारुपुत्रिका४॥ कादंबिनीनवोमेघः कालीस्यात्कालिका३पिच॥७१॥ क्रोशध्वनिः क्रोशताढक्का विजयमर्दलः ४॥ स्यात्प्रतिपत्तिःपटहोलंपापटह३इत्यपि॥७२॥ कुकूलंकायवलनंतनुत्रंदंशनं ४विदुः॥ शिरस्त्रंशीर्षरक्षंचशीर्षण्यं शीर्षकं४चतत्॥७३॥ स्याज्जालिकालोहमयीजालप्रायांगरक्षिणी२॥ पन्नध्रीपादविरजाः कोशीपादरथी४पावेत्॥७४॥ रुचकंलवणंक्षारंतीक्ष्णंजलरसं३विदुः॥ ज्योतिर्बीजंनरखद्योतंध्वांतोन्मेषंतमोमणिः४॥७५॥ जलसूकरजलजिह्मोजलकंटकवारिंटौतथानक्रे५॥ जलनकुलजलबिडालौनीराखुजलप्लवावुद्रे५॥७६॥ शिशुमारो जलकपिश्चपलांगोऽसिपुच्छकः४॥ ग्राहोजलकिराटश्चनक्रराजो जलाटकः४॥७७॥ मृतकांतकश्चभीरुर्वृकधूर्तशयालुवंचकाभ

---

जलयंत्रार्थगृहस्य२ प्रेतादिगृहीतस्य१(६६) हिमस्य४ शिवालयोत्सृष्टवृषस्य३ (६७) विषाक्तास्त्राहतपशुमांसस्य१ कुहेलिकाया४(६८) पोताच्छादनस्य३ तंत्रविमुक्तवाससः१(६९) हट्टस्य४ बहुनरसंकीर्णहट्टस्य२(७०) काष्ठपुत्तलिकायाः४ नूतनमेघजालस्य३(७१) ढक्कायाः४ पटहस्य३(७२) वस्त्रांगरक्षिण्याः४ शिरस्त्राणस्य४(७३) लौहवर्मणः२ उपानहः४(७४) क्षारलवणस्य३ खद्योतस्य४(७५) नक्रस्य५ उद्रस्य५(७६) शिशुमारस्य४ ग्राहस्य४(७७)

रुजः ७॥ शालामृगोस्थिभक्षोग्राममृगोमंडलः कपिलः ५॥७८॥ उल्कामुखीशृगालीचादीप्तजिह्वे१ निसामता॥ स्कंधवाहस्तुशंकश्चशृंगीगोरक्षधूर्जिलः ५॥७९॥ हेरंबः कासरश्चैवरक्ताक्षः सैरिभ४ स्तथा॥ रोमशोबहुरोमास्यादुरणश्चपृथूदरः ४॥८०॥ डुंडिक्कस्तुबालवाद्यावनछागोतिरोमशः ४॥ वरणोधूम्रशूकःस्यादुष्ट्रः शृंखलक४ स्तथा॥८१॥ चक्रमुखः सूचिरोमावराहः स्थूलनासिकः ४॥ कंठीरवस्तुपारींद्रः केसरीगजमाचलः ४॥८२॥ नेत्रपिंडोवृषाहारोमेनादःकुंदम४ स्स्मृतः॥ गंधाखुर्गंधनकुलश्चुचुःपुंचुष४ उच्यते॥८३॥ द्रोणारिष्टोनालिजंघआत्मघोषस्तुमोद्गलिः५॥ गोमंडीरःपंककीरोहापुत्रीराजभट्टिका४॥८४॥ गंगाचिल्लीतुदेवट्टीविश्वकाजलकुक्कुटी४॥ विट्सारिकातुकुणपीगोराटीगोकिराटिका४॥८५॥ मृगेन्द्रचटकोघातिपक्षीग्राहकमारकौ ४॥ कुलालंकुक्कुटंप्राहुःकुक्कुभंकुहकस्वरं ४॥८६॥ कर्करास्तःकलाटीनःखंजलेखस्तुखंजनः४ प्रासादकुक्कुटो झल्लकंठोगृहकपोतकः ३॥८७॥ ध्वांक्षपुष्टःकलकंठोमधुकंठःकुहूमुखः ५॥ झंपाशीमत्स्यरंकःस्याज्जलमद्गुर्मणीचकः४॥८८॥ कलविंकश्चित्रपृष्ठोगृहनीडोवृषायणः४॥ बरंडाचित्रपादाचचित्रनेत्राचसारिका४॥८९॥ मयूरचटकोदक्षःकृकवाकुर्निशाकरः ५॥ शतपत्रःसितापांगःप्रचलाकीचचंद्रकी ४॥९०॥

---

शृगालस्य ७ शुनः ५ (७८) उल्कामुखीशृगाल्याः १ शाकटादिवाहकवृषभस्य ५ (७९) महिषस्य ४ मेषस्य ४ (८०) बृहद्वानरस्य ४ उष्ट्रस्य ४ (८१) वराहस्य ४ सिंहस्य ४ (८२) विडालस्य ४ छुछुंदर्याः ४ (८३) दग्धकाकस्य ५ हापुत्र्याख्यपक्षिणः ४ (८४) गंगाचिल्याः ४ विट्सारिकायाः ४ (८५) श्येनस्य ४ वनकुक्कुटस्य ४ (८६) खंजरीटस्य ४ कपोतस्य ३ (८७) कोकिलस्य ४ मत्स्यरंगस्य ४ (८८) कलविंकस्य ५ सारिकायाः ४ (८९) ग्रामकुक्कुटस्य ४ मयूरस्य ४ (९०)

किसलयमपितरुरागं विदुर्लतायावकं प्रवालं च ४॥ कंटकसंज्ञास्तरुनरवसिताग्रदलसूचिरा किल द्रुमराः ६॥९१॥ द्रोणीदलः सूचिपुष्पो जंबूलः क्रकचच्छदः ४॥ मंडातिष्यफला धात्री वल्या पंचरसा शिवा ६॥९२॥ सहस्रवीर्या विरजा भार्गवी मंडली रुहा ५॥ प्रहर्षिणी निशाह्वा चलसा गंधपलाशिका ४ ॥९३॥ मृदुपुष्पः शूकतरुः शिरीषो विषनाशनः ४॥ वराहकाली कथितः सूर्यावर्त २ स्तु शाब्दिकैः ॥९४॥ वज्रवल्यस्थिसंहारो हस्तिशुंडी वनालिका ४॥ वनतिक्त स्त्रियां ग्रीष्मा तिरीटः पक्षस्कंदरः ३॥९५॥ मधुपुष्पो मधूकश्च गुडपुष्पो मधुद्रुमः ४॥ वृत्तपुष्पः प्रावृषेण्यो हारिद्रस्तु हलिप्रियः ४॥९६॥ एला त्वचिस्कगंधा च पुटिका चर्मसंभवा ४॥ कूष्मांडकः पुष्पफलो घनवासश्च वेष्टकः ४॥ ९७॥ वेषणः कासमर्दश्च पत्रोपस्कर ३ इत्यपि ॥ ओकोदशाली प्राचीरमोघोलिर वहालिका ५॥९८॥ कल्यवर्त्तः प्रातराशः प्रातर्भोजनमिष्यते ॥ शृगालिका च डिंबं च डमरं विद्रवो ४ पि च ॥९९॥ स्कंधफलः स्मुतुंगश्च नारिकेलः पुरोदकः ४॥ गुडदारुर्मधुतृणमसिपत्रो महारसः ४॥१००॥ राजालुको महाकंदो मूलको हस्तिदंतकः ४॥ क्षुद्ररसा तिक्तगुंजा सरघा विद्रूपर्कटी ४॥१॥ क्षुद्रपत्रा च चांगेरी क्षुद्राम्ला चाम्ललोणिका ४॥ प्राचीनामलकं रक्तं बदरामलकं ३ तथा ॥२॥ पिष्टसौरभमेकांगं श्रीखंडं मालयं ४ विदुः ॥ मृगनाभि

---

नूतनपल्लवस्य ४ वृक्षकंटकस्य ६ (९१) केतकस्य ४ धात्र्याः ६ (९२) दूर्वायाः ५ गंधपलासिकायाः ४ (९३) शिरीषस्य ४ सूर्यावर्त्तस्य २ (९४) अस्थिसंहारस्य ४ लोध्रस्य ३ (९५) मधूकवृक्षस्य ४ कदंबस्य ४ (९६) एलायाः ४ कूष्मांडस्य ४ (९७) कासमर्दस्य ३ भित्तेः ५ (९८) प्रातर्भोजनस्य ३ भीत्यापलायनस्य ४ (९९) नारिकेलस्य ५ इक्षोः ४ (१००) मूलस्य ४ करंजस्य ४ (१०१) आम्ललोनिकायाः ४ प्राचीनामलकस्य ३ (१०२) श्रीखंडस्य ४ (१०३)

मृगमदोगंधशेखर ३ मित्यपि ॥३॥ सिताभ्रंतरुसारंचवेरकंरसचके सरं ४॥ कालेयंवंशकंजोंगंकालीयंवरचंदनं ५॥४॥ तृणसारामृत्यु फलारंभाच्चकदली ४ भवेत् ॥ ऊर्ध्वासितःपरारुस्यात्तथाराजपटो लकः ३॥५॥ कुंकुमंपीतकावेरंघुसृणंकुंकुमात्मकं ४॥ अरकोजल केशश्चकावारंशैवलं ४ विदुः॥६॥ उन्मत्तकाहलापुष्पोद्धहस्ताट लिघांटिकौ ४॥ किंशुकःकरकःपर्णीलाक्षावृक्षःसमीरवः ४॥७ ॥अमंडपंचांगुलवर्धमानागंधर्वहस्तस्त्रिपुटीफल ५ श्च॥ रेणुः सतीलस्तृणकेतुमृत्युबीजोकिलाटीच ततःसपर्वा ६॥८॥ कच- मालोमरुद्वाहोधूमोमभः शिखिध्वजः ५॥ शाखानगर १ माहुस्त- द्यदभ्यर्णपुरांतरं॥९॥ आहुर्जलकरंकश्चजलजंस्वचिकामुखं ३॥ उपजिह्विकोसादिकाचवटिरुद्देहिकादिवी ५॥१०॥ शुल्बमौ दुंबरंरक्तंम्लेच्छास्यंताम्रकं ५ विदुः॥ दुर्नामादीर्घकोषीस्यात्पंक शुक्तिःसितालिका ४॥ ११॥ आकाशमूलीकुतृणंकुंभिकाजलव ल्कलं ४ ॥ शंबूकोजलडिम्बःस्याद्दुश्चरःपंकमंडुकः ४॥१२॥ आ टीलकं १ तर्णकानांस्थलीसक्रीडनंमतं॥ यष्टिःशब्दवतीधीरैःखे खीरक १ इतिस्मृता॥१३॥ लेखात्रयांकितंभालंत्रिपताकं १ विदुर्बु धाः॥ अर्धचंद्रंकर्करेटंविदुरंगुलितोरणं ३॥ १४॥ सिद्धूजलंच- गृहाम्लमवंतिसोमंतुषोदकंशक्तं ५॥ नभ्राटकनिर्ग्रंथिकभदंत-

कस्तूर्याः ३ (१०३) कर्पूरस्य ४ अगुरुइतिख्यातस्य ५ (४) कदल्याः ४ पटोलस्य ३ (५) कुंकुमस्य ४ शैवलस्य ४ (६) धूस्तूरस्य ४ पलाशस्य ४ (७) एरंडस्य ५ वंशस्य ६ (८) धूमस्य ५ नगरांतिकपुरस्य १ (९) शंखस्य ३ उपजिह्विकायाः ५ (१०) ताम्रस्य ५ पंक शक्तेः ४ (११) कुंभिकायाः ४ शंबूकस्य ४ (१२) तर्णकक्रीडनस्य १ शब्दवतीयष्टयाः १ (१३) लेखात्रयांकितभालस्य १ गलेहस्ताधानस्य ३ (१४) कांजिकस्य ५

दिगंबरकानग्ने ५॥१५॥ करपात्रंजलक्रीडाव्यात्युक्षीकरपत्रिका ४ ॥ शराणांपत्ररचनापत्र णा १ परिकीर्तिता ॥१६॥ पंचभद्राहया १ स्तेयेपंचस्वंगेषु पुष्पिताः ॥ यश्वारको मुहुःभुजांसस्याद्दल्लभपालकः १॥१७॥ निगालस्थोयआवर्त्तः सहिदेवमणिः १ स्मृतः ॥ तथावक्षसिवाहस्यश्रीवृक्षक १ उदाहृतः ॥१८॥ बंधः पलाशपत्राणांशीर्षेपत्रपिशाचिका १॥ स्रुवसंतक १ शब्देनउच्यतेमदनोत्सवः ॥१९॥ कर्वटं १ द्विशतग्राममध्येग्राममनोहरं ॥ तथाचतुःशतग्राममध्येद्रोणमुखं १ विदुः ॥२०॥ यद्यात्रामंगलंसामतदप्रतिरथं १ विदुः ॥ शालाप्रसादशिखरेचंद्रशालेति १ कीर्तिता ॥२१॥ ॥ इत्यर्धश्लोकावधिः ॥ ॥ तलिनंतुच्छ २ मित्याहुर्गृहाश्मा- गृहकच्छपः २॥ खसंचाररपुरंसौधं १ रथ्यापांशुकुली २ भवेत् ॥ एकनटः स्यात्कथको २ भंडश्चाटुपटुः २ स्मृतः ॥ मक्षिकाभस्मराली २ स्यात्सांशफरोदंशकः २ स्मृतः ॥२३॥ देवोद्यानंतुवैभ्राजं २ दीपालीदीपशृंखला २॥ स्रुकुमारोपिसोमालं २ विषमेस्थपुटं २ विदुः ॥२४॥ दुणहः खड्गपिधानं २ सारिणीचप्रणालिका २॥ यज्ञस्थानंयज्ञवाटं २ तृष्णाधनपिशाचिका २॥२५॥ स्मृताबाल्वंगिरिर्वाकुः २ स्फु

---

दिगंबरयोगिनः ५ (१५) जलक्रीडायाः ४ शरपत्ररचनायाः १ (१६) पंचकल्याणघोटकस्य १ अश्ववारकस्य १ (१७) अश्वगलोद्देशस्थावर्तस्य १ अश्ववक्षःस्थावर्तस्य १ (१८) पलाशपत्राणांशीर्षेबंधस्य १ मदनोत्सवस्य २ (१९) द्विशतग्राममध्यग्रामस्य १ चतुःशतग्राममध्यग्रामस्य १ (२०) यात्राकालेसामवेदपाठस्य १ प्रासादशिखरस्थशालायाः १ (२१) तुच्छस्य २ पेषणशिलायाः २ सौधस्य १ राजमार्गस्य २ (२२) कथकस्य २ भंडस्य २ मक्षिकायाः २ दंशस्य २ (२३) देवोद्यानस्य २ दीपावल्याः २ सुकुमारस्य २ विषमस्य २ (२४) खड्गपिधानस्य २ जलनिर्गममार्गस्य २ यज्ञस्थानस्य २ लोभस्य २ (२५) इर्वारोः २ (२६)

रिरिर्वारुशफ्तिका २॥ नाटाम्रस्तिमिषः सेटुः ३ कोमासिका तु जालिका २॥ २६॥ पुंजातुकः फलेलाकु २ स्तुणता धनु २ रिष्यते॥ कैराती दीर्ग्रहस्तामाः ३ सिंघाणं काचभाजनं २॥ २७॥ दर्वटो दंडवादी २ स्यात्स्तेनः शौकितवर्णकः २॥ प्रारब्धिः करिबंध २ स्स्यात्कष्टस्थानं तुवारकं २॥२८॥ भोगावली बंदिपाठः २ सेतुः पूरणपिंडलो ३॥ देवद्रोणी देवयात्रा २ शूनाधोजिह्विका २ मता ॥२९॥ पालिः समुत्थितश्मश्रु २ र्मोरुंडो त्खललाटिका २॥ राका १ दृष्टरजाः कन्यापोटा १ स्त्रीपुंसलक्षणा ॥३०॥ महत्तरो ग्रामकूटो २ मर्म्मरो १ ऽव्यक्तनिःस्वनः॥ शिवालयः पितृवनौ चिताकाष्ठमठी चितिः ३ ॥३१॥ कर्णवंशो भवेन्मंचः २ श्रीग्रहः शाकुनिप्रपा २॥ तांबूलदो वागुलिकः २ स्फुरभिः फाल्गुनानुजः २॥ ३२॥ तांबूलरागो मस्फुर २ स्तरुबारिः कृपाणकः २॥ स्वागतं कुशलप्रश्नः २ सामीची वंदना २ मता ॥३३॥ समुद्गः संपुटो २ ज्ञेयो हयस्कंधो हयच्छटा २॥ पिंडाशो महिषीपालो २ मसूरे च गभोलिकः २॥ ३४॥ काहली तरुणी २ प्रोक्ता छुरा तु कथिता स्कधा २॥ कांपिल्लिका रोचनिका २ कालिका वस्करटिका २॥ ३५॥

---

स्फुटेः २ नाटाम्रस्य ३ जालिकायाः २ (२६) जीवनवृक्षस्य २ धनुषः २ बलवत्पुरुषस्य ३ काचभाजनस्य २ (२७) दंडवादिनः २ चौरस्य २ गजबंधनस्तंभस्य २ कष्टस्थानस्य २ (२८) बंदिपाठस्य २ सेतोः ३ देवयात्रायाः २ उलूखलादिपंचसूनायाः २ (२९) सश्मश्रुस्त्रियाः २ उच्चललाटस्त्रियाः २ दृष्टरजःकन्यायाः १ पुंसलक्षणायाः १ (३०) महत्तरस्य २ अव्यक्तशब्दस्य १ स्मशानस्य २ चितायाः ३ (३१) मंचस्य २ पक्षिणः पानीयशालायाः २ वसंतकालस्य २ तांबूलदातुः २ (३२) तांबूलरागस्य २ खड्गस्य २ कुशलप्रश्नस्य २ स्तुतेः २ (३३) संपुटस्य २ हयस्कंधस्य २ महिषीपालस्य २ वृहन्मसूरस्य २ (३४) तरुण्याः २ लेपनद्रव्यस्य २ रोचनिकायाः २ वृश्चिकायाः २ (३५)

कालिकाक्षीरकीटः स्यात्खंडपालस्तु खांडिकः २॥ पांशुरः पीठसर्पी २ स्याद्दुल्ललोरोमशः २ स्मृतः॥३६॥ पूगपात्रे फरुवकं २ कबंधो रुंड २ मुच्यते॥ तूलिकास्यान्नवतिका २ स्त्यानमालस्य २ मुच्यते॥३७॥ भाजने कमठं प्रोक्तं पुण्यश्लोको नलो २ मतः॥ गौरवे प्रतिपत्तिः २ स्याद्धारिः पथिकसंहतिः २॥३८॥ यामकिन्यपि यामिस्त्री २ हाफिका चोपपुष्पिका २॥ वातपुत्रे विटधरौ ३ निर्माल्यं निर्मलं २ मतं॥३९॥ इंद्रासने मता गुंजा २ गुलुंचो गुच्छको २ मतः॥ भोगावासो वासगृहं २ मेंठो हस्तिपकः २ स्मृतः॥४०॥ मायुः पलाग्निः पललं ज्वरः स्यादजीर्ण-मंत्रं धमिरामयश्च ४॥ तृप्तिश्च सौहित्यमुदंनिका ३ स्यात्स्फरुक्षारिका भोगपिशाचिका ३ च॥४१॥ मोगो जलवरंटः २ स्यात्कणा कुंभीरमक्षिका २॥ वहलं वार्बटः पोत ३ स्तरालुश्चाहिपुत्रकः २॥४२॥ काहलस्तु महानादो २ मार्दंगं पत्तनं २ विदुः॥ स्यादरित्रं तरिरथः २ पात्रपालस्तु लाधटः २॥४३॥ काकिनी पणतुर्यांशो १ ज्वलदंगार उल्मुकं १॥ अयानं च स्वभावः २ स्यान्मंजिका वारसुंदरी २॥४४॥ नीलमणिर्मसारः २ स्याद्गुंजा पाठहिका २ मता॥ भार्या पाणिगृहीती च दुकूलं-

---

क्षीरकीटस्य २ मोदकस्य २ रक्तजनघोटकस्य २ बहुरोमयुक्तस्य २ (३६) पूगपात्रस्य २ कबंधस्य २ चित्रलेखिन्याः २ आलस्यस्य २ (३७) पात्रस्य २ नलराज्ञः २ गौरवस्य २ पथिकश्रेण्याः २ (३८) यामिकस्त्रियाः २ जृंभायाः २ महाधूर्तस्य ३ निर्माल्यस्य २ (३९) गांजेतिप्रसिद्धस्य २ गुलुंचस्य २ वासगृहस्य २ हस्तिपकस्य २ (४०) पित्तस्य ३ अंत्रस्य ४ तृप्तेः ३ क्षुधायाः ३ (४१) जलवसंतारव्यव्रणस्य २ कुंभीरमक्षिकायाः २ पोतस्य ३ नौकाजलोत्सारकस्य २ (४२) बृहतढक्कायाः २ मृदंगस्य २ अरित्रस्य २ तुलाधटस्य २ (४३) पणचतुर्थांशस्य १ ज्वलदंगारस्य १ स्वभावस्य २ वेश्यायाः २ (४४) नीलमणेः २ गुंजायाः २ भार्यायाः २ (४५)

क्षोम २ मुच्यते ॥ ग्रंथस्यानिर्मितो शय्यो वधूटी वधुटी जनी ३॥ वंदिचौ रोमाञ्चलः २ स्यात्कुंभिलः संधिहारकः २॥ ४६॥ अभ्रमु १ स्त्वभ्रना गस्यकुमुदस्य तु पिंगला १॥ अंगना १ वामनस्य स्यादंजनस्यांजनाव ती १॥ ४७॥ कपिला पुंडरीकस्यानुपमा १ सुप्रतीकस्य॥ शेषस्य ता-म्रकर्णी विशफ्रदंनी १ सार्वभौमस्य॥ ४८॥ सेवा च्चाटू क्तिरालोको २ मठो गंत्री रथः स्मृतः॥ चिपिटो धान्यसमसः २ स्कानिको लाजउत्तुषः ३॥ ४९॥ अभ्यासो गुणनीयः २ स्यान्माढिः पत्रशिरा २ मता॥ भौनोदे वलकः ख्यातः खेटकं वसुनंदके २॥ ५०॥ पुरंदरा तु स्करला २ कावे री चार्धजान्हवी २॥ कौमुदः कार्तिको मासः २ सौभिकस्त्विंद्रजालि कः २॥ ५१॥ प्रहेलकं वाचनकं २ वीक्षापन्नः सविस्मयः २॥ कुटलं पटलं नीव्रं ३ वीथी गृहतती २ मता॥ ५२॥ सर्ववेशी नटः प्रोक्तो २ मंदा क्षे तु नरांतिका २॥ मूस्कली कुठिकः २ प्रोक्तः शालूरो वृष्टिभूः प्लवः ३ ॥ ५३॥ स्वेदः सिप्रस्तनुरस भ्रूल्लवस्पुष्पं तु स्वंगकुरः २॥ नवोढा नववरि का २ दिक्करी नवयौवना॥ ५४॥ सौवर्चले च रुचकं २ हिंगुले रक्तपा रदम् २॥ रक्तोपलं गैरिके च २ पारदे सूनकं २ विदुः॥ ५५॥ साधूकः

---

पट्टवस्त्रस्य २ (४५) ग्रंथनिर्माणस्य १ नवीनस्नुषायाः २ वंदिचोरस्य २ संधिहारक स्य २ (४६) ऐरावतदिग्गजपत्न्याः १ कुमुददिग्गजपत्न्याः १ वामनदिग्गजस्त्रियः १ अंजनदिग्गजस्त्रियः १ (४७) पुंडरीकदिग्गजस्त्रियः १ सुप्रतीकदिग्गजस्त्रियः १ पुष्पदन्तदिग्गजपत्न्याः १ सार्वभौमदिग्गजपत्न्याः १ (४८) सेवनस्य ३ शकट स्य २ चिपिटस्य २ लाजानां ३ (४९) अभ्यासस्य २ पत्रभंगस्य २ भूतसेवक स्य २ धनवृद्धिजीवकस्य २ (५०) गंगायाः २ कावेर्याः २ कार्तिकमासस्य २ इंद्र जालिकस्य २ (५१) प्रहेलिकायाः २ विस्मितस्य २ समूहस्य ३ वीथ्याः २ नटस्य २ (५२) लज्जायाः २ कुष्ठारव्यौषधस्य २ भेकस्य ३ स्वेदस्य २ रोमांचस्य २ नवोढायाः २ नवयौवनायाः ३ (५४) सौवर्चललवणस्य २ हिंगुलस्य २ गैरिकस्य २ पारदस्य २ (५५)

कंबलः २ स्यात ईर्मा व्रणं दुरोवणः ३॥ कपदः पारिहार्यः स्या २ दीर्ष्या
लुः कुहनः २ स्मृतः ॥५६॥ ऋणमोक्षे विगणनं २ लग्नके ऋणमार्ग-
णः २॥ भिक्षाशिल्तं तु पैशून्यं २ मंडः पिच्छां धस ३ स्तथा ॥ ५७ ॥
वायुके तुः क्षितिकणः स्यादास्फाले झलञ्झला १३॥ नष्टाप्तिस्तु
त्रैलोत्रं स्याद्याप्ययानं शिबीरथः २॥ ५८ ॥ मल्लयात्रा मालुवा स्या
२ न्निर्भर्त्सनमलक्तकः २॥ कोशलिकाप्राभृतकं २ मट्टकं लासकं २
विदुः॥५९॥ स्वदोषाच्छादनं मक्ष २ श्चूल्ली स्यान्मलकारिका २॥
वानाश्वो भूमिपक्षः २ स्याद्धारु र्विजयकुंजरः २॥ ६०॥ प्रभाते गो
सगो सर्गी ३ वंजनी लेपकामिनी २॥ उत्कटो गंडकुसुमं २ सिद्धः
सौमेधिकोमतः २॥ ६१॥ वृषाकपिः शिखी शुष्मा ३ भस्म पार्षट
मर्घटं ३॥ उष्ट्रवाही मीरथो ध्युष्ट्री गंत्री लघ्वी हिवेशरा ३॥ ६२
क्रुषणः कृमिरुद्दिष्टः २ शक्रुत्कीटे ऽन्यकारुका ३॥ भारवाहो
भारिकः स्या २ त्स्कंधचापो विहंगिका २॥ ६३॥ उन्नतो ऽजगरः २
प्रोक्तो द्विमुखा हि रही रणिः २॥ पुरोटिः पुरसंस्कारे २ हट्टी पुरतटी
२ मता ॥ ६४॥ मृणालिनी पुटकिनी २ स्थासको बुद्बुदो भवेत् ॥ क-

---

कंबलस्य २ व्रणस्य ३ करकस्य २ ईर्ष्यायुक्तस्य २ (१५६) ऋणमोक्षस्य २ ल
ग्नकस्य २ पैशून्यस्य २ मंडस्य २ (५७) धूलेः २ आस्फालस्य २ चौरनीतद्रव्य-
स्य किंचित्प्राप्तेः २ शिबीरथस्य २ (५८) मल्लयात्रायाः २ निर्भर्त्सनस्य २ प्रा
भृतकस्य २ अट्टालिकायाः २ (५९) स्वदोषाच्छादनस्य २ चुल्याः २ वानाश्व
स्य २ विजयकुंजरस्य २ (६०) प्रभातस्य ३ लेप्यकामिन्याः २ संजातमदस्य
हस्तिनः २ सिद्धस्य २ (६१) अग्नेः भस्मनः ३ उष्ट्रयुक्तरथस्य २ लघुरथस्य
३ (६२) कृमेः २ विष्ठायाः २ भारवाहस्य २ वंशादिनिर्मितशिक्याधानस्य २ (६३)
अजगरसर्पस्य २ द्विमुखसर्पस्य २ पुरसंस्कारस्य २ क्षुद्रहट्टस्य २ (६४) पु-
टकिन्याः २ बुद्बुदस्य २ (६५)

लाचीतुप्रकोष्ठःस्या २ द्धस्तपुच्छस्तकन्युषं २॥ ६५॥ उत्साहःसू
म्रनंतुः २ स्यात्सिंडीरोनीरसः २ स्मृतः॥ हरिणहृदयो भीरुः २ संदेशो
क्तिस्तवाचकं २॥ शालाजिरोवर्धमानं २ कुसीदंतु कलांतिका ॥२
चर्वातलप्रहारः २ स्यात्कर्करं २ मुद्गरंविदुः॥ ६७॥ गोष्ठागारे ऽपि
गंजः २ स्याच्चिंतावेश्मनिदार्वटं २॥ मानग्रंथिर्भवेन्मंतुर्निष्कुटो-
गृहवाटिका २॥ ६८॥ शैलस्यकटकेदंत २ स्तद्दिनंप्रतिवासरं २॥
सूत्रमेवस्तनतंतुः २ कृशरा ऽपितिलौदने ॥२॥ ६९॥ स्यादासवोपि
कुरसः २ सरकंमद्यभाजने २॥ निश्चुक्कणंदंतशाणं २ गोग्रंथिः
श्रक्ष्णगोमये। २॥ ७०॥ अष्टापदंनयपीठी २ नय स्तज्जतुपुत्रकः
२॥ विंदुतंत्रोभवेदक्षः पांचाली शालिशृंखला २॥ ७१॥ प्रस्ता
रस्तल्पिनंशय्या ३ रोमगुच्छः प्रकीर्णकं २॥ शिवाल्लोपाशिका २ शु
यासरमातुं बरीशुनी ३॥ ७२॥ पादांगदी हंसकः २ स्यात्प्रतिकर्म
प्रसाधनं॥ कर्णपालीतुकर्णाद्दू २ रंगुलीयकमूर्मिका २॥ ७३॥
खातभूःप्रतिकूपः २ स्यात्तुंभास्याद्वाटशृंखला २॥ कंधरातोरणं
कंठी ३ सूत्रालीगलमेखला २॥ ७४॥ शासनंधर्मकीलः २ स्या-

---

(६५) विस्तृतकरस्य २ हस्वपुच्छस्य २ उत्साहस्य २ रसशून्यस्य २ भयशीलस्य २ संदे
शवाक्यस्य २ (६६) शरावस्य २ कुसीदस्य २ तलप्रहारस्य २ मुद्गरस्य २
(६७) गोष्ठागारस्य २ मंत्रणागृहस्य २ अपराधस्य २ गृहवाटिकायाः
२ (६८) शैलनितंबस्य २ प्रतिवासरस्य २ सूत्रस्य २ सतिलौदनस्य २ (६९)
मदिराभेदस्य २ मद्यभाजनस्य २ दंतशाणस्य २ श्लक्ष्णगोमयस्य २ (७०) शारिफलस्य २
गुटिकायाः २ पाशकस्य २ शारिशृंखलायाः २ (७१) शय्यायाः ३ चामर-
स्य २ शृगाल्याः २ कुक्कुरस्त्रियः ३ नूपुरस्य २ (७२) वेषस्य २ ताटंकस्य २
अंगुलीयकस्य २ (७३) परिखायाः २ वाटशृंखलायाः २ कंठ्याः ३ गल-
सूत्रस्य २ राजशासनस्य २ (७५)

स्त्वकृतंभ्रूद्रशासनं २॥ पट्टोलिकाकृसकीला २सिंदुरंरक्तशासनं
२॥७५॥रासस्तुगोदुहांक्रीडा २गीतिःपारावती २तथा॥वेणु
र्यवफलोवंशो ३नवीनेनवकालिका २॥७६॥मुरवघंटाकुलकु
ली २तलाचीनलपट्टिका २॥नीपोधराकदंबः २स्याद्धीरभद्रस्तु
वीरणं २॥७७॥खड्गुटस्तुबृहत्काशं २कोशांगमिलकटं २विदुः॥
गंडीरस्तुसमंठः २स्याद्धीबेरंवारिवालकं २॥७८॥शितोत्पलंगं
धसोमं २हरिमंथोतिमुक्तकः २॥कर्कारुकस्तुकालिंगः २शृंगा
टोजलकंटकः २॥७९॥हिलमोचीजलब्रह्मी २वायसीकाकमा
चिका २॥पुंनागःकेसरश्चैव २चांपेयोनागकेसरः २॥८०॥स्या-
द्दोलिकाचहिंदोला २ल्यावण्यंलवणं २मतं॥स्त्ररवाशोराजनिमि
षः २कटुकोराजसर्षपः २॥८१॥सितमाषोराजमाषो २मसूरो-
व्रीहिकांचनः २॥मधुक्षीरस्तुखर्जूरः २शालःशंकुतरू २र्मतः॥
८२॥मुस्तोराजकशेरुः २स्याद्धौहिणश्चंदनद्रुमः २॥काकमद्गुर्ज
लरंकः २कोयष्टिर्जलकुक्कुभः २॥८३॥वर्तिकाविष्णुलिंगी २स्या
द्भुनाखुःशशकः २स्मृतः॥ ताम्रकृमिरिंद्रगोपो २गृहगोधागृहालि

---

१रुद्रशासनस्य २ पट्टाख्यपत्रस्य २ रक्तशासनस्य २ (७५) गोपक्रीडायाः २ गोप
शिशुगीतस्य २ वंशविशेषस्य ३ नवीनस्य २ (७६) मुखवाद्यस्य २ नलिपट्टिकायाः २
धराकदंबस्य २ वीरणस्य २ (७७) बृहत्काशस्य २ कोशांगस्य २ गंडीरस्य २ ह्रीवे
रस्य २ (७८) सीतोत्पलस्य २ अतिमुक्तस्य २ कर्कारुकस्य २ शृंगाटस्य २ (७९)
हिलमोच्याः २ काकमाच्याः २ पुन्नागस्य २ नागकेसरस्य २ (८०) हिंदोलिकायाः २
सौंदर्यस्य २ स्त्ररवाशकस्य २ राजसर्षपस्य २ (८१) सितमाषस्य २ क्षुद्रमसूर-
स्य २ खर्जूरस्य २ सालवृक्षस्य २ (८२) मुस्तस्य २ रक्तचंद्नस्य २ जलरंकस्य २
कारंडवपक्षिणः २ (८३) वर्त्तिकायाः २ शशस्य २ ताम्रकृमेः २ (८४)

का२॥८४॥ दिवांधोहरिनेत्रः स्याद्गोनंदीलक्ष्मणा२मता॥कुरंकुरः पुष्करान्हो२वातुलिस्तरुतूलिका२॥८५॥ कोलपुछस्तु कंकः स्याद्गर्गाटो योगनाविकः२॥ ग्राम्यमद्गुरिका शृंगी२राजशृंगस्तु मद्गुरः२॥८६॥ पंकग्राहस्तु मकरः२शफरः श्वेतकोलकः२॥ चिंगटस्तु महाशल्कः२पोताधानं जलांडकं२॥८७॥ फलकीतुचित्रफली२मत्स्यराजस्तु रोहितः२॥ काकोचिकस्तु काकोची२वकाचीवकचिंचिका२॥८८॥ कवयीककचपृष्ठी२ खलेशस्तु खलेशयः२॥ इल्लिशो राजशफर २ इंचाको जलवृश्चिकः२॥ ८९॥ दंडपालोर्धशफरः२ कंकत्रोटो जलव्यथः२॥ लघुगर्गस्त्रिकंटः स्यात्सितांको वालुकागडः२॥ ९०॥ कनकपलः कुरुबिस्तः२ करिकवलो विधानं स्यात्॥ आह्नीतु पंकगडकः२शकुलो दंडपालकः२॥९१॥ निचोलकं निचुलकं२ मंदामणिरलिंजरः२॥ वेदिः स्थंडिलसितकं२ पन्याटो निष्कुठः स्मृतः॥९२॥ लोपासिकारिवंरिवरी स्यात्पल्याटो निष्कुटः२स्मृतः॥ अंकेष्वेवांकमंगानि२ स्मृतमुत्तानमुत्कटं२॥९३॥ स्यान्मार्जितार सालाश्च बुक्कारः सिंहनादकः२॥ कर्णगूथं कर्णमलं२सिंहाणंना

---

सुशल्यांः२(८४) पेचकस्य२ सारसयोषितः२ सारसस्य२ वादुलेः२(८५) कंकपक्षिणः२ गर्गाटमत्स्यस्य२ शृंग्याः२ मद्गुरस्य२(८६) मकरस्य२ शफरस्य२ चिंगटस्य२ रोहितादिशिशोः२(८७) फलक्याः२ रोहितस्य२ काकोचिकस्य२ वकचिंचिकायाः२(८८) कवयीमत्स्यस्य२ खलेयशस्य२ इल्लिशस्य२ जलवृश्चिकस्य २(८९) अर्धशफरस्य२ जलव्यथस्य २ त्रिकंटस्य२ वालुकागडस्य२(९०) कनकपलस्य२ करिकवलस्य२ पंकगडकस्य २ शकुलस्य२(९१) निचोलस्य२ अलिंजरस्य२ वेद्याः२ उपवनस्य२(९२) रिवंरिव रिकायाः२ पल्याटस्य२ अंगस्य२ उत्तानशयनस्य२(९३) नक्रस्य२ सिंहनादस्य २ कर्णमलस्य२(९४)

सिकामलं२॥ १४॥ दंतमलंपुष्पिका२स्यात्कुलकंरसनामलं२॥का रंधमीधातुवादी२दरिद्रोदुर्विधः२ स्मृतः॥१५॥ स्यान्मंत्रगंडकोवि-द्या२पक्षद्वारंखडक्किका२॥ आर्द्रवस्त्वंजलार्द्रः स्याद्दोषश्चादीन वोमतः॥१६॥ योजनंमार्गधेनुः२स्यान्नल्वः किष्कुच्चतुःशतम्२॥ चोलकोवाणवारः२स्यात्कुर्पासस्त्वर्धचोलकः२॥ १७॥ नागोदरमुर स्त्राणं२ जंघात्राणंतुमंक्षणं२॥ स्यात्प्रासादोदेवकुलंनत्तुचैत्यं२वि नामुरवं॥१८॥ तृणपूलीतुचंचा२स्याद्यथार्थंतु यथातथं२॥आ घातनंवधस्थानं२ काराबंधनवेश्मनि२॥१९॥ स्कंधाग्निःस्थूलका ष्ठाग्नि२ स्तृणाग्निस्तुभवेत्समः२॥ इंगलस्तुकरीषाग्निः२ज्वराग्नि स्त्वाधिमन्यवः२॥२००॥ श्वशुरःस्वामिजनकः२साधुधीर्वरवत्स ला२॥ भगसार्थस्तथाविद्धो२हेलावुकोऽश्वविक्रयी२॥२०१॥ गृह वित्तोगृहपति२स्तुंबीपुष्पंलतांबुजं२॥लोहिकारवरसोनिःस्या-न्निलिंपस्त्रिदशः२ स्मृतः॥२॥ गंडूपदीभूलता२स्यान्मंडरीघुर्घु री२मता॥ स्वच्छस्त्वंगुलिसंदेशो२लंघनंचापतर्पणं२॥३॥ गजद-क्कामदाम्नातः२ भृंगारोगजमंडनं२॥ प्रतिमोरणरंकः२स्यात्वंटकः

---

नासिकामलस्य२(१४) दंतमलस्य२ जिह्वामलस्य२ स्वर्णकारस्य२ दरिद्रस्य२ (१५) विद्यायाः२ पक्षद्वारस्य२ आर्द्रवस्त्रस्य२ दोषस्य२ (१६) योजनस्य२ नल्वस्य२ कवचस्य२ कूर्पासस्य२ (१७) उरस्त्राणस्य२ जंघात्राणस्य२ देवप्रा सादस्य२ यज्ञस्थानभेदस्य२(१८) तृणपूल्याः२ यथार्थस्य२ वधस्थानस्य२बं धनवेश्मनः२(१९) काष्ठाग्नेः२ तृणाग्नेः२ करीषाग्नेः२ ज्वराग्नेः२ (२००) श्वशु रस्य२ श्वश्वाः२ कुटिलस्य२ अश्वविक्रयिणः२(२०१) गृहपतेः२ तुंबीपुष्प स्य२ लोहपुष्पस्य२ त्रिदशस्य२(२०२) भूलतायाः२ घुर्घुर्याः२ अंगुलीध्व नेः२ लंघनस्य२(३) गजढक्कायाः२ गजभृंगारस्य२ रणकातरस्य२(४)

कदरःसृणिः ३॥४॥ वीचीजललताभङ्गिः ३ फेणाग्रंबुद्बुदंबिंदुः॥ जंबालोजलकल्कः २ स्यादारणिःकुलहंडकः २॥५॥ विनाकृतंविरहितं २ गंडूषोमुखपूरणे २॥ काष्ठमल्लःशवयानं २ कषाय १ स्तूवरोरसः॥६॥ पर्वावधिःपरग्रंथिः २ पिंजोलापत्रकाहला॥ गोहल्लंछगलंगोविट् ३ परिघोद्वारकंटकः २॥७॥ कर्करंचूर्णखंडे २ स्यात्कर्कसारंकरंभकं २॥ स्पर्द्धायामपिसंहर्षः २ कठोरंकर्करं २ विदुः॥८॥ वंदीकवरकी २ माहुरासंदीलघुखट्विका २॥ घटराजः स्मृतःकुंभो २ गर्गरीकलशि २ र्मता॥९॥ विदुरजन्यमुत्पातं २ निर्घातेव्योममुद्गरः २॥ पर्यंतिकागुणभ्रंशो २ गागेष्टीकटशर्करा २॥१०॥ उल्कांकुलुक्कगुंजा २ स्यात्कुलकुक्कस्तालमर्दलः २॥ सूत्रकोणेडमरुकं २ सूत्रवीणाचलावुकी॥११॥ मेलानंदोमसिमणि २ र्लेखनीवर्णतूलिका २॥ धातूपलःकठिनिका २ मेलापत्रांजनंमसिः ३॥१२॥ तर्कुटीसूत्रलातर्कु ३ र्झल्लोलस्तर्कुलासकः २॥ वर्त्तुलातर्कुपादीस्या २ त्पंजिकातूलनालिका २॥१३॥ निर्वेष्टनंनाडिचीरंदग्धेष्टकास्याज्झामकम्॥ दोलाप्रेंखापुमान्प्रेंखो ३ वारासनंवास्सदनं॥१४॥ पिष्टवर्त्तिस्त

---

अंकुशस्य ३ (४) तरंगस्य ३ फेनाग्रस्य २ जलकल्कस्य २ आरणेः २ (५) विरहितस्य २ गंडूषस्य २ शवयानस्य २ कषायस्य २ (६) अंगुलीपर्वणः २ पिंजोलायाः २ गोमयस्य ३ द्वारलगुडस्य २ (७) कर्करस्य २ दधिसक्तोः २ स्पर्धायाः २ कठोरस्य २ (८) कवर्याः २ लघुखट्वायाः २ कुंभस्य २ कलश्याः २ (९) उत्पातस्य २ निर्घातस्य २ गुणभ्रंशस्य २ कटशर्करायाः २ (१०) उल्काग्नेः २ करताल्याः २ डमरुकस्य २ सूत्रवीणायाः २ (११) मसिमणेः २ कलमस्य २ धातूपलस्य २ मसेः ३ (१२) तर्कुट्याः ३ तर्कुलासकस्य २ तर्कुपीठ्याः २ तूलनालिकायाः २ (१३) निर्वेष्टनस्य २ दग्धेष्टकायाः २ दोलायाः ३ जलस्थापितपंचस्य २ (१४)

चमसः२श्चित्रापूपश्चरुव्रणः२॥ म्लेच्छितंपरभाषायां२लुंटिकान्याय सारिणी २॥१५॥ शूकापूट्टस्तृणमणि२श्च्छात्रगंडःपदाद्यवित्२॥ कोशकारःकाष्ठतंतु२र्घुणःस्यात्काष्ठलेखकः२॥१६॥ विषशृंगीभंगरोलो२वरोलस्तृणषट्पदः२॥ तुटमोरंध्रबभ्रुःस्याद्दीनालिंगालिका२स्मृता॥१७॥ विदारुःक्रकचपादो२द्रुणाश्चालिश्च वृश्चिकः३॥ पद्माक्षंपद्मबीजं२चकर्णिकाबीजमातृका२॥१८॥ रंगमातापवेल्लाक्षा२धीलटिर्दुहिता२मता॥ चाटलोलश्चटुक्कोलो२जेंगटोदोहदः२स्मृतः॥१९॥ धौतांजलीधौतबली२वज्रकंदुग्धपावनं२॥ चित्रोक्तिःपुष्पशकटी२चासेचनमतृप्तिकृत्२॥२०॥ कालरात्रिर्भीमरथी२अस्वाध्यायोनिराकृतिः२॥ ब्रह्मवादःश्रुतादानं२विश्वकद्रुरखेटिकः२॥२१॥ हिंसालुकः१खादुकःश्चायोगितो१लर्क२इष्यते॥ द्रगडस्तूर्यगंडःस्यादादर्शोमुकुरः२स्मृतः॥२२॥ राहूत्सृष्टोरसोनः२स्याद्दुंगरीकोलनासिका२॥ मयटःस्तृणहर्म्यं२स्यात्कुत्रंगोमंचमंडपः२॥२३॥ स्नवद्रंगःपणग्रंथि२श्चिनिकाकटिशृंखला२॥ विशारदःप्रसिद्धः२स्यात्श्रीर्लक्ष्मीरिंदिरा३मता॥२४॥ ॥

॥ इतिपादावधिः॥

---

यज्ञपात्रविशेषस्य२ चित्रपिष्टकस्य२ अपशब्दस्य२ लुंटिकायाः२ (२१५) तृणमणेः२ पदाद्यवेत्तुः२ कोशकृमेः२ घुणस्य२ (१६) विषशृंगिनः२ तृणषट्पदस्य२ रंध्रबभ्रोः२ दीनायाः२ (१७) क्रकचपादस्य२ वृश्चिकस्य३ पद्मबीजस्य२ पद्मकोशस्य२ (१८) लाक्षायाः२ दुहितुः२ क्रचंचलस्य२ गर्भिण्यभिलाषस्य२ (१९) धौतांजल्याः२ दुग्धपावनस्य२ क्षुद्रशकटस्य२ अतृप्तिकृतः२ (२०) कालरात्र्याः२ अस्वाध्यायस्य२ ब्रह्मवादस्य२ मृगयाकुशलभुनः२ (२१) हिंसालुकभुनः२ उन्मत्तभुनः२ सूर्यविशेषस्य२ आदर्शस्य२ (२२) लसुनस्य२ कोलनासिकायाः२ तृणयुक्तहर्म्यस्य२ शस्यरक्षार्थकुटीरस्य२ (२३) पणग्रंथेः२ कटिशृंखलायाः२ प्रसिद्धस्य२ लक्ष्म्याः२ (२२४)

शाकशालानकशब्दादर्धैःपादैरतः परंशब्दाः ॥ नानार्थाअपिशब्दे
र्गजशब्दात्प्रभृतिविज्ञेयाः ॥२२५॥ ॥

## ॥ अथनानार्थः ॥

क्षीरदारोगुडक्षोदेगुडेमधुनिचेष्यते ॥ कूपीदपानमिष्टंनिकेनि
पातेचवारिधौ ॥२६॥ रसालारसनायांस्यान्मथितेदधिपाणिना ॥ पां
चलोहेश्रुतिकटः प्रायश्चित्तेसरीसृपे ॥२७॥ विटोद्वौलवणोषिड्ग
मूषिकेखदिरेपिच ॥ वितंडाकरवीर्यांचदर्विवादप्रभेदयोः ॥२८॥
कारंडवेकरंडः स्यान्मधुकोषेदलाढके ॥ खटः श्लेष्मण्यंधकूपेप्रहा
रांतरटंकयोः ॥२९॥ पिच्छापूगच्छटाकोषेचोलिकाफणिलालयोः ॥
पिच्छलोस्फोटिकावात्यारामावातास्तुपांशवः ॥३०॥ धरांकुरोवा
युफलेनासीरात्रीकरेपिच ॥ कोट्टारोनागरेकूपेपुष्करिण्यांचपा
टके ॥३१॥ नागांजनानागयष्टिःकरिस्कंदरिकाक्वचित् ॥ पूलंटुः
पूतिकादेचगंधकीटेचदृश्यते ॥३२॥ कटुकायांकंवटकेकथिताशकु
लादनी ॥ क्रौंचादनस्तुपेंचुल्यांचिंचोदकमृणालयोः ॥३३॥ सं
तानिकाक्षीरसरेतथामर्कटजालके ॥ खड्गधेनुफलेफेनेपरांजस्तैल
यंत्रके ॥३४॥ भालांकोलोहितेवृक्षःकरपत्रेचकच्छपे ॥ संकरोग्निच
टत्कारेसंमार्जन्यपसारिते ॥३५॥ गोधाकलंबिकादंतिवधूश्चवक
टंभरा ॥ पंकारःशैवलेसेतौसोपानेजलकुब्जके ॥३६॥ दृष्टशृंगी
तिशब्दोयंदंशभीरौपृथूदरे ॥ मेघपुष्पंतुनादेयपिंडाभ्रेसलिलेवि
दुः ॥३७॥ पित्तज्वरेकुलालस्यपवनेकूटपालकः ॥ स्तनवृंतेपिपप्प
लकंतथासीवनसूत्रके ॥३८॥ पाटलिकोन्यमर्मज्ञेछात्रेस्यात्काल
देशिनि ॥ जिह्वापोवृषदंशोचस्यादिद्वमहकर्मणि ॥३९॥ लाभेकामगु
णेरूपेआमिषाख्यातुभोजने ॥ छायापथेचदूर्वायांहरितालीध्व
निर्मितिः ॥४०॥ मालुधानश्चित्रसर्पेमहापद्मोपिदृश्यते ॥ उन्मत्तेक्ष
पणेनर्थकरेकार्यपुटध्वनिः ॥४१॥ सांघाटिकांविदुर्युग्मंकुट्टन्यां

जलकंटके॥ शराहतेवसर्पेचप्रवल्लाकंमचक्षते॥४२॥ चांद्रिकायाम
ञ्जधूलौरक्तांगेहरिचंदनं॥ स्मारल्लेचहरिद्रायांलाक्षायांवरध
र्णिनी॥४३॥ कृकलासेचित्रकोलेतृणगोधांध्वनिंविदुः॥ डिंबं
भयेचकललेफुफ्फुसेचप्रचक्षते॥४४॥ धुंधुमारःशक्रगोपेगृहधूमे
गृहालिके॥ निस्कपर्वाहिलमोचीगुडूचीमधुयष्टिषु॥४५॥ जल
बिल्वःकर्कटकेपंचांगेजलवल्कले॥ चोलकीनागरंगेचकरीरेवि
क्षुपर्वणि॥४६॥ कुलालचक्रेवाहनेदंडारःशरयंत्रके॥ दिग्जयेवर
यात्रायांदंडयात्रांविदुर्बुधाः॥४७॥ उष्ट्रेदासीसुतेचैवदासेरकउ
निस्मृतः॥ जलगुल्मोजलावर्तेकच्छपेजलचत्वरे॥४८॥ काहला
वेणुवीणादिध्वनिनानाध्वनिंविदुः॥ दघोंघेका रंडिकायांचजाह
कश्वनिरिष्यते॥४९॥ विद्यादुल्कलिकांशब्दमुत्कंठावीचिवाच
कं॥ दृष्टिविषेसूचकेचद्विजिव्हःपरिकीर्तितः॥५०॥ मदमत्ताविद
ग्धस्त्रीनर्तकीपुत्रवाणिनी॥ रोमावलीमेघमालाकरटीषुचकालि
का॥५१॥ मंजुलोमधुरेकुंजेजलरंकेजलांचले॥ अनुकंप्यस्तरसी
स्यात्तपस्वीचधृतव्रतः॥२५२॥ ॥ इतिनानार्थार्ध-
श्लोकावलिः॥ ॥ शालावृकोकपिश्वानौनिष्ठुरःक
ठिनेऽभ्रपे॥ छर्दनोलंबुषेनिंबेव्युषंकस्तेतथोषिने॥५३॥ इक्षोकरी
रेकोषांगेव्रणचिन्हेघुणेकिणः॥ नर्मठंचंचुकेपिंगेछेकःषडंघ्रिवक्र
योः॥५४॥ धाराटश्चातकेवाहेलंजःस्यात्संगुकच्छयोः॥ नर्मटः
खर्परेसूर्येगोकीलोमुशलेहले॥५५॥ भंडिरीधारुकूष्मांडोफा
णिर्गुडकलंबयोः॥ तंडकःखंजनेफेनेलद्वाशिन्यांस्वर्गानरे॥५६॥
गजेपिनागमातंगौ विशेषास्तिलकेपिच॥ निष्पारःसूर्पवातेपि
सूत्रकंठोद्विजेपिच॥५७॥ विदुष्यपिस्मृतोवेधाःपुरंदेहेपिदृश्यते
॥ स्वरेपिकटआख्यानःशरत्संवत्सरेपिच॥५८॥ लाक्षापिजतुकाप्रो
क्ताउपाचार्येपिहिंडिकः॥ नौसेचनेपिधारुंडःपादालिंदेपिपंकिलः

॥५९॥ कन्यांगीष्यानिपुत्रेपिकुंदेपिभ्रमरोवटी॥ भांडंभूषणमात्रे पिरुधिरंकुंकुमेपिच॥६०॥ गोमेदकेपिगंगोलः कटाह्वोनिरयेपि च॥मरीचंपिभवेत्कृष्णःश्रृनांगेगुधिकाभवेत्॥६१॥शस्त्राम पिखड्गधेनु निस्त्रिंशोकरुणेपिच॥स्कंधावारेपिकटको- विंदुस्तविदुरेपिच॥६२॥जलसूचिर्जलौकापिवेश्यायामपि- पिंगला॥अहिरप्युदरावर्तेविशाखापिखनित्रिकः॥६३॥भ्र मरःकामुकेपिस्यादंगीकारेपिचाथकिं॥महालयेपितीर्थःस्यात् भोजनेपितथाह्निकं॥६४॥बलिश्चामरदंडेपिपादपीठेपिपादपः गोदंतोहरितालेपियानीरश्चित्रकेपिच॥६५॥आधारेप्याश्रयः प्रोक्तोगजसंघेप्यथग्रहः॥कथितामाजटापांचमार्गणेपिमृगः क्वचित्॥६६॥मूषिकापिभवेद्धीना जटाटंकोहरेपिच॥अश्म मकृतेपिफांटंमृद्भांडेप्युष्ट्रिकाभवेत्॥६७॥अंगसादेपिसदनं वनदावेपिझिंझिमः॥दंतमांसेपिवेलास्याच्छुल्कंनारीधनेपिच ॥६८॥निंबेपिहिंगुनिर्यासोमेलानंदेपिशार्दूलं॥लेखन्यांकूर्णि कापिस्यात्कटिन्यामपिवर्णिका॥६९॥पटलेपिकासमर्दोदिष्टं देवेपिकीर्तितं॥दाडिमेपिचहिंडीरंवंशोवेणौकुलेपिच॥२७०॥

॥ ॥ ॥ इतिनानार्थः॥ ॥ ॥

कात्यादीनामनंतत्वाच्छब्दादीनांविशेषतः॥कःकदाकेनकिंदृष्ट मितिकोवेदितुंक्षमः॥७१॥अतःशब्दःक्वदृष्टोयमर्थतश्चापिकीदृ शः॥इतिकाव्यमलीकंस्यान्मात्सर्यमलिनात्मनां॥७२॥शब्दार्णव उत्पलिनीसंसारावर्तइत्यपि॥कोषावाचस्पतिव्याडिविक्रमादित्य निर्मिताः॥७३॥आदायसारमेतेषामन्येषांचविशेषतः॥हारावली निर्मितेयंमयाद्वादशवत्सरैः॥७४॥उपास्यसर्वज्ञमनंतमीशंभूत्वा तिथिःश्रीधृतिसिंहभावां॥हारावलीद्वादशमाससमानैर्विनिर्मितेयं पुरुषोत्तमेन॥७५॥नानाकाव्यपुराणनाटककथाकोषेतिहासस्मृ

तिज्योंतिःशास्त्रगजाश्वमानवभिषक्कोषान्प्रयत्नाद्दियं ॥ दृष्ट्वान्या
निचशाब्दिकैःसहकृताहारावलीयत्नतःकर्तव्योऽत्रनसंशयःक्र
मनसश्शब्दार्थलिंगेष्वपि ॥ ७६ ॥ क्रधियाजनमेजयेनयत्नात्
धृतिसिंहेनसमंनिरूपितेयं ॥ विदितोबहुदृश्वभिःकवींद्रैर्वि-
कोषानुमतःश्रमोमदीयः ॥ ७७ ॥ हित्वामहाशाब्दिकताभिमानं-
मात्सर्यमन्यत्रमुहुर्निधाय ॥ हारावलींयःप्रकरोतिकंठेविदग्धगो
ष्ठीषुपरंसभाति ॥ ७८ ॥ ॥ २७८ ॥

इतिश्रीमहामहोपाध्यायपुरुषोत्तमदेवप्रणीताहारावलीपर्यव
सिता ॥ ॥






मुंबईंतज्ञानदर्पणछापखान्यांतछापिलें शके १७७६
आनंदनामसंवत्सरेवै० व० १०